इस ग्रन्थके प्रकाशक महानुभावोंके स्वर्गीय पिताश्री

**श्री मेघजीभाई दामजीभाई — स्मृतिग्रन्थ**

सर्वतन्त्रस्वतन्त्र-परमहंसपरिव्राजक "पण्डितराज"

स्वामिश्रीभगवदाचार्यमहाराजविरचितः

# पारिजातसौरभम्

(श्रीमहात्मगांधिचरितम्)

(भारतपारिजातस्य तृतीयो भागः)



# पारिजातसौरभकी विषयसूची

**प्रथम सर्ग** — कारागृहमें निवास करते हुए महात्माजीके पास भारतके अंग्रेजी सर्कारने एक भाषण भेजा। उसमें सन् १९४२ ई० के भारतमें हुए उपद्रवोंका दोष महात्माजीपर और कांग्रेसपर आरोपित हुआ था। उसीका उत्तर।

**द्वितीय सर्ग** — उपर्युक्त दोषारोपणका ही उत्तर।

**तृतीय सर्ग** — जगदम्बा श्रीकस्तूरबाका परधाम-प्रयाण।

**चतुर्थ सर्ग** — श्री महात्माजीकी कारागृहसे मुक्ति। स्टेफर्ड क्रिप्ससे दिल्लीमें भेंट। नवाखलीमें मुसलमानोंके उपद्रवको शान्त करनेके लिये प्रयाण। कलकत्तामें विलम्ब।

**पञ्चम सर्ग** — कलकत्तासे चलकर रामपुर (बंगाल) में पहुंचना। वहां भाषण।

**षष्ठ सर्ग** — वहां हिन्दुओंको उपदेश। मुहम्मद साहेबके शब्दों-द्वारा मुसलमानोंको उपदेश। दालतापुरमें वहांके एक ज़मीनदारद्वारा महात्माजीको भूमि-समर्पण।

**सप्तम सर्ग** — कुमारी श्रीमनुगांधीजीको गीताका पढ़ाना।

**अष्टम सर्ग** — हिन्दू-मुसलमानोंको उपदेश। हिन्दुओंकी दशाका वर्णन जिसे महात्माजीने यात्राकालमें देखा था।

**नवम सर्ग** — श्री० कुमारी मनुगांधीको आगे करके सब जनताको उपदेश। आमकी गांवमें महात्माजीका मूर्छित होना। रामनाममाहात्म्य। स्वतन्त्रतादिवसोत्सवके अवसरपर त्रिरंगे झण्डेका उडाना अस्वीकृत।

**दशम सर्ग** — डा० महमूदसैयदके पत्रसे, महात्माजीका, विहारमें क्रुद्ध बने हुए हिन्दुओंकी शान्तिकेलिये, विहारमें आगमन। पटनेमें भाषण।

**एकादश सर्ग** — पटनेमें पुनः भाषण ।

**द्वादश सर्ग** — पटनेमें पुनः भाषण ।

**त्रयोदश सर्ग** — विहारमें शान्ति स्थापित करके महात्माजीका वाइसरायके आमन्त्रणसे दिल्ली आगमन । वहां एशियाके सब देशोंसे आये हुए लोगोंकी सभामें महात्माजीका भाषण । ईश्वरनिरूपण । झोपड़ियोंमें ही भारतका वास्तविक दर्शन हो सकता है इसके समर्थनकेलिये एक इतिहास । भाषणसमाप्ति ।

**चतुर्दश सर्ग** — दिल्लीमें हिन्दुओंद्वारा मुसलमानोंपर आक्रमण होता हुआ देखकर महात्माजीको खेद । उपवासकी घोषणा । उपवासके कारणका निरूपण । निश्चल उपवासका आरम्भ ।

**पञ्चदश सर्ग** — उपवासके समयका भाषण । श्री बाबू राजेन्द्र-प्रसादजीका हिन्दुनेताओं, मुस्लिमनेताओंके साथ सभामें आगमन । परस्पर न लड़नेके प्रतिज्ञापत्रका वाचन । उपवाससमाप्ति ।

**षोडश सर्ग** — बन्नूसे आये हुए हिन्दुओंकी दुःखगाथाका श्रवण । हिन्दुओंका क्रोध करना । उत्तर । महात्माजीपर गोली-प्रहार ।

**सप्तदश सर्ग** — पण्डित जवाहरलालजीका विलाप ।

**अष्टादश सर्ग** — पुनः पण्डितजीका भाषण ।

**एकोनविंश सर्ग** — श्री महात्माजीके परधाम प्रयाणकालमें श्रीमान् लार्ड माउन्ट बेटन, श्रीमती माउन्ट बेटन, छठें जार्ज, सर्दार वल्लभभाई, श्रीकिशोरलाल मशरूवाला, श्रीमीरा बहिन, मौलाना श्री-अबुलकलाम आज़ाद, श्रीपुरुषोत्तमदास टंडन, श्रीगोविन्द वल्लभ पन्त, श्रीसम्पूर्णानन्द, डाक्टर भगवान्दासजी, आचार्य कृपलानी, आचार्य नरेन्द्रदेव, भारत सर्कार आदिकी शोक-समवेदना और सन्देश ।

**विंश सर्ग** — परधामस्थ श्रीमहात्माजीके देहकी उत्तरक्रिया । भस्मका भारतमें और अन्य प्रायः सभी देशोंमें विसर्जन ।

# पारिजातसौरभस्य विषयनिदर्शनम्

**प्रथमे सर्गे** — कारागारमधिवसतां महात्मनां गांधिमहोदयानां सन्निधे द्वाचत्वारिंशदधिकैकोनविंशे यीशवीयसंवत्सरे जातानामुपद्रवाणां भारते महात्मा राष्ट्रियमहासभा च कारणमिति विवरीतुं तदानीन्तनभारतशासनेन प्रहितमेकं भाषणम् । तस्योत्तरं च ।

**द्वितीयस्मिन्सर्गे** — उपर्युक्तदोषारोपणपरिहारः ।

**तृतीयस्मिन्सर्गे** — श्रीसत्याः कस्तूराम्बायाः परधामप्रयाणम्

**चतुर्थे सर्गे** — श्रीमहात्मनां कारागारान्मुक्तिः । दिल्ल्यां स्टेफड क्रिप्सेन सहालापः । बङ्गेषु नवखल्यां मुसलमानैः कृतस्योपद्रवस्य हिन्दुनिपीडनस्य च निवारणाय नवखलीं गन्तुं प्रयाणम् । कलिकातायां विलम्बः ।

**पञ्चमे सर्गे** — कलिकातातो रामपुरं तत्र भाषणं च ।

**षष्ठे सर्गे** — तत्र हिन्दुभ्य उपदेशः । मुहम्मदमहोदयस्य शब्दैर्मुसलमानेभ्य उपदेशः । दालतापुरे महात्मभ्यो भूमिसमर्पणम् ।

**सप्तमे सर्गे** — कुमार्यै गांधिमनवे गीताप्रवचनम् ।

**अष्टमे सर्गे** — हिन्दुमुसलमानेभ्यः सर्वेभ्य उपदेशः । नवखलीमटता महात्मना दृष्टाया हिन्दुदशाया उपवर्णनम् ।

**नवमे सर्गे** — कुमारीं मनुगांधिं पुरस्कृत्य सर्वेभ्य उपदेशः आमकीग्रामे महात्मनो मूर्छा । रामनाममाहात्म्यम् । स्वतन्त्रतादिवसोत्सवावसरे त्रिरङ्गराष्ट्रपताकोत्तोलनस्यास्वीकारः ।

**दशमे सर्गे** — विहारेषु हिन्दूनां मुसलमानेभ्यः क्रोधः । डाक्टरमहमूदसैयदस्य पत्रमधिगत्य महात्मनां पाटलिपुत्रगमनम् । पाटलिपुत्रे भाषणम् ।

**एकादशे सर्गे** — पाटलिपुत्रे पुनर्भाषणम् ॥

**द्वादशे सर्गे** — पुनस्तत्रैव भाषणम् ।

**त्रयोदशे सर्गे** — विहारेषु शान्तिं संस्थाप्य नवागतराजप्रतिनिधेः (वाइसरायस्य) निमन्त्रणेन दिल्लीगमनम् । एशियायि-सभामध्ये महात्मनो भाषणम् । ईश्वरनिरूपणम् । भारतीयप्रजानां ग्रामोटजेष्वेव भारतस्य वास्तविकं दर्शनं भवितुमर्हतीति तत्रैक इतिहासः । भाषणसमाप्तिः ।

**चतुर्दशे सर्गे** — दिल्ल्यां मुसलमानेषु हिन्दूनामाक्रमणेन महात्मनां खेदः । उपवासस्य घोषणा । उपवासकारणनिरूपणम् । निश्चलोपवासारम्भश्च ।

**पञ्चदशे सर्गे** — उपवासकालिकं भाषणम् । श्रीमाननीयराजेन्द्रप्रसादस्य हिन्दूमुसलमानसिखादिनेतृभिः सह सभायामागमनम् ।

**षोडशे सर्गे** — बन्नूप्रदेशादागतानां हिन्दूनां दुःखकथाश्रवणम् । हिन्दूनां महात्मभ्यः क्रोधः । उत्तरम् । महात्मदेहे गोलिकाप्रहारः ।

**सप्तदशे सर्गे** — पण्डितजवाहिरलालकृतो विलापः

**अष्टादशे सर्गे** — पुनस्तस्यैव भाषणम् ।

**एकोनविंशे सर्गे** — ब्रह्मभावं गतेषु महात्मसु, लार्ड माउन्ट बेटन, श्रीमती लार्ड माउन्ट बेटन, षष्ठ जार्ज, सर्दार वल्लभभाई पटेल, श्रीकिशोरलाल मशरूवाला, श्रीमीरा, मौलाना अबुलकलाम आज़ाद, श्रीपुरुषोत्तमदास टण्डन, श्रीगोविन्दवल्लभ पन्त, श्रीसम्पूर्णानन्द, डाक्टर भगवान्दास, आचार्य जे० बी० कृपलानी, आचार्य नरेन्द्रदेव, भारत सर्कार प्रभृतीनां शोकसमवेदना संदेशश्च ।

**विंशे सर्गे** — परधामस्थस्य महात्मनां देहोत्तरक्रिया । भारत देशेषु चान्येषु तद्देहभस्मविसर्जनम् ।

# पारिजातसौरभीयच्छन्दसां नामानि

| सर्ग | | श्लोकसंख्या |
|---|---|---|
| १ | वंशस्थविलम् | ८२ |
| | मृगेन्द्रमुखम् | १ |
| २ | वंशस्थविलम् | १०३ |
| | मालिनी | १ |
| ३ | अनुष्टुप् | ७५ |
| | शिखरिणी | १ |
| ४ | वंशस्थविलम् | ४१ |
| | मन्दाक्रान्ता | ३ |
| | अनुष्टुप् | १३ |
| | वसन्ततिलका | १ |
| ५ | द्रुतविलम्बितम् | ५५ |
| | शालिनी | ३ |
| ६ | रथोद्धता | ८० |
| | वंशपत्रपतितम् | १ |
| | सरसी | १ |
| ७ | शालिनी | ३८ |
| | वसन्ततिलका | १ |
| ८ | उपजातिः | ५२ |
| | शालिनी | २ |
| ९ | उपजातिः | ५४ |
| | वसन्ततिलका | १ |
| | इन्द्रवज्रा | १ |

| सर्ग | | श्लोकसंख्या |
|---|---|---|
| १० | वसन्ततिलका | ४६ |
| | शिखरिणी | १ |
| ११ | इन्द्रवज्रा | ६७ |
| | मन्दाकिनी | १ |
| १२ | वंशस्थविलम् | ३० |
| | मालिनी | १ |
| १३ | इन्द्रवज्रा | ५६ |
| | मालिनी | ४ |
| १४ | अनुष्टुप् | १९९ |
| | रथोद्धता | १ |
| | वसन्ततिलका | १ |
| १५ | सुन्दरी | ५५ |
| | इन्द्रवंशोपेन्द्रवंश-गोपजात्यादिः | १७ |
| | वसन्ततिलका | १ |
| १६ | इन्द्रवंशोपेन्द्र-वंशगोपजातिः | ३७ |
| | शिखरिणी | २ |
| | शार्दूलविक्रीडितम् | १ |
| १७ | सुन्दरी | ८३ |
| | प्रहर्षिणी | २ |

| | | |
|---|---|---|
| | शार्दूलविक्री-<br>डितम् | १ |
| १८ | अनुष्टुप् | ५७ |
| | मालिनी | १ |
| १९ | वंशस्थविलम् | ४ |
| | अनुष्टुप् | ६ |
| | उपजातिः | ३ |
| | मञ्जुभाषिणी | ७ |
| | वसन्ततिलका | १४ |
| | अनुष्टुप् | १८ |
| | शार्दूलविक्री-<br>डितम् | ३ |
| | उद्गता | ४ |
| | शालिनी | १० |
| | वसन्ततिलका | १ |
| | शालिनी | ३ |
| | स्वागता | ८ |
| | अनुष्टुप् | १ |
| | वसन्ततिलका | ४ |
| | अनुष्टुप् | १ |
| | वसन्ततिलका | ५ |
| | मञ्जुभाषिणी | १२ |
| | वसन्ततिलका | ५ |
| | प्रहर्षिणी | ४ |
| २० | अनुष्टुप् | १६८ |
| | लीलाखेलः | १ |
| | अनुष्टुप् | ८ |
| | शार्दूलविक्री-<br>डितम् | १ |

संकलिता संख्या १५५५

# पारिजातसौरभस्य

## शुद्धाशुद्धपत्रम्

| अशुद्धः पाठः | शुद्धः पाठः | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| समजित: | समर्जित: | २ | २४ |
| एतुं | हेतुं | ७ | ४ |
| विधोष्यंत | विधोष्यंत | १७ | १७ |
| महत्त्रपा... | महत्त्रपा... | २२ | १० |
| तया | तदा | ,, | २२ |
| ...यपि | ...यदि | ३६ | ३ |
| नह रहीं | नहीं रह | ४३ | १ |
| ...लात्त्वमभ्रू | ...लादभ्रू | ,, | ३ |
| ...न्तिमेकाले | ...न्तिमे काले | ४३ | १० |
| अन्तन्त: | अन्ततः | ५० | ३ |
| ...पीतितु | ...पीति तु | ५३ | १८ |
| तिथौ स्वसा | तिथावसौ | ५४ | २२ |
| ...चार्ययत्त | ...चार्य यत्त... | ७० | ३ |
| ...खिलेभ्य | ...खिलेभ्य | ८० | २१ |
| ...मभिवष्ठु | ...मभिवष्ठु | ८१ | १६ |
| ...वखिन्न सुस्लि... | ...वखिलमुस्लि... | ८५ | १३ |
| ...बुधाः | ...बुधा | ,, | १८ |
| ...खिलान... | ...खिलाम... | ८६ | १२ |
| नावाखल्यां | नोवाखल्यां | ९३ | ३ |
| ताव ज्ञपूर्नि... | तावद्यज्ञपूर्ति... | ०५ | १७ |
| प्राप्तः | सम्प्राप्तः | ९६ | २१ |

| | | | |
|---|---|---|---|
| ...शक्ति: | ...शक्ति | ९९ | १ |
| ...त्परीक्षा फला... | ...त्परीक्षाफला... | ,, | १७ |
| कृताथिना... | कृतार्थिता... | १०० | १८ |
| क्रय: | क्रम: | ११४ | ४ |
| कालभोवत्स | कालोभवत्स | १२० | २ |
| ...विचलो | ...विचला | १३८ | २१ |
| ...चित्त: | ...चित्तैः | १४० | ६ |
| वातन्मुस्लिम... | वा तन्मुस्लिम्... | ,, | १६ |
| महात्म्य... | माहात्म्य... | १६८ | २ |
| ...द्विश्चित्त | ...द्वश्चित्त | ,, | ११ |
| शान्तिनहीं है, | शान्ति वस्तुतः शान्ति नहीं है, | १७८ | ५ |
| सत्कोड... | मत्कोड... | १९० | ३ |
| नति... | नर्ति... | १९४ | १० |
| तित्यक्ष्यन्ति | तित्यक्षन्ति | १९६ | ५ |
| ...न्वसुसूर्षि... | ...न्वसिसृर्षि... | १९८ | १८ |
| मृदुक्ता... | मदुक्ता... | २०१ | ८ |
| ...षार्था | ...षार्थो | २०३ | १९ |
| ...नैषा | ...नैषणा | २०६ | ३ |
| कालभविष्यतित्रपा | कात्र भविष्यति त्रपा | २०७ | १६ |
| ...व्रतिमूर्ध... | ...व्रतिमूर्ध्न... | ,, | २१ |
| मुहम्मदीयान् | मुहम्मदीयकान् | २१६ | १३ |
| ...विक्रय | ...विक्रिये | २२४ | ११ |
| तत स्युर्नि... | ततः स्युर्नि... | २२५ | २५ |
| ...नामस्थिता... | नाम चेत्स्थिता... | २२६ | ११ |
| ...थवस्या | ...थवास्या | ,, | २१ |
| ...घूषमे... | ...घुषदे | २३९ | ६ |
| देवप्रभ... | देवप्रख्य... | २४४ | १८ |

| | | | |
|---|---|---|---|
| ...त्त्रा तवान्सनः | ...त्त्रातवान्स नः | २४७ | ८ |
| त्यक्तुंका | त्यक्तुं का | २५२ | २ |
| यूथं | यूयं | ,, | १३ |
| प्रयस्य | प्रयस्य | २५८ | २ |
| द्वावेवा... | उभावेवा... | २६४ | ५ |
| त्तथे... | तथे... | ,, | ,, |
| ...वचः सुधा | ...वचःसुधा | २६७ | ४ |
| सर्वेंअना... | सर्वे ह्यना... | २७० | ६ |
| ...द्रष्ट्रन् | ...द्रष्टॄन् | २७१ | १६ |
| स महा | स हि महा | ,, | २२ |
| ...वचः प्रबो... | ...वचःप्रबो... | २७९ | १ |
| निनीवति | निनीषति | ,, | ९ |
| बल्लभाश्च | वल्लभा | २८३ | ७ |
| गांधिर्देव... | गांधिः श्रीदेव... | २८६ | १० |
| ...रूने पञ्च... | ...रूने स पञ्च... | २८९ | ४ |
| तस्यया नस्य | तस्य यानस्य | २९२ | ८ |
| दूर दूर... | दूराद्दूर... | २९३ | १५ |
| ...तवत्त्मन... | ...तत्त्वमन... | २९९ | १६ |
| वालायां तथोन्मत्त... | वालायां च तदुन्मत्त... | ३०१ | ११ |

शुद्धिपत्रानुसारेण पूर्वं श्लोकाः शोधनीयाः

पश्चाद्वाचनीया इति विद्वत्सु अभ्यर्थना ।

# पारिजातसौरभमें अन्य लोगोंके आये हुए नाम

र



ल



व



श



स

नमो नमो भारतभूजनन्यै

सर्वतन्त्रस्वतन्त्र-परमहंसपरिव्राजक-स्वामिश्रीमद्भगवदाचार्यपण्डितराज-
प्रणीतं स्वोपज्ञभारतराष्ट्रभाषाटीकासहितं

# पारिजातसौरभम्

## ( श्रीमहात्मगांधिचरितम् )

---

## प्रथमः सर्गः

अथ व्रतान्तेपि यतिक्षितीश्वरोध्युवास कारां सहयायिभिः सह।
स्वदेशदास्यापनयाय चिन्तितस्तपस्तपन्घोरतरं गलद्वयाः ॥ १ ॥

उपवासके पश्चात् भी श्रीमहात्माजी अपने साथियोंके साथ जेलमें ही निवास करते थे। भारतकी दासताको दूर करनेके लिये चिन्तापरायण वह वृद्धावस्थामें भी घोर तप कर रहे थे ॥ १ ॥

तदा समीपे यमिनः समागतं विरोधिभाषाप्रतिभाभिभाषितम्।
प्रकाशितं हिन्दमहीमहीभुजा स वाचयामास सुधीरमानसः ॥ २ ॥

उसी समय उनके पास एक भाषण आया जिसे विरोधियोंने किया था और भारत सर्कारने प्रकाशित किया था। धैर्यपूर्ण मनसे वह उसे पढ़ गये ॥ २ ॥

अगस्तमासेधिवसत्युरुक्रमे निबन्धशालां सकलप्रजाप्रिये।
महीपवृत्त्या क्षुभिताः समाः प्रजाः प्रकाशयामासुरनुद्धरां रुषम् ॥ ३ ॥

समस्त प्रजाके प्रिय प्रतापशाली श्रीमहात्माजी जब जेलमें अगस्त महीनेमें निवास करते थे तब अंग्रेज राजाके व्यवहारसे क्षुब्ध बनी हुई प्रजाने बहुत बड़ा रोष प्रकट किया ॥ ३ ॥

तदीय आसीत्सकलो भरो यतौ सिताङ्गराजेन समर्पितो बलात् ।
तदुत्तरं दातुमना मनस्विनां धुरन्धरो वाचमुवाच सद्वचाः ॥ ४ ॥

अंग्रेजी राज्यने उस सभी अशान्तिका भार हठात् महात्माजीके ऊपर आरोपित किया था। उसका उत्तर देनेकी इच्छासे परम उदात्त मनवाले सत्यवादी महात्माजी बोले ॥ ४ ॥

उपोषणे फेब्रुवरीत्रयोदशीतिथौ यदासं नितरां क्षयद्बलः ।
तदैतदाभाषणमाशु मुद्रितं कथं न जाने तव हेतुरस्ति कः ॥ ५ ॥

यहाँसे अब लंडन सभामें रिचर्ड टाटन्ने जो विरुद्ध भाषण किया था उसका उत्तर प्रारम्भ होता है।

१३ फर्वरीके उपवास में जब मैं अत्यन्त निर्बल था उसी समय इस भाषणको आपने शीघ्र क्यों छपवा दिया ? इसमें आपका क्या हेतु था, इसे कौन जाने ? ॥ ५ ॥

यथा तथा तेस्तु मनीषितं परं वितथ्यवाचां निचयः प्रदृश्यते ।
तवात्र तस्यैव रहस्यदारणे मम प्रयत्नोयमिति प्रतीयताम् ॥ ६ ॥

अच्छा, आपकी चाहे जो इच्छा रही हो, परन्तु उसमें जो असत्यका भण्डार भरा हुआ है उसीका रहस्योद्घाटन करनेकेलिए मेरा यह प्रयत्न समझें ॥ ६ ॥

महासभायाः समितिर्यदान्वशात्प्रजा विधातुं बत सामुदायिकम् ।
विरोधमेतत्क्षितिपालशासने तदैव जातोत्र महानुपद्रवः ॥ ७ ॥

कांग्रेसकी महासमितिने जब समस्त प्रजाको इस राज्यशासनके प्रति सामुदायिक विरोध करनेकी आज्ञा दी तभी यह महान् उपद्रव हुआ ॥ ७ ॥

ततोत्र गांधी च महासभाजना दधत्यबन्धोत्तरदायितां पराम् ।
तदेव विस्पष्टयितुं समर्जितः प्रमाणराशिः सततप्रयत्नजः ॥ ८ ॥

अतः इस विषय में गांधी और महासभाके लोग निशङ्क उत्तरदाता

हैं। इसी वस्तुको अत्यन्त स्पष्ट करनेके लिये बड़े प्रयत्नोंसे प्रमाण इकट्ठे किये गये हैं ॥ ८ ॥

**इदं वचस्ते नितरां निगूहते यदस्ति सत्यं तदतीव यत्नतः।**
**तथात्वमास्ते न कथंचन त्वया यथोक्तमस्माद्विपरीतमेव तत् ॥ ९ ॥**

७, ८ श्लोकोंमें किये गये आक्षेपका उत्तर। जो सच्ची बात है उसे बहुत यत्नके साथ आपका यह कथन छिपा रहा है। जैसा आपने कहा है वैसा तो कुछ भी नहीं। सब बात उसके विपरीत ही है ॥९॥

**यदा गृहीत्वा सकलान्महाजनान्न्यवेशयच्छासनमुद्रतासु तान्।**
**विचारमुत्सार्य निबन्धनालये तदा प्रजा कोपसमाकुलाभवत् ॥१०॥**

जब बिना विचारके ही इस निष्प्राण राज्यने सभी महापुरुषोंको जेलमें भर दिया तब प्रजा क्रोधसे व्याकुल हो गयी ॥ १० ॥

**विलिख्य पत्रं प्रतिहस्तके तव प्रमाणमायाचिषमात्मसंस्खले।**
**परं ततो नोत्तरमागतं तदा महाप्रमादादथवा मदादपि ॥११॥**

तब मैंने आपके प्रतिनिधि ( गवर्नर जनरल ) के पास पत्र लिखकर याच्ञा की कि मेरा अपराध बताया जाय। परन्तु उस समय वहाँसे प्रमादके कारण अथवा घमण्डके कारण मुझे कोई उत्तर नहीं मिला ॥११॥

**प्रमाणजातं निखिलं पुरस्कृतं भवेदिदं तत्समये मया कृतम्।**
**सदुत्तरं स्याच्छ्रुतमेव तावकैस्त्वयापि लोकैरपि वा क्रमान्ननु ॥१२॥**

यदि उस समय यह सब प्रमाण उपस्थित किये गये होते तो आप, आपके अनुयायी और समस्त संसार मेरे सत्य उत्तरको भी क्रमसे अवश्य ही सुने होते ॥ १२ ॥

**तदा भवेदेव विलम्ब ऊहिते मया व्रते वा यदि शासनेनं तत्।**
**श्रुतं भवेद्धीरतया विचारतस्ततो भवेन्नावसरो व्रतस्य सः ॥१३॥**

जिस व्रतका मैंने संकल्प किया था उस व्रतमें भी मैं अवश्य ही

विलम्ब कर देता यदि सर्कार धैर्य और विचारसे मेरी बात सुनती। और तब तो उपवासके लिये कोई कारण भी न होता ॥ १३ ॥

उपोषणैरेभिरयं गतासुतामवश्यमाश्लेक्ष्यति चिन्त्यजीवनः।
इति प्रसिद्धैर्भिषजां गणैः सदा निशम्य कालोयमलङ्कृतस्त्वया ॥१४॥

आपने बड़े बड़े वैद्योंसे यह सुन लिया था कि इन उपवासोंसे गांधी अवश्य ही मृत्यु पावेगा। इसीलिये आपने यह सब प्रकाशित करनेका इसे ही उत्तम समय समझा होगा ॥ १४ ॥

उपस्थितो नास्त्यभियोज्यमानवः कृतोतिदूरे पिहिताननोपि यः।
स पापभागित्यनुघोषणं तव त्रपाभरायैव विदां मते मतम् ॥१५॥

जिसके ऊपर अपराध लगाया जा रहा है वह उपस्थित नहीं है, उसे बहुत दूर रख दिया गया है, उसका मुँह भी बन्द कर दिया गया है और तब यह घोषणा करना कि "वह अपराधी है" विद्वानोंके मतसे यह आपके लिये शर्मकी बात है ॥ १५ ॥

पुनः पुनर्वाचितमेव ते वचस्तथा च लेखा निखिला ममाप्यमी।
निभालिताः सूक्ष्मदृशा मयाद्य ये त्वया गृहीताः स्ववचःप्रवृत्तये ॥१६॥

मैंने आपके वचनको—कथनको फिर-फिरसे पढ़ा है, तथा मेरे जिन लेखोंको लेकर आपने यह भाषण छपाया है उन्हें भी सूक्ष्मदृष्टिसे मैंने पढ़ा है ॥ १६ ॥

न विद्यते तत्र स शब्दसंग्रहो यमाश्रयंस्त्वं तव वाग्विडम्बनम्।
मुधारचय्यात्र विडम्बयन्हि मां स्वयं भवस्येव विडम्बितो बुधैः ॥१७॥

मेरे इन लेखोंमें वह शब्द ही नहीं है जिनका आश्रय लेकर आपने यह व्यर्थ भाषण करके मुझे अप्रतिष्ठित करते हुए विद्वानों की दृष्टिमें आप स्वयं अप्रतिष्ठित बन गये ॥ १७ ॥

निरीक्ष्य देशे परदेशिसैनिकानखिद्यतात्मा मम चेति ते वचः।
असत्यभूमिं स्पृशति व्यथाकरं यदस्ति सत्यं शृणु तद्वचो मम ॥१८॥

देशमें—भारतमें परदेशी लश्करको देखकर मेरा मन दुःखी बन गया, यह जो आपका कथन है वह सर्वथा असत्य अत एव दुःखकर है। जो कुछ मेरा सत्य वचन है, उसे आप सुनें ॥ १८ ॥

**यदीहते श्वेतमनो बिरक्षितुं भुवं ममेमां दययाद्य भारतम्।**
**कथं बहिः प्रेषयितुं समीहते सुशिक्षितान्भारतसैनिकानितः ॥१९॥**

यदि अंग्रेजी राज्यको आज दया उत्पन्न हुई है और वह इस भारत-भूमिकी रक्षा करना चाहता है तो क्या कारण है कि जो शिक्षित ( ट्रेन्ड ) भारतीय सैनिक हैं, उन्हें भारतसे बाहर भेजनेकी सर्कार इच्छा कर रही है ? ॥ १९ ॥

**कुतश्च तेषां परदेशदेशना कुतो विदेशात्पृतनासमागमः।**
**कुतो विघाताय सदा समुद्यमो महासभाया इति मे वचोरसः ॥२०॥**

भारतीय सैनिकोंको परदेशमें क्यों भेजा जा रहा है ? और परदेशसे सेना यहाँ क्यों आ रही है ? तथा कांग्रेसका नाश करनेकेलिये क्यों उद्यम सदा होता रहता है ? यही मेरे लेखका सार है ॥ २० ॥

**ततोधिकं वक्तुमिदं मनोद्य मे प्रकाममाकाङ्क्षति यन्न रक्ष्यते।**
**अयं सुदेशः परिपीड्यते परं स्वराज्यनिष्ठापगता भवेत्ततः ॥२१॥**

इससे भी अधिक आज यह कहनेको मन चाहता है कि यह सुन्दर देश बचाया नहीं जा रहा है बल्कि अधिक पीड़ित किया जा रहा है। जिससे कि यहाँसे स्वराज्यकी भावना ही चली जाय ॥ २१ ॥

**सिताङ्गजा भारतवर्षतो बहिः प्रयान्तु माङ्गल्यभृतः क्षणादिति।**
**यतः प्रभृत्येतदपीपदत्त्वयं प्रजासु गांधिर्भगवांस्ततः परम् ॥२२॥**
**अगस्तमासस्य तिथौ च सप्तमे महासभाया अधिवेशनावधि।**
**महासभायाः सकला महाजनाः सिताङ्गनिष्काशनकार्यतत्पराः ॥२३॥**

गांधीजी जबसे यह कहने लगे कि अंग्रेज भारतवर्षसे क्षणभरमें बाहर निकल जायँ तबसे ही महासभाके ७ अगस्तको होनेवाले अधिवेशन तक

कांग्रेसके सभी बड़े-बड़े लोग अंग्रेजोंको निकालनेके काममें लग गये थे ॥ २२–२३ ॥

इति त्वदीयं वचनं निरर्थकं स्वतन्त्रतायाः प्रतिपादनं दृढम् ।
नवीनकार्यं न मया प्रवर्तितं प्रवर्तते विंशतिवर्षतोधिकात् ॥२४॥

आपका यह कथन भी व्यर्थ है। स्वतन्त्रताका प्रतिपादन कोई नया कार्य नहीं है। बीस वर्षोंसे भी अधिक हो गये, मैं इस कार्यका प्रतिपादन करता आ रहा हूँ ॥ २४ ॥

खचक्षुरङ्केशमिताद्धि वत्सरात्प्रवर्तते साङ्घिकयत्न आदरात् ।
इमं स्वदेशं सितहस्ततः क्षणाद्विमोच्य कल्याणपथेस्य चालने ॥२५॥

निश्चय ही १९२० ई० से ही अंग्रेजोंके हाथसे इस स्वदेशको शीघ्र छुड़ाकर इसे कल्याणमार्गमें चलानेका सामूहिक प्रयत्न आदरपूर्वक चल रहा है ॥ २५ ॥

महासभातन्त्रगता महानरा इतोपि पूर्वं समुदायसत्कृतम् ।
प्रणेतुमेतत्प्रधनं ममाग्रतः पुनः पुनः प्रार्थिथपन्महाग्रहात् ॥२६॥

महासभाके बड़े बड़े नेता इससे भी पहलेसे सामुदायिक युद्ध चलानेकेलिये मेरे समक्ष बड़े आग्रहसे प्रार्थना कर रहे थे ॥ २६ ॥

परं मयैषां हृदये ज्वलन्महानलोपि यूनां सततं विचारतः ।
कथंचिदत्राङ्कुशितः स्वतन्त्रताग्रहोत्सुकानामिति वस्तुसत्कथा ॥२७॥

परन्तु स्वतन्त्रताप्राप्त करनेकेलिये उत्सुक इन जवानोंके हृदयमें जो आग सुलग रही है उसे विचारपूर्वक मैंने अङ्कुशमें रखा था। यह है इस सम्बन्धमें सच्ची बात ॥ २७ ॥

नवो न यत्नोयमितीह साधितं प्रयत्नकालः समकोचि यत्त्वया ।
न तत्समीचीनमकारि सर्वथा महासभाकीर्तिकलाविरोधिना ॥२८॥

मैंने यह सिद्ध किया है कि स्वराजप्राप्तिका यह कोई नया यत्न नहीं है। तो भी आपने इस लम्बे कालको छोटा बना दिया, यह किसी प्रकार

भी अच्छा नहीं किया गया। आपको तो महासभाकी कीर्तिका विरोध करना है, अतः चाहे जो कह सकते हैं ॥ २८ ॥

प्रवर्तते यः समरोधुना महान्प्रवर्तितो राष्ट्रियसंसदा स कम् ।
समेत्य एतुं गतिमानिति स्फुटं भवेदवश्यं ज्ञपनीय आशयः ॥२९॥

महासभा द्वारा चलाया हुआ यह महायुद्ध किस हेतुको लेकर चलाया गया है, इस आशयको स्पष्टरूपमें प्रकट करना चाहिये ॥ २९ ॥

इयं तवोक्तिर्भजतेर्थशून्यतां समस्तकार्य्यावलिरस्ति पुस्तके ।
समङ्किता हेतुगवेषणाकृते न विद्यते हेतुरतो न कोपि ते ॥३०॥

यह आपका कथन भी व्यर्थ ही है। क्योंकि यह युद्ध क्यों शुरू किया गया, यह सब महासभाके रजिष्टरमें लिखा हुआ है। अतः इसके कारणका शोध करनेकेलिये आपके पास कोई कारण नहीं है ॥३०॥

न संकुचत्येव कदापि मे मनः प्रवक्तुमेतद्यदनावृत्ताः समे ।
भवन्ति मे हेतव एतदर्थकं किमर्थमास्ते लुलितं मनस्तव ॥३१॥

यह पूछनेमें मेरा मन जरा भी संकुचित नहीं हो रहा है कि जब मेरे सभी कारण स्पष्ट हैं—छिपाये गये नहीं हैं, तो आपका मन इसकेलिये, इसकी शोधकेलिये चंचल क्यों है? ॥ ३१ ॥

अतः सितास्ते जिहतां स्वतन्त्रतासुखं समाश्लिष्यतु भारतं पुनः ।
अखण्डशक्तिः परमस्य सिद्धये ममास्तु कायस्य तदस्य संव्ययेत् ॥३२॥

अतः अंग्रेज यहाँसे चले जायँ। भारत पुनः स्वतन्त्रताके सुखका आस्वाद ले। इस महान् कार्यकी सिद्धिकेलिये मेरी अखण्ड शक्तिका व्यय हो ॥ ३२ ॥

व्रजन्तु देशादत ऐङ्गलैण्डिकाः ससाधना वा सबलाः समे च वा ।
न विद्यते मे वचनं तथाविधो ममाशयो नास्ति तथाविधोपि वा ॥३३॥

इस देशसे अंग्रेज अपनी सेना और अन्य साधनोंके साथ चले

जायँ। आपने जैसा कहा है वैसा न तो मेरा वचन है और न आशय है ॥ ३३ ॥

बहूनि मित्त्राणि सिताङ्गजा मम प्रियाणि सन्त्येव न तत्र चोदना।
समे व्रजेयुर्भरतक्षितेर्बहिः कदापि नेत्थं मनसाप्यचीकमे ॥३४॥

इसमें तो कुछ कहना ही नहीं है कि बहुतसे अंग्रेज मेरे प्रिय मित्र हैं। अतः सब अंग्रेज भारतभूमिसे बाहर चले जायँ, ऐसा तो मैंने कभी भी विचार नहीं किया है ॥ ३४ ॥

यथैकचन्द्रो गगने स्थितो नृणां मनांसि चक्षूंषि हरत्यनारतम्।
तथेदमैण्ड्रूजसखित्वमेव मे सितैः सखित्वाय मनोहरं परम् ॥३५॥

जिस प्रकारसे आकाशमें रहनेवाला एक ही चन्द्र मनुष्योंके मन और नेत्रका हरण सदा करता है वैसे ही श्री० ऐन्ड्रूजकी मित्रता ही अन्य अंग्रेजोंके साथ मित्रता करनेकेलिये मेरे मनको खींचती है ॥३५॥

प्रयान्तु सेना अपि यातु शासनं सिताङ्गजानामिति कामितं मम।
तदस्य वाक्यस्य दुरर्थता भवच्छिवं कदाचिन्न समर्धयेत्क्वचित् ॥३६॥

मेरी तो इतनी ही इच्छा है कि अंग्रेजी सेना भी जाय और राज्य भी जाय। अतः मेरे इस वाक्यका दुष्ट अर्थ करनेसे कभी और कहीं आपकी भलाई न होगी ॥ ३६ ॥

गते सिते शासन आत्मना चमूरदृश्यतां यास्यति सेति कल्पना।
परं सितानामनुगामि शासनं रिरक्षिषेत्तां न हि तत्र मे क्षतिः ॥३७॥

अंग्रेजी शासनके चले जानेपर सेना तो अपने आप ही चली जायगी, यह मेरी कल्पना है। परन्तु अंग्रेजी राज्यके बाद जो अनुगामी राज्य आवेगा, वह उस सेनाको रखनेकी इच्छा करे तो इसमें मेरी कोई हानि नहीं है ॥ ३७ ॥

लुई फिशर् सज्जन आगतो ममाश्रमे कदाचिच्च दिनानि सप्त सः।
मया सहास्थाय दिनेदिने क्रमात्किमप्यपृच्छत्तदिदं निशम्यताम् ॥३८॥

श्रीलुई फिशर नामक एक सज्जन एक समय मेरे आश्रममें आये थे और सात दिन तक मेरे साथ रहे थे। प्रतिदिन वह कुछ न कुछ मुझे पूछते थे, उसे सुनिये ॥ ३८ ॥

**त्वदाज्ञया चेत्सितदेहजा इतो व्रजेयुरायाद्यदि हिन्दशासनम्।**
**तदा दलानां कियतां भवेत्सुखादुपार्जिता तेन सहायता शिवा ॥३९॥**

यदि आपकी आज्ञाके अनुसार अंग्रेज यहाँसे चले जायँ और हिन्द शासन आवे तो उसे किन किन पक्षोंकी—दलोंकी सहायता मिलेगी? ॥३९॥

**ममैतदासीत्सरलं तदुत्तरं प्रयातु देशात्सितशासनं तदा।**
**उपद्रुतः स्याद्यदि देश एषको न चिन्तनीयं किमपीह तैः सितैः ॥४०॥**

उनके इस प्रश्नका मेरा सीधा उत्तर यह था कि अंग्रेजी राज्य तो यहाँसे चला जाय। उसके पश्चात् यदि देशमें उपद्रव हो जाय तो अंग्रेजोंको इसकी चिन्ता नहीं करनी चाहिये ॥ ४० ॥

**भवेद्व्यवस्थाविपरीततेह चेत्क्षणेन शान्तिः समुपागमिष्यति।**
**अनेक पक्षैर्मिलितैः परस्परं व्यवस्थया देश ऋधक् समर्ध्यते ॥४१॥**

यदि उस समय यहाँ कुछ अव्यवस्था भी हो जायगी तो थोड़े समयमें ही शान्ति हो जायगी। अनेक पक्ष परस्पर मिलकर व्यवस्थासे देशको भले प्रकार समृद्ध करेंगे ॥ ४१ ॥

**इह स्वराज्याश्रितशासनेन तद्विरोधिरोधाय वरूथिनीक्रमः।**
**भवेदनुज्ञात उतापमानितोन्वयुङ्क्त मामेवमसौ महामनाः ॥४२॥**

फिर उन्होंने पूछा कि जब यहाँ स्वराजशासन आवेगा तब अंग्रेजोंके विरोधियोंको रोकनेकेलिये सेनाका यहाँ आना स्वराज्यसर्कार स्वीकृत करेगी या नहीं? ॥ ४२ ॥

**यथा मया कल्पितमेव तादृशं प्रवर्तितं स्याद्यदि राष्ट्रशासनम्।**
**विरोधपक्षानपनेतुमागतैः स्वरक्षणार्थं समयः कृतो भवेत् ॥४३॥**

यदि मेरी कल्पनाके अनुसार ही राष्ट्रिय सर्कारकी स्थापना होगी

तो विरोधी पक्षको दूर करनेकेलिये आये हुए अंग्रेजोंके साथ अपनी रक्षाकेलिये सन्धि करनी ही पड़ेगी ॥ ४३ ॥

**सहायता का च कृता भवेत्तदा विरोधिपक्षैः सह युद्धकर्मणि ।**
**सितप्रजानामिति सोन्वयुङ्क्त मां पुनस्तदा प्रत्यवदं सदिच्छया ॥४४॥**

उन्होंने पुनः पूछा कि यदि अंग्रेजोंको शत्रुओंके साथ युद्ध करना पड़े तो हिन्दसर्कार अंग्रेजोंको युद्धमें क्या सहायता देगी ? इसके उत्तर में मैंने कहा— ॥ ४४ ॥

**प्रतिष्ठितं राष्ट्रियशासनं यदि स्वरूपतोस्त्येव मयानुमोदितम् ।**
**तदा तदेषां सितभूभुजां परं सहेत भूमाविह केवलास्तिताम् ॥४५॥**

जैसाकि मैं चाहता हूँ वैसा ही राष्ट्रशासन यदि यहाँ स्थापित हुआ तब तो इन अंग्रेज लोगोंको या मित्रराज्योंको केवल इस भूमिमें रहने देनेकी अनुमतिके सिवा अन्य कोई सहायता नहीं मिल सकती ॥ ४५ ॥

**निसर्गतः स्यात्पृतनाविसर्जनं गते सिते किन्तु यदि स्वकामतः ।**
**धनेन देहेन सहायतां ददन्न कोपि वार्यो भविता कुतोपि वा ॥४६॥**

अंग्रेजोंके जानेपर स्वाभाविक ही सेनाका विसर्जन हो जायगा । उस समय यदि कोई धन और शरीरसे उसे सहायता देगा तो कभी कोई मना न करेगा ॥ ४६ ॥

**परं स्वराज्यागमनात्परं न मां कुतोपि हेतोर्गणयेदियं प्रजा ।**
**इदं भवेच्चेदिदमन्यथो भवेद्रणैषिणः स्युर्भरतक्षितेर्जनाः ॥४७॥**

परन्तु यह हो सकता है कि स्वराज्य मिलनेके पश्चात् मुझे कोई कुछ गिने ही नहीं । परन्तु यदि ऐसा हुआ तब ही भारतवासी युद्धप्रेमी भी माने जायँगे ॥ ४७ ॥

**परं शिवं चेदभिलष्यते सितैर्जयश्च निश्चप्रचमेव काङ्क्ष्यते ।**
**तदस्य देशस्य समस्तबन्धनं विभेदनीयं न विलम्बकारणम् ॥४८॥**

परन्तु यदि अंग्रेज भला चाहते हैं और अपना विजय निश्चय ही

चाहते हैं तो इस देशको सर्वथा स्वतन्त्र कर देना चाहिये। विलम्बका कोई कारण नहीं है ॥ ४८ ॥

न मित्रराज्येषु न फासिवादिषु मयान्तरं किञ्चिदवेक्ष्यतेधुना।
निजार्थसिद्धौ कुशलाः कुलीनता न दृश्यते क्वापि निभालिते स्थिरम्॥४९॥

आज मित्रराज्यों और फासीवादियोंमें मैं कोई अन्तर नहीं देखता हूँ। सभी अपने स्वार्थकी सिद्धिमें कुशल हैं। अच्छी तरहसे ढूँढनेपर भी कहीं कुलीनता नहीं दीख पड़ रही है ॥ ४९ ॥

अमेरिका वा ब्रिटनोपि यद्यपि महत्तमं राज्यमिति प्रकथ्यते।
न वैशिया नापि तदफ्रिकाऽवचा निरीक्षते तत्र महत्त्वमण्वपि ॥५०॥

यद्यपि अमेरिका और ब्रिटेन यह दोनों सबसे बड़े राज्य कहे जाते हैं तथापि एशिया और मूक अफ्रिका इन दोनों राज्योंमें तनिक भी महत्त्व नहीं देखते हैं ॥ ५० ॥

न यावदेते स्वकरे समाश्रितं मलं विमृष्टां परितापपूर्वकम्।
अधिक्रियेते वदितुं न तावता मनुष्यजातेर्निजतन्त्रतां प्रति ॥५१॥

जबतक यह दोनों बड़े राज्य अपने हाथमें लगे हुए मलको पश्चाचापके साथ धो नहीं डालते हैं अर्थात् जबतक एशिया और अफ्रिकाको स्वतन्त्र नहीं बना देते तबतक मनुष्य जातिकी स्वतन्त्रताके प्रति उनका कोई अधिकार नहीं ॥ ५१ ॥

अनेन मार्गेण विजेय ईश्वरो महारिपुश्चापि परन्तपोपि च।
मुखानि हृष्टानि हि कोटयः शुभाशिषः प्रदास्यन्ति ततो जयो ध्रुवः ॥५२॥

इस मार्गसे ईश्वर भी जीता जा सकेगा और शत्रुओंको तपानेवाला महान् शत्रु भी। करोड़ों मुख प्रसन्न होकर शुभ आशीर्वाद देंगे तब जय निश्चित है ॥ ५२ ॥

अमेरिकन् ग्रोवर एकदाश्रमे ममागतः प्रश्नचयं विकीर्णवान्।
तवावबोधाय क्रमादिहाद्य स प्रसादतोधोत्र मया विलिख्यते ॥५३॥

एक समय मेरे आश्रममें अमेरिकावासी ग्रोवर आये थे और उन्होंने अनेक प्रश्न किये थे। आपको उन प्रश्नोंका ज्ञान हो, इसलिये उन्हें यहाँ नीचे प्रसन्नतासे मैं लिखता हूँ ॥ ५३ ॥

**किमप्यकस्माद्धृदये विधित्सितं नवं तवाद्येति जना विवृण्वते ।**
**निधाय कर्णे वचनं च तस्य तत्तदोत्तरायाब्रवमीदृशं वचः ॥५४॥**

उन्होंने कहा कि, लोग कहते हैं कि आपके हृदयमें अकस्मात् कोई नया कार्य करनेकी इच्छा हुई है। उनके इस वचनको सुनकर उत्तर देनेके लिये मैंने यों कहा—॥ ५४ ॥

**कथं मनोभाव उत प्रतिध्वनिः सिताङ्गजानामुत देशवासिनाम् ।**
**तथा परेषामिति वेदनात्परं प्रकाशयिष्ये निजयोजनाकृतिम् ॥५५॥**

अंग्रेजोंकी, भारतीयोंकी तथा अन्योंकी मनोदशा और प्रतिध्वनिको जानकर ही मैं अन्तमें अपनी योजनाका स्वरूप प्रकट करूँगा ॥ ५५ ॥

**न योजना सा परिषेवते मनाङ् निगूढतां स्पष्टतरैव सा मम ।**
**सिताः परित्यज्य निजाधिकारितां प्रयान्त्वितः शीघ्रमितिप्रबोधिनी ५६॥**

वह मेरी योजना किसीसे भी छिपी नहीं है। वह तो इतनी ही है कि अंग्रेजी राज्य यहाँसे अपना अधिकार छोड़कर शीघ्र चला जाय ॥५६॥

**स्वतन्त्रता पूर्णतयैव भारते प्रसादिता स्याद्यदि तर्हि भारते ।**
**स्थितैर्बलैर्मित्रमहीभृतां युधः प्रवृत्तये शङ्कर शक्यते न वा ॥५७॥**

यदि भारतमें पूर्णस्वतन्त्रता दे दी जाय तो हे कल्याणकारिन्, भारतमें मित्रराज्योंकी सेना युद्धकी प्रवृत्ति कर सकती है या नहीं? ॥ ५७ ॥

**उवाच वाचं मृदुलां यतीश्वरस्त्वदुत्तरे शक्यमितिब्रुवे बलात् ।**
**स्वतन्त्रताप्राप्तिमुदा प्रमोदितं सहायतां दास्यति भारतं ननु ॥५८॥**

श्री महात्माजी बोले कि मैं जोर देकर कहता हूँ कि मित्र सेना यहाँ युद्धप्रवृत्ति कर सकती है। स्वतन्त्रताकी प्राप्तिके आनन्दसे आनन्दित भारत अवश्य ( इतनी ) सहायता देगा ॥ ५८ ॥

जयाय जापानभुवः स्वतन्त्रताविहीनदेशोयमुपानयत्यलम् ।
किमप्यपूर्वं प्रतिघातमुद्भुलं जगाद देवो जगदेकनन्दनः ॥५९॥

यह परतन्त्र देश जापानको जीतनेके लिये अपूर्व और बहुत बड़ा विघ्न उत्पन्न करता है, ऐसा महात्माजीने कहा ॥ ५९ ॥

सुहृन्नृपाणां पृतनाविवासनं भवेद्वार्यं न कदापि भारतात् ।
स्वतन्त्रताप्राप्तिरपेक्षिता परं भवेत्समेषां हृदये शमो महान् ॥६०॥

मित्रराज्योंकी सेनाका विसर्जन भारतमें कभी भी अनिवार्य नहीं होगा । परन्तु स्वतन्त्रता मिलनी चाहिये । इससे सबके हृदयमें महती शान्ति होगी ॥ ६० ॥

यदीहितं मे न समीहितं भवेत्सितेन राज्ञा विषमं भवेत्तदा ।
न मानहानेन कदापि भारतं करिष्यते काममपि तत्सहायताम् ॥६१॥

जो मैं चाहता हूँ यदि उसे अंग्रेजी राज्य न चाहे तो काम कठिन हो जायगा । स्वमानहानि करके भारत कभी भी उनकी सहायता नहीं करेगा ॥ ६१ ॥

समाकुलं स्यात्सितशासनं यथा तथा न किञ्चित्करणीयमत्र नः ।
शिवा सुनीतिर्विधृता परं फलं सदैव लब्धं विपरीतमीहितात् ॥६२॥

अंग्रेजी सर्कार घबड़ा जाय, ऐसा हम लोग कुछ नहीं करेंगे । हमने सदा अच्छी नीति ही रखी है परन्तु उसका फल सदा इच्छाके विरुद्ध मिला है ॥ ६२ ॥

परःसहस्रान्गृहभूमिसाधनान्यपास्य गन्तुं मनुजान्समादिशत् ।
न शासनं संत्रपते मनागपि प्रभुत्वमोहादिति नः शमात्फलम् ॥६३॥

सर्कारने हजारों आदमियोंको घर-बार छोड़कर चले जानेकी आज्ञा दे दी है । राज्यके मदसे उसे जरा भी शर्म नहीं लगती है । यह हमारी शान्तिसे पैदा हुआ फल है ॥ ६३ ॥

क गम्यतां तैरधनैरसाधनैः कुटुम्बिभिः स्वीयमपास्य पैतृकम् ।
स्थलं गृहं चेति विचारयत्ययं सितो नृपो नेति शमस्य नः फलम् ॥६४॥

अंग्रेज सर्कार इसे नहीं विचारती है कि यह बेचारे गरीब और साधनहीन अपनी पैतृक सम्पत्ति--गाँव-घर छोड़कर कहाँ जायँगे। यह हमारी शान्तिका फल है! ॥ ६४ ॥

यदीत्थमद्यापि सितानुशासनं प्रवर्त्स्यति श्रेय उदस्य तत्पुनः ।
कदापि नास्माभिरनर्गलेदृशी सहिष्यते वृत्तिरमुष्य भूपतेः ॥६५॥

यदि अभी भी इसी प्रकार कल्याणको छोड़कर अंग्रेज सर्कार चलेगी तो हम उसके इस अनर्गल व्यवहारको कभी भी सहन नहीं करेंगे ॥६५॥

पुनः स पप्रच्छ यतीश्वरं यदि स्वहस्तमाराच्छ्लथयेद्दुराग्रहे ।
तदा न विघ्नो भवतोपपादितश्चमूप्रवृत्ताविति सत्यमस्ति किम् ॥६६॥

श्री ग्रोवरने पुनः पूछा कि यदि (राज्य) दुराग्रह करनेमें अपना हाथ ढीलाकर दे तो आप सैनिक-प्रवृत्तिमें विघ्न नहीं करेंगे, क्या यह सत्य है? ॥ ६६ ॥

चमूप्रवृत्तिर्यदि भारतं दृढं सितैर्वशीकर्तुमिहोहिता भवेत् ।
अवश्यमस्या अपि मे विरोधनं भवेत्परो धर्म इवेति मे मतम् ॥६७॥

यदि सैनिकप्रवृत्ति भारतको अधिक दृढ़ताके साथ पराधीन बनानेके लिये होगी तो अवश्य ही उसका भी विरोध करना मेरा धर्म जैसा ही हो जायगा, यह मेरा मत है ॥ ६७ ॥

शवा न कर्तुं श्वसतां सहायतां क्षमा इति स्यात्कथनाशयो मम ।
अनेकदेशान्परतन्त्रतागुणान्निबध्य कोपीह न नीतिमान्भवेत् ॥६८॥

मेरे कहनेका आशय यह है कि मुर्दे कभी जीवितोंकी सहायता नहीं कर सकते। जिसने अनेक देशोंको गुलामीकी रस्सीमें बाँध रखा हो वह कभी नीतिमान् नहीं कहा जा सकता ॥ ६८ ॥

कथं न धैर्यं धरणीयमाजयात्सुहृन्नृपाणां भवतेत्यसौ पुनः।
यतीश्वरं प्रष्टुमना मुखान्निजात्प्रसारयामास गिरां समुच्चयम् ॥६९॥

फिर ग्रोवरने पूछा कि मित्रराज्योंको विजय प्राप्त हो तबतक आप क्यों न धीरज रखें? ॥ ६९ ॥

यतिर्जगादेति न कामितं पुना रॅलेट ऐक्टं न हि मार्शलस्य लॉ।
न जालियाँबाग इतो न चाजयं प्रतीक्षणीया निजतन्त्रतागतिः ॥७०॥

श्री महात्माजी बोले: मैं इस देशमें फिरसे न तो रॉलेट ऐक्ट चाहता हूँ, न मार्शल लॉ चाहता हूँ और न जालियाँवाला बागका अन्याय चाहता हूँ इसीलिये उनके विजय तक स्वतन्त्रताके आगमनकी प्रतीक्षा नहीं की जा सकती ॥ ७० ॥

अमेरिका तं ब्रिटनेश्वरं सखा प्रबोधयेदेवमुतास्त्यपेक्षितम्।
अमेरिकन् ग्रोवर ऊढसंशयः पुनर्मुनीनां समवोचदर्चितम् ॥७१॥

श्री ग्रोवरने पुनः श्री महात्माजीको पूछा कि क्या आप यह चाहते हैं कि अमेरिका ब्रिटेनको समझावे? ॥ ७१ ॥

अवश्यमेवेति यतीश्वरोऽब्रवीदमेरिका चेन्मनुतेद्य भारताः।
यदर्थयन्ते नयसंगतं हि तत्करोतु साहाय्यमिहोचितं तदा ॥७२॥

महात्माजीने कहा कि अवश्य ही मैं ऐसा चाहता हूँ। यदि अमेरिकाको ऐसा प्रतीत होता हो कि भारतवासी जो चाहते हैं वह न्यायसंगत ही है तो अवश्य उसे उचित सहायता करनी चाहिये ॥ ७२ ॥

ब्रिटन्सदा तिष्ठतु भारतक्षितावमेरिका नीतिमिमां कथंचन।
अनुग्रहीतुं विवशं क्षितिष्ठते तवास्ति किं ज्ञापय तत्र संमतिम् ॥७३॥

ब्रिटेन सदा भारत भूमिका स्वामी बनकर रहे, इस नीतिको मान लेनेके लिये अमेरिका लाचार है, इस कथनमें आपकी क्या संमति है? ग्रोवरने पूछा ॥ ७३ ॥

**भवेदिदं नेति परं भवेदिदं सहायतां कर्तुममेरिकामनः।**
**सदा समिच्छेत्परमव्यवस्थितैः प्रचारकार्यैररिभिः कृतैः पतेत् ॥७४॥**

महात्माजीने कहा कि ऐसा तो नहीं होगा परन्तु यह हो सकता है कि अमेरिकाकी इच्छा तो सहायता करनेकी हो परन्तु शत्रुओंने बहुत व्यवस्थितरूपसे जो प्रचारकार्य किया है उससे उसकी इच्छा नष्ट हो जाय ॥ ७४ ॥

**तथा जडं तादृशमस्त्यमेरिकानृपत्वतन्त्रं न हि तत्र कस्यचित्।**
**प्रभुत्वमस्तीति ततोपि शक्नुयान्न कर्तुमस्मद्वचनं महाफलम् ॥७५॥**

तथा, अमेरिकाका राज्यतन्त्र इतना जड़ है कि उसपर किसीकी सत्ता नहीं चलती है। इस कारणसे भी हमारी बातको सफल वह न कर सकता हो ॥ ७५ ॥

**स्वतन्त्रता चेज्ज्ञपिता भवेत्सितैस्तवास्य देशस्य तदा तु भारतम्।**
**तनिष्यते कामधुना सहायतां स्वधर्मभूतेपि च चीनरक्षणे ॥७६॥**

ग्रोवरने पुनः पूछा : यदि अंग्रेज भारतको आज स्वतन्त्रता देनेकी घोषणा कर दें तो भारत चीनकी रक्षा करनेमें जिसे कि वह भी अपना धर्म समझता है—क्या सहायता देगा ? ॥ ७६ ॥

**करिष्यते तन्नियतं स्वशक्तितः सहायतां तस्य महापदस्त्विति।**
**विना प्रयासेन वदेयमद्य नो त्वमे कथंचिद्विवरीतुमत्र तत् ॥७७॥**

विपद्ग्रस्त चीनकी भारत अवश्य सहायता करेगा, इतना तो मैं विना परिश्रमके ही कह सकता हूँ। परन्तु वह सहायता क्या होगी उसका विवरण आज नहीं कर सकता ॥ ७७ ॥

**अनेकपक्षा इह सन्ति भारते ततो न वक्तुं कथमेव शक्यते।**
**प्रतिष्ठितं कीदृशमत्र तद्भवेत्स्वतन्त्रतानन्तरतन्त्रवाहनम् ॥७८॥**

भारतमें अनेक मत हैं। अतः यह नहीं कहा जा सकता कि यहाँ स्वतन्त्रताकी प्राप्तिके पश्चात् किस प्रकारका तन्त्र स्थापित होगा ॥ ७८ ॥

स्थिरा न काप्यत्र परिस्थितिस्ततः सितानुकम्पा सकलैः प्रतीक्ष्यते।
शवः श्वसन्किं च कथं च कीदृशं करिष्यते कार्यमिदं नवेद्म्यहम्॥७९॥

यहाँ पर कोई स्थिर परिस्थिति नहीं है। अत एव सब लोग अंग्रेजोंकी दयाकी प्रतीक्षा करते हैं। मुर्दा जब जी उठेगा तब वह क्या, कैसे और कैसा कार्य करेगा, यह मैं नहीं जानता हूँ॥ ७९॥

अमेरिका चेद्विवशं कथंचन ब्रिटेनराज्यं कुरुतां भवत्कृते।
तदा भवेदेव भवज्जनैर्नवानुमोदितो यत्न इतीह निश्चिनु॥८०॥

ग्रोवरने पुनः कहा: यदि अमेरिका किसी प्रकारसे आपकेलिये ब्रिटेनको लाचार बनावे और इसकेलिये अमेरिका जो यत्न करे उसका अनुमोदन भारतीय करेंगे या नहीं, इसका आप निश्चय करें॥ ८०॥

यदस्ति शक्यं सकलं मयानिशं विधीयतेद्यापि विधास्यतेपि तत्।
नृशंसता राजगता न च प्रजां नयेत जापानविरोधभूमिकाम्॥८१॥

महात्माजीने कहा: मुझसे जो हो सकता है सदा करता रहा हूँ और भविष्य में भी करता रहूँगा। परन्तु सर्कारकी क्रूरता प्रजाको जापानके विरोधकी ओर नहीं ले जा सकती॥ ८१॥

अखण्डवाक्यार्थरहस्यबोधनाद्विनैव दोषास्पदतामहं त्वया।
अवापितोस्मीति पुनः पुनर्मया विघोष्यते तत्सकलैर्निशम्यताम्॥८२॥

महात्माजीने उस अपराध आरोपणका उत्तर इस प्रकार देकर कहा कि मेरे सम्पूर्ण वाक्यका अर्थ समझे विना ही मुझे अपराधी ठहराया गया है, यह मैं पुनः पुनः घोषणा करता हूँ। सब लोग सुनें॥ ८२॥

अनवरतं य इहात्मलाभलोभा—
चरति किमप्यथवा ब्रवीति सर्वम्।
भवति तदत्र मनोविषादहेतुः,
प्रभवति तस्य सुखाय शान्तये नो॥८३॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
प्रथमः सर्गः

जो मनुष्य सदा स्वार्थलाभके लोभसे कुछ करता है या कुछ कहता है वह सब उसके मनको चिन्तित बनानेवाला ही होता है। उसके सुख और शान्तिके लिये नहीं होता ॥ ८३ ॥

**इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां प्रथमः सर्गः**



# द्वितीयः सर्गः

विजेष्यते जर्मनभूमिजास्ततो भयेदमारम्भि समीकमित्ययम्।
वचोविलासस्तव दुःखहेतुको न दुःखिनो ज्ञानपरम्पराभुजः ॥ १ ॥

जर्मन लोग विजय प्राप्त करेंगे, इस भयसे मैंने यह सत्याग्रह शुरू किया है यह आपका कहना केवल दुःखके कारण है। परन्तु ज्ञानी लोग तो कभी दुःखी होते नहीं ॥ १ ॥

अचिन्तितं सङ्कटमापतेद्यदि ब्रिटेनराज्ये सहसा कदाचन।
तदस्तु साम्राज्यसमृद्धिकामनाफलं तवैवेति निवेद्यते पुनः ॥ २ ॥

यदि कभी ब्रिटेनराज्यके ऊपर अकस्मात् संकट आ पड़े तो मैं फिर भी कहूँगा कि वह संकट साम्राज्य बढ़ानेकी आपकी ही इच्छाका एक परिणाम है ॥ २ ॥

त्वमाक्षिपो मां यदुपात्तवाक्यतस्तदर्थबोधाग्रह एव कारणम्।
समस्तसन्दर्भमतस्तवाग्रतो निधाय सर्वं विवृतं करिष्यते ॥ ३ ॥

जिन वाक्योंको लेकर आपने मुझपर आक्षेप किया है, उन्हें न समझना ही आपको दूसरी दिशामें ले जा रहा है। अतः मैं आपके समक्ष सम्पूर्ण सन्दर्भ रखकर विवरण करूँगा ॥ ३ ॥

समागतो लन्दनतः शुभाशयः स यङ्गनामा मम संनिधौ यदा।
अपृच्छदान्दोलनमेतदर्तिदं भवेत्सितानां नियतं न वेति ह ॥ ४ ॥

श्री० यङ्ग लन्दनसे जब मेरे पास आये तो उन्होंने पूछा कि यह आन्दोलन अंग्रेजोंको हैरान करनेके लिये ही है या नहीं ? ॥ ४ ॥

अनेन मे संयदुपक्रमेण किं भवेन्न जापानबलावहेलना।
भवत्स्वदेशात्कठिना निरन्तरं तदीयपृच्छाभवदेतदाशया ॥ ५ ॥

उनके इस प्रश्नका आशय यह था कि मेरे इस युद्धके आरम्भसे भारतसे जापानी सेनाको हराना कठिन हो जायगा ॥ ५ ॥

मया तदोक्तं न भवेत्तथा यथा त्वयोहितं प्रत्युत मे प्रचारितः ।
अयं समाघात इहागमे द्विषां नितान्तमारोत्स्यति नात्र संशयः ॥ ६ ॥

मैंने उस समय उत्तर दिया था कि जैसा आप कहते हैं वैसा नहीं होगा । मेरा यह युद्ध यहाँ शत्रुओंके आगमनको अवश्य रोकेगा ॥ ६ ॥

परन्तु न स्याद्ब्रिटनस्य वा सुहृन्महीपतीनां सहयोग ऐच्छिकः ।
तदा भवेत्किं तदहं न हेतुना भवामि केनापि विभाषितुं प्रभुः ॥ ७ ॥

परन्तु यदि ब्रिटेन और मित्रराज्योंका ऐच्छिक सहयोग नहीं मिलेगा तब क्या होगा इसे मैं किसी कारणसे नहीं कह सकता ॥ ७ ॥

इदं भवद्युद्धमरिन्दमं भवेत्सुहृन्नृपाणां विजयस्य कारणम् ।
अवश्यमेवं भविता मदर्थना भवेन्मता चेदिति मे तदुत्तरम् ॥ ८ ॥

पुनः यङ्गने पूछा : शत्रुओंको नष्ट करनेवाला आपका यह युद्ध मित्र राजाओंको विजय दिलावेगा ? मैंने कहा : अवश्य ऐसा होगा परन्तु यदि मेरी प्रार्थना मान ली जायगी तब ॥ ८ ॥

अहिंसकं युद्धमितीह तेर्थनाथवान्यदेवेति स मामवोचत ।
न नेति सैतत्समुपैतु शासनं मम स्वदेशे क्षयमित्यपेक्ष्यते ॥ ९ ॥

उन्होंने, पुनः पूछा, "आपकी माँग तो यही है न कि अहिंसक युद्ध हो ! या अन्य कुछ ?" मैंने कहा, "नहीं, नहीं, मैं तो यह चाहता हूँ कि मेरे स्वदेश भारतमें अंग्रेजी राज्य नष्ट हो जाय ॥ ९ ॥

सितप्रयाणान्त इतो जयो भवेत्सितप्रजानां परमद्य मद्रणः ।
अवज्ञया तैरुपरोत्स्यते भृशं तदा दुरूहं फलमेव शङ्क्यते ॥१०॥

यहाँसे अंग्रेजोंके चले जानेपर उनका विजय तो होगा परन्तु यदि वह तिरस्कार बुद्धिसे मेरे युद्धको रोकेंगे तब मुझे शङ्का है कि जिसकी कल्पना नहीं की जा सकती है वह परिणाम आवेगा ॥ १० ॥

पुनः स ऊचे भवतापि लन्दने पुरोष्यते स्मेति सितप्रजा समा ।
असोढ बॉम्बप्रहृतिं सुदुस्तरां किमस्ति वाच्यं भवताद्य तां प्रति ॥११॥

फिर यज्ञ बोले--आप भी तो लन्दनमें रह चुके हैं। वहाँकी सभी प्रजाने अतिकठिन बम्बके मारको सहन किया है। क्या आपको उनके प्रति कुछ कहना है ? ॥ ११ ॥

यतो हि तिस्रः शरदः पुराभवं निवासशीलस्तत एव लन्दने ।
अवैमि रथ्याः सकला इतस्ततः स्मरामि ताश्चाथ भवामि दुःखितः॥१२॥

मैंने कहा—मैं लन्दनमें तीन वर्षोंतक रहा हूँ अतः वहाँकी गली गली जानता हूँ। उनको स्मरण करता हूँ तब मुझे दुःख होता है ॥१२॥

सनादिनर् टेम्पलपुस्तकालयेव्रजं तथावाचयमेत्य पुस्तकम् ।
श्रुतानि वा पार्करभाषणान्यपि प्रियाणि चिन्त्यान्यधुनापि गौरवात्॥१३।

मैं नित्य इनर् टेम्पल पुस्तकालयमें जाता था। वहाँ जाकर पुस्तक पढ़ता था। पार्करके प्रियभाषण भी मैंने सुने हैं और आदरपूर्वक आज भी मैं उनका चिन्तन करता हूँ ॥ १३ ॥

ममाभवत्स्निग्धमतीव मानसं प्रियेषु तत्रत्यजनेषु सर्वदा ।
यदा श्रुतं बॉम्बनिपातवाचिकं द्विधेव जातं हृदयं तदा मम ॥१४॥

वहाँके प्रियजनोंपर मेरा मन सदा स्निग्ध रहता था। जब मैंने वहाँ बम पड़नेकी बात सुनी तो मेरा हृदय फट गया ॥ १४ ॥

यदानुरागो हृदयेस्ति तावकेधुनापि नः प्रत्यविकल्प एव तत् ।
कथं प्रतीक्ष्यो न भवेज्जकारयोर्जयः कृतोस्माभिरिति प्रयुक्तवान् ॥१५॥

यज्ञने फिर पूछा कि जब आज भी आपके हृदयमें हम लोगोंके प्रति वैसा ही अविकल्प प्रेम स्थिर है तो जापान और जर्मनीपर हमारा विजय हो तब तक प्रतीक्षा क्यों नहीं करते ? ॥ १५ ॥

विनैव चास्मान्ब्रिटनः कदापि नो विजेष्यतेरीनिति वेद्म्यहं ततः ।
स्वतन्त्रतां प्रार्थयतेद्य भारतं विधातुमारादतुलां सहायताम् ॥१६॥

हमारे बिना ही ब्रिटेन शत्रुओंको कदापि नहीं जीत सकेगा, यह मैं जानता हूँ। इसीलिये—बड़ी भारी सहायता पहुँचानेकेलिये भारत आज ही स्वतन्त्रता माँग रहा है ॥ १६ ॥

**कृते स्वतन्त्रे ब्रिटनेन भारते भवेद्वाप्तं बहु नैतिकं बलम्।**
**अवाप्य सौहार्दममुष्य निर्मलं बलं तदीयं हि समृद्धिमेष्यति ॥१७॥**

ब्रिटेन जब भारतको स्वतन्त्र कर देगा तब उसे नैतिक बल प्राप्त होगा। भारतका सौहार्द प्राप्त करके उसका निर्मल बल समृद्ध बन जायगा ॥ १७ ॥

**विधाय सन्दर्भमिमं हृदि स्थितं विचार्यतां तेन तवापि मानसे।**
**धृतं त्वयैतन्मयि दूषणं महत्त्रपाङ्कुरस्तत्कृत उद्गमिष्यति ॥१८॥**

इस संदर्भको हृदयमें रखकर आप विचार करें तो आपके भी मनमें, मुझपर किये गये दोषारोपणकेलिये लज्जा पैदा होगी ॥ १८ ॥

**अहं ब्रिटेनीयजयं न कामये पुनः पुनस्तत्समकेति यत्त्वया।**
**विचित्रमेतत्प्रतिभाति मां यतः स्थले स्थले त्वद्विजयो मयेहितः ॥१९॥**

आपने बार बार कहा कि मैं ब्रिटेनका विजय नहीं चाहता हूँ, यह मुझे बहुत विचित्र मालूम होता है। क्योंकि मैंने सर्वत्र आपका—ब्रिटेनका विजय चाहा है ॥ १९ ॥

**यदा च मीरा सविधे ममालिखत्सिताङ्गजा पत्रमथो कुलोद्भवा।**
**तदा मया दत्त उदार उत्तरे ममैषभावः प्रकटीभविष्यति ॥२०॥**

अंग्रेज कुलीन महिला श्रीमीराने जब मेरे पास पत्र लिखा था उसको जो मैंने उत्तर दिया था उसमें मेरा यह भाव प्रकट होगा ॥ २० ॥

**तयालिखत्प्राय इहोत्कलाङ्गने क्वचिज्जपानध्वजिनी तरस्विनी।**
**अरक्षिते विघ्नविहीन उत्कटा पदं यथेच्छं सुसुखं निधास्यति ॥२१॥**

श्रीमीराने लिखा था कि उड़ीसा प्रान्त अरक्षित है अतः विघ्नरहित है। जापानकी बलवती सेना सुखपूर्वक इच्छानुसार यहाँ आ सकेगी ॥२१॥

महासुतारा: सरितः समं धरातलं च शालेयभुवः पदादिभिः ।
विना श्रमेणैव वगाह्य सौत्कलान्गिरिप्रदेशानचिरेण यास्यति ॥२२॥

छिछली नदियोंको; समधरातलको और धानके खेतोंको पैदल बिना-श्रमके ही पारकरके जापानकी सेना उड़ीसाके पहाड़ी प्रदेशोंमें शीघ्र ही आ जायगी ॥ २२ ॥

न रक्षितुं देशमिमं न तां चमूं विरोद्धुमारादवरोद्धुमेव वा ।
इहास्ति काचित्सितवाहिनी स्थिता न वा जनाः प्रान्तभवाः समुद्यताः ।२३।

न तो इस देशकी रक्षा करनेकेलिये और न जापानी सेनाका विरोध या अवरोध = रुकावट करनेकेलिये कोई सेना तैयार रखी गयी है । इस प्रान्त की जनता भी तयार नहीं है ॥ २३ ॥

परन्तु जमशेदपुरस्य वर्त्म तद्विरक्षितुं प्राणपणेन केवलम् ।
प्रयत्नमास्थास्यति शासनं भवेज्जयो न वात्रेति विकल्पते मनः ॥२४॥

परन्तु सर्कार जमशेदपुरके मार्गको रोकनेकेलिये प्राणोंकी बाजी लगाकर भी प्रयत्न करेगी । विजय मिले या न मिले इसमें सन्देह है ॥ २४ ॥

ततो जपानीयवरूथिनी विशेद्विहारदेशं समिता समन्ततः ।
अदृश्यतामेव गतं भवेत्तदा सितीयराज्यव्यवहारशासनम् ॥२५॥

वहाँसे जापानकी सेना बिहारप्रदेशमें प्रवेश करेगी और चारों ओर फैल जायगी । तब अंग्रेजी राज्यके सब व्यवहार और हुकूमत अदृश्य हो जायँगे ॥ २५ ॥

जपानसेनावसथान्प्रविश्य चेद्वदेन्न युष्माकमहं क्षतिप्रदा ।
प्रणाशयेयं ब्रिटिशाम्रिकाजनाहवप्रयत्नं न ततोस्तु वो भयम् ॥२६॥

जापानी सेना यदि गाँवोंमें घुसकर यह कहे कि हम तुमको जरा भी क्षति नहीं पहुँचावेंगे । हम तो ब्रिटिश और अमेरिकाके युद्ध प्रयत्नको नष्ट करेंगे अतः तुमको कोई भय नहीं होना चाहिये ॥ २६ ॥

तदा भवेत्किं करणीयमित्ययं महान्परिप्रश्न उदेति संमुखे ।
विलोक्य सैतव्यवहारमीदृशं जनाः कदाचित्प्रतियन्तु तेषु ते ॥२७॥

तब क्या करना होगा, यह एक बड़ा प्रश्न सामने खड़ा है । अंग्रेजों-के इस प्रकारके (खराब) व्यवहारको देखकर कदाचित् वह लोग जापानियोंमें विश्वास कर लें ॥ २७ ॥

इमे सिता लाभपरायणाः प्रजा न शिक्षयन्तीह कथं स्वरक्षणम् ।
विमानबॉम्बाधिनिपातनात्कृतं भवेत्ततस्तेन च ता उदासिताः ॥२८॥

यह अंग्रेज ऐसे स्वार्थी हैं कि प्रजाको विमानसे गिराये जानेवाले बमसे कैसे रक्षा करनी चाहिये, इसका शिक्षण नहीं देते हैं । और इसी-लिये प्रजा अंग्रेजोंसे उदासीन बनी है ॥ २८ ॥

निकार एषां हृदयेषु यत्कृते विरूढमूलः कथमद्य ते क्वचित् ।
मनस्विनस्तत्सहयोगमात्मना बुधा दधीरन्निति शङ्कते मनः ॥२९॥

जिनकेलिये इनके प्रजाजनोंके हृदयोंमें तिरस्कार पैदा हो चुका है वह मनस्वी और समझदार लोग स्वयं कैसे सहयोग देंगे, यही मनमें शङ्का है ॥ २९ ॥

व्यलोकिषीदं परमत्र मानवा जपानसेना व्रजितुं स्वभूमितः ।
तटस्थतायाः परिरम्भणाय ते समुद्यताः सन्ति समुत्सुका अपि॥३०॥

परन्तु मैंने यहाँ पर देखा है कि लोग अपनी जमीनमें से जापानकी सेनाओंको जाने देनेकेलिये तथा तटस्थता स्वीकार करनेकेलिये तैयार हैं और उत्सुक भी हैं ॥ ३० ॥

धनं भवेद्गोपितमन्नमप्यलं न चापि भृत्यत्वमुपासितं भवेत् ।
क्वचित्क्वचित्किन्तु सिताङ्गशात्रवं समादरं तान्प्रति तानयेदपि ॥३१॥

कहीं तो ऐसा होगा कि लोग धन और अन्न छिपा देंगे और जापा-नियोंकी दासताका स्वीकार नहीं करेंगे । परन्तु कहीं कहीं ऐसा भी होगा कि अंग्रेजोंकी शत्रुताके कारण उनके प्रति प्रजा आदर भी प्रकट करे ॥३१॥

जपानसेना धनभूगृहादिकं ग्रहीतुमाकाङ्क्षति कस्यचिद्यदि ।
तदा प्रतीकारमहिंसकं प्रजा तनोत्वतो नाधिकमत्र वाञ्छ्यते ॥३२॥

जापानी सेना यदि किसीके धन, धरती, घर आदि लेना चाहे तो प्रजा अहिंसक प्रतीकार करे, इससे अधिक की इच्छा नहीं है ॥ ३२ ॥

न तस्य कार्यं विदधीत वा प्रजा ततो ग्रहीतव्यमथो न किंचन ।
तदीयकार्येष्वखिलेषु चाखिलैर्न योग आधेय इतीह शक्यते ॥३३॥

लोग जापानका कार्य न करें, जापानसे कुछ लेना न चाहें और जापानके कार्योंमें कोई सहयोग न दें, इतना ही यहाँ हो सकता है ॥३३॥

परं त आगत्य भुवीह वेतनं तथान्नमूल्यं ब्रिटिशीयमुद्रया ।
प्रदातुमिच्छां विशदेयुरात्मनो गृधिर्निरोध्या कथमेव तृष्णजाम्॥३४॥

परन्तु वह इस भूमिपर आकर वेतन और अनाजका मूल्य अंग्रेजी सिक्कोंमें देना चाहेंगे तो लोभियोंके लोभको कैसे रोका जायगा ॥ ३४ ॥

सिताधिराज्यं यदि सेतुभञ्जनं पयःप्रणालीपरिमर्दनं तथा ।
यदादधीतात्र तदास्य निर्मितौ प्रयत्न आसेव्य उतो न हीति वा॥३५॥

यदि अंग्रेजी सर्कार कोई पुल तोड़ डाले, अथवा नहर नष्ट करे तो पुनः उसके बनानेका प्रयत्न करना योग्य है या नहीं ? ॥३५ ॥

निजोपयोगाय जपानसेनया क्रियेत सेत्वादिपुनर्विनिर्मितिः ।
तदा तु तत्कर्मणि तत्सहायता कृता भवेद्वा न विचार्यतामिति ॥३६॥

अंग्रेजों के तोड़े हुए पुल आदिको यदि जापानी सेना पुनः बनाना चाहे तो उस कार्यमें उसकी सहायता करना चाहिये या नहीं, इसे भी आप विचारें ॥ ३६ ॥

जपानराज्येन च भारता नराः कलौ गृहीता यदि जापसैनिकैः ।
सहाव्रजेयुर्व्यवहार एषु तत्क्रियेत कीदृग्विषमास्त्वियं स्थितिः ॥३७॥

जापानके साथ युद्धमें पकड़े गये भारतीय यदि जापानी सेनाके साथ

यहाँ आवें तो उनके साथ कैसा व्यवहार करना चाहिये ? यह विषम परिस्थिति होगी ॥ ३७ ॥

**पलायतां चेत्सितशासनं तदा निरीक्ष्य शत्रोर्बलमुत्कटं यदि ।**
**तदा च मुद्राविषये सुवर्त्म किं भवेद्गृहीतं तदपीह चिन्त्यताम् ॥३८॥**

यदि शत्रुकी विशाल सेनाको देखकर अंग्रेज भाग जायँ तब रुपयोंके विषयमें क्या अच्छा मार्ग लिया जाय, इसे भी सोचें ॥ ३८ ॥

**नियोत्स्यमाने समरे जपानिनः स्वकीयलोकान्समराहतान्हतान् ।**
**निपात्यमानान्पतितानितस्ततः प्रवाहयिष्यन्ति निवेशमात्मनः ॥३९॥**

जब यहाँ युद्धारम्भ हो जायगा तब जापानी लोग युद्धमें घायल हुए अथवा मरे हुए या मारे जाते हुए तथा इधर उधर पड़े हुए अपने आदमियोंको अपने शिबिरमें ले जायँगे ॥ ३९ ॥

**परं परांस्ते समराङ्गणे क्षतान्हतांस्त्यजेयुर्व्रणितांश्च सव्यथान् ।**
**भवेयुरेतेपि सुरक्षिता यदि भवेत्परो धर्म इति प्रभाति माम् ॥४०॥**

परन्तु जापानी लोग समरभूमिमें घायल हुए, मारे गये हुए और गोलीसे बींधे गये हुए अन्योंको वहाँ ही पीड़ित छोड़ जायँगे । मुझे ऐसा लगता है कि यदि उनकी भी रक्षा की जाय तो बड़ा धर्म होगा ॥ ४० ॥

**बहूनि शस्त्राणि पलायनं भृतां भवेयुराप्तानि च युद्धभूतले ।**
**जपानसेनाभिरनाहितानि तान्यनुग्रहीतुं तत औचिती न वा ॥४१॥**

अंग्रेजोंकी सेना जब भागेगी तब उस युद्धभूमिमें बहुतसे शस्त्र ऐसे पड़े हुए मिलेंगे जिन्हें जापानी सेनाने नहीं लिये होंगे । उन अस्त्रोंको वहाँसे लेना उचित होगा या नहीं ? ॥ ४१ ॥

**रणाङ्गनं लुण्ठितुमापतन्त्यलं जनाश्च दाक्षाय्यगणः शवं यथा ।**
**महद्भवेत्तेन निरस्त्रभारतं प्रकृष्टदोषायतनं निरन्तरम् ॥४२॥**

जैसे गिद्ध मुर्देको लूटते हैं वैसे ही रणभूमिको लूटनेके लिये बहुतसे

लोग आते हैं। यदि वह अस्त्र लूट लिये गये तो निरस्त्र भारतमें निरन्तर मार फाड़ आदि बड़े-बड़े अपराध होने लगेंगे ॥ ४२ ॥

ततः समेषां निशितास्त्रशस्त्रसंग्रहो ग्रहीतव्य उतेह न प्रभो।
न निश्चयो मे सविधेद्य विद्यते कृपानिधे ज्ञापय तत्कृपावशात् ॥४३॥

वहाँसे उन तीक्ष्ण अस्त्र-शस्त्रोंका ग्रहण करना चाहिये अथवा नहीं? मेरे पास कोई निश्चय नहीं है अतः हे कृपासागर, आप कृपाकर आज्ञा दीजिये ॥ ४३ ॥

अथो भवान्संमनुते महोदधौ समानि चास्यानि विचारमन्तरा।
यदादिशेद्देव उदारचेतसा तदेव कर्तव्यमिहास्ति मे मतम् ॥४४॥

और यदि आप संमति दें तो सब शस्त्रोंको बिना किसी विचारके समुद्रमें डाल दिया जाय। आप उदार मनसे जो आज्ञा इस विषयमें देंगे, वही मुझे करना है ॥ ४४ ॥

अवाप्य पत्रं परदुःखपावकोपपीडितायाः परिपीडितान्तरः।
यदुत्तरं तत्सविधे ह्यजीगमं तदप्यवेक्ष्यं विदुषा त्वया ननु ॥४५॥

परदुःखकी आगसे जली हुई श्री मीराके पत्रको पढ़कर दुःखित होकर मैंने जो उत्तर उनके पास भेजा था उसे भी आप अवश्य देखें ॥ ४५ ॥

समस्तसाकाङ्क्षसदर्थबोधकं तवाप्य निर्दोषदलं प्रसीदति।
ममान्तरं त्वं समये यथोचिते यथोचितं स्थानमवाप इत्यतः ॥४६॥

जिन-जिन बातोंकी आवश्यकता थी उन सबका ज्ञान करानेवाला तुम्हारा निर्दोष पत्र पाकर मेरा अन्तःकरण प्रसन्न हुआ है। क्योंकि तुम योग्य समयपर योग्य स्थानमें पहुँच गयी हो ॥ ४६ ॥

विचारितं साधुतरं त्वयाधुना जपानिनां नेष्यत एव वश्यता।
न तैः प्रणेयः सहयोग आत्मनः प्रतीपता स्यात्तु विपद्विवर्धिनी ॥४७॥

तुमने इस समय बहुत अच्छा विचार किया है। जापानियोंकी अधीनताका स्वीकार नहीं ही इष्ट है। उनके साथ अपना कोई सहयोग नहीं करना चाहिये। इससे विपरीत करनेसे अपनी विपत्ति बढ़ जायगी ॥ ४७ ॥

न कोपि साहाय्यमुपाचरेत्कचिज्जपानिनां तैः सह नैव कस्यचित्।
कदापि मोहात्क्रयविक्रयौ न वा धनाधिकप्राप्तिजिघृक्षयापि नो ॥४८॥

जापानियोंकी कोई भी कोई सहायता न करे। उनके साथ, अधिक लाभ प्राप्त करनेकी इच्छासे भी भूलकर भी क्रय-विक्रय व्यवहार नहीं करना चाहिये ॥ ४८ ॥

जपानिनां भीतिवशेन वश्यता जनैर्विहेया निखिलैर्निरन्तरम्।
तथैव तेषां प्रतिकारभावनाबलेन मुद्राविषयोपि शाम्यताम् ॥४९॥

सबको चाहिये कि भयके कारण कभी जापानियोंकी अधीनताका स्वीकार न करें, त्याग करें। उनका प्रतीकार करना है अतः रुपयोंका प्रश्न स्वयं ही शान्त हो जाता है ॥ ४९ ॥

न सेतुभङ्गात्परमस्य निर्मितौ सहायता स्याद्विहिता कदाचन।
भवेद्वाप्याल्पतमापि येन तत्सहायता किंचन नो विधीयताम् ॥५०॥

यदि पुल तोड़ दिये जायँ तो उसके पश्चात् उसके बनानेमें कभी सहायता नहीं करना चाहिये। ऐसा कुछ भी नहीं करना चाहिये जिससे कि उन्हें अत्यल्प भी सहायता प्राप्त हो ॥ ५० ॥

उदारभावेन जपानसैनिकैरुपागतैर्भारतभूमिजन्मभिः।
जनैश्च सर्वैर्व्यवहार आर्यतामयो विधेयो न भवन्ति तेरयः ॥५१॥

जापानी सेनाके साथ यदि भारतवासी आवें तो उदारभावसे उनके साथ सद्व्यवहार करना चाहिये। क्योंकि वह शत्रु नहीं हैं ॥ ५१ ॥

अवश्यमेव व्रणितेषु पातितेष्वपि प्रदर्श्या करुणा यथोचितम्।
मनुष्यता प्रत्यहमेतदिच्छति प्रपश्यति स्वं न परं न सा क्वचित् ॥५२॥

जो घायल हों, पड़े हुए हों उनपर अवश्य दया करनी चाहिये। मनुष्यता यही तो चाहती है। वह कभी भी अपने और परायेका विचार नहीं करती ॥ ५२ ॥

**पलायितानां हननादिसाधनं महास्त्रशस्त्रादिकमाप्यते यदि।**
**सुहृज्जनैस्तर्हि महाप्रयासतः सुरक्ष्यते चेदभिरक्ष्यतां हि तत् ॥५३॥**

भागे हुए लोगोंके जितने अस्त्र-शस्त्र मिलें उनकी रक्षा यदि प्रयासपूर्वक प्रामाणिक लोग करते हों तो करें ॥ ५३ ॥

**परं यदि स्यादतिहीनमानुषैस्तदाप्तमस्मादुरपह्नवा भवेत् ।**
**दुरर्थता तस्य ततो निमज्ज्यतामपास्यतां वारिधिगर्भगह्वरे ॥५४॥**

परन्तु यदि वह सब नीच लोगोंके हाथमें पड़ जायँगे तो उनका दुरुपयोग रोकना कठिन होगा। अतः उन्हें डुबा दो और समुद्रमें फेंक दो ॥ ५४ ॥

**मया प्रदत्तं निखिलं तदुत्तरं भवेदिदं सारमयं ततो ध्रुवम् ।**
**मदीय उद्धो हृदयस्थितो भवेत्त्वयात्र भावो विदितोप्रयासतः ॥५५॥**

मैंने श्री मीराको जो उत्तर दिया था उसका यह सार है। मेरे हृदयमें कैसा प्रशस्त भाव भरा है उसे बिना श्रमके ही आप इस पत्रसे जान सकते हैं ॥ ५५ ॥

**यदि स्वतन्त्रा भरतक्षमा भवेत्तदाविलम्बेन जपानभूभुजा।**
**करिष्यते मन्त्रमसौ स्वयं ततस्तवेति वा मे हृदयं तुदत्यलम् ॥५६॥**

"यदि भारत स्वतन्त्र हो तो बिना किसी विलम्बके जापानके साथ स्वयं मन्त्रणा करेगा" आपका यह वाक्य दुःखद है ॥ ५६ ॥

**यतस्ततो वाक्यगतांशमादधद्दुरर्थमापादयितुं यदिच्छसि ।**
**न तद्भवेत्सत्कुलजप्रसूतिजा कदापि रीतिर्भयदा सदा विदाम् ॥५७॥**

क्योंकि आप वाक्यके एक अंशको लेकर अनर्थ करना चाहते हैं।

यह रीति विद्वानोंके लिये भयप्रद है और अत एव किसी कुलीनके लिये ग्राह्य नहीं है ॥ ५७ ॥

यदस्ति तत्रालिखितं तदर्हसि निकाममेवं पठितुं यथार्थतः ।
न तत्र किञ्चिद्दुरितं दुरर्थकं निविष्टमास्ते सुगमाक्षरं हि तत् ॥५८॥

वहाँ जो कुछ लिखा है उसे आप ठीक-ठीक पढ़ें। उसमें न तो कोई दोष है और न अनर्थ है। वहाँ तो सब अक्षर स्पष्ट हैं ॥ ५८ ॥

जपानिलोकान्नृपतिं च सर्वथा सभिच्च विश्वासयितुं समिच्छति ।
न भारतं द्वेष्टि जपानभूमिजान्न वा पराः का अपि सत्प्रजाः क्वचित्॥५९॥

महासभा जापानियों और जापानके राजाको यह विश्वास दिलाना चाहती है कि भारत जापानियोंसे या किसी अन्य प्रजासे द्वेष नहीं रखता ॥ ५९ ॥

सदैव तद्वाञ्छति मुक्तिमेकिकां विदेशिसत्तामिह तन्न काङ्क्षति ।
न चापि तत्कामयते कदाप्यथो विदेशिसेनाविधृतां सहायताम् ॥६०॥

भारत केवल एक मुक्ति चाहता है। परदेशियोंका अस्तित्व ( राजाकेरूपमें ) वह नहीं चाहता। वह यह भी कभी नहीं चाहता कि परदेशी सेना उसकी सहायता करे ॥ ६० ॥

अहिंसकेनैव बलेन तत्क्षमं समर्जितुं स्वस्य महास्वतन्त्रताम् ।
विरक्षितुं चापि ततो न भारतं जपान आचिक्रमिषेदिति स्पृहा ॥६१॥

भारत केवल अहिंसक शक्तिसे ही अपनी महास्वतन्त्रताको प्राप्त कर सकता है और उसकी रक्षा भी कर सकता है। इसीलिये जापान भारत पर आक्रमण करनेकी इच्छा नहीं करेगा यह हम लोगोंकी स्पृहा है ॥६१॥

परं यदीहाक्रमणं विधास्यते जपान आङ्गलक्षितिनायकोपि चेत् ।
निराशतां नो गमयेत्तदापि वा जपानिभिर्नाद्रियतां सकारिता ॥६२॥

परन्तु यदि जापान इस देशपर आक्रमण करेगा और अंग्रेज

सर्कार हमको निराश करेगी तो भी हम जापानियोंके साथ सहकार नहीं करेंगे ॥ ६२ ॥

**यदा जपानेन समं सिताङ्गजा नियुध्यमानाः स्युरिहावनौ तदा ।**
**न चैव कार्योसहयोग आङ्गलैस्तथाकृते देश उपद्रुतो भवेत् ॥६३॥**

जब अंग्रेज हमारी इस भूमिपर जापानके साथ लड़ते होंगे तो अंग्रेजोंके साथ कभी असहयोग नहीं किया जायगा । क्योंकि ऐसा करनेसे देशमें उपद्रव फैल जायगा ॥ ६३ ॥

**परं न तेषामपि कापि रच्यतां सहायता भारतभूमिवासिभिः ।**
**सदैव दास्याभिधवारिधौ हि नो निमज्जनं स्वार्थतयाभिकाङ्क्षताम् ॥६४॥**

स्वार्थके कारण जो हमें दासताके समुद्रमें सदा ही डुबाए रखना चाहते हैं उन अंग्रेजोंकी भी भारत कोई सहायता नहीं करेगा ॥ ६४ ॥

**इहत्यलोकैर्बहुकोटिसंख्यकैः सदेति कार्यं निजतन्त्रताप्तये ।**
**निरुद्यमत्वस्य हठान्निराकृतिर्व्यपोहनं वर्गयुधोपि भारतात् ॥६५॥**

भारतके करोड़ों मनुष्योंको बलपूर्वक भारतसे बेकारी और वर्ग-विग्रहको दूर करना ही चाहिये ॥ ६५ ॥

**विपाटनं वैभवशालिनिस्स्वयोर्महान्तरालस्य विपत्पदस्य च ।**
**निवारणं मानवमानवान्तरक्षितेस्तथा लुण्ठनवृत्तिशालिनाम् ॥६६॥**

तथा धनी और निर्धनमें जो भेद है वह विपत्तिका स्थान है अतः उसको जड़मूलसे उखाड़ना, मनुष्य-मनुष्यका अन्तर दूर करना तथा लुटेरोंको भी दूर करना, यह सब भी करना चाहिये ॥ ६६ ॥

**कथंतरां वाक्यचयेन साध्यतामनेन सारस्तव बुद्धिसंगतः ।**
**न वेद्मि तत्तत्त्वमबुद्धिमोहितप्रभः परं केनचनापि हेतुना ॥६७॥**

इन वाक्योंके द्वारा वह सार कैसे निकल सकता है जो आपकी बुद्धिको संगत प्रतीत होता है, यह मैं नहीं जानता । अतः आपकी बुद्धिकी प्रतिभा किसी कारणसे मन्द हो गयी है ॥ ६७ ॥

जवाहरः श्रीसरदारवल्लभस्तथा ह्यसौ शंकररावदेवकः ।
कदापि विद्यार्थिगणं सतेजयन्न संव्यधात्किंचन दोषमन्दिरम् ॥६८॥

पण्डित जवाहिरलाल, सर्दारवल्लभभाई और श्रीशंकररावदेव यदि कभी विद्यार्थियोंको उत्तेजित करते हों तो उन्होंने यह कोई अपराध नहीं किया ॥ ६८ ॥

खनेत्रसंख्येशमिते हि वत्सरे मया स्वतस्तान्सहयोगभञ्जने ।
सिताधिपत्येन सह प्रवर्तिते न्यमन्त्रये तेन नवं न तैः कृतम् ॥६९॥

सन् १९२० ई० में मैंने स्वयं राज्यके साथ सहयोग त्याग करनेकेलिये छात्रोंको निमन्त्रण दिया था। अतः उन्होंने कोई नया काम नहीं किया ॥ ६९ ॥

प्रजाधिनेतॄनुपगृह्य बन्दिषु निवासनानन्तरमत्र वर्णिभिः ।
रुषा परीतैः किमकारि तन्मयावबुध्यते नैव विविक्तवासिना ॥७०॥

प्रजाके बड़े बड़े नेताओंको पकड़कर कैदियोंके बीचमें रखा गया। उसके पश्चात् विद्यार्थियोंने क्रोधमें आकर क्या किया उसे मैं नहीं जानता क्योंकि मैं यहाँ जेलमें एकान्तवासी हूँ ॥ ७० ॥

जवाहरस्यात्र निरूप्य हेतुतामसाधनस्त्वं न कथं विशङ्कसे ।
स्वराज्यसिद्धौ परमं हि साधनं नजासने श्रद्दधतं दृढव्रतम् ॥७१॥

जो पण्डित जवाहिरलालजी स्वराज्य प्राप्तिकेलिये अहिंसाको ही परमसाधन मानते हैं, श्रद्धा रखते हैं और दृढ़ प्रतिज्ञावाले हैं उनको विद्यार्थियोंके तूफानका कारण बतानेमें, आपके पास कोई साधन नहीं है, तो भी आपको शङ्का नहीं आती ? ॥ ७१ ॥

तथा घनश्यामतनूजनौ भवान् किशोरलाले परमादृते मम ।
अधत्त यं दोषमहं न तं कथंचनानुमन्ये विदितैतदान्तरः ॥७२॥

ऐसे ही आपने श्रीकिशोरलालघनश्यामदास मशरूवाला जिन्हें कि मैं स्वयं आदर देता हूँ और जिनके अन्तःकरणको मैं अच्छी तरहसे

पहचानता हूँ उनके ऊपर जो दोषारोपण किया है उसे मैं नहीं मान सकता ॥ ७२ ॥

**अहिंसकानां स महाग्रणीर्भवन्नशिक्षयद्यद्ब्रजनालिभञ्जनम् ।**
**अहिंस्रसीमानमुपेत्य तत्स्थितं न तां तदाक्राम्यति मन्मतौ ध्रुवम् ॥७३॥**

श्रीकिशोरलालभाई तो अहिंसकोंके अगुवा हैं। उन्होंने जो सड़क वगैरः तोड़नेकी शिक्षा दी है वह अहिंसाकी सीमामें रहकर ही। मेरे विचारमें वह शिक्षा अहिंसाकी सीमाका उल्लंघन नहीं करती है ॥ ७३ ॥

**यदि त्वयाङ्गीक्रियते न मन्मतिस्तथापि नो साधयितुं तदस्यलम् ।**
**स हिंसनायासपरायणो भवेत्कुतोपि हेतोरिति मामकं मतम् ॥७४॥**

यदि आप मेरी सलाह नहीं मानते हैं तो आप उसे सिद्ध भी तो नहीं कर सकते। मैं तो मानता हूँ कि यदि श्रीकिशोरलाल भाई हिंसक बने हों तो कोई कारण अवश्य होना ही चाहिये ॥ ७४ ॥

**यदान्ध्रदेशात्परिपत्त्रमागतं त्वया धृतं स्वप्रमितेः सुसाधनम् ।**
**तदप्यलं न क्षमते कथंचन प्रमाणभूमिं प्रतिगन्तुमीडिताम् ॥७५॥**

आन्ध्रसे जो परिपत्र आया है और जिसे आपने अपने कथनका प्रबल साधन समझकर रख छोड़ा है वह प्रमाण बननेमें असमर्थ है ॥ ७५ ॥

**विलोक्यते तत्र विटङ्कितं मया युधोस्ति मूलं परिमर्दवर्जनम् ।**
**ततो न कैश्चित्प्रतिकूलमिष्यतां न गुप्तरूपेण च शिष्टिभञ्जनम् ॥७६॥**

मैंने उस परिपत्रमें लिखा हुआ देखा है कि "हिंसाका त्याग ही इस सत्याग्रह युद्धका मूल है। अतः प्रतिकूल कार्य करनेकी कोई भी इच्छा न करे तथा गुप्तरूपसे आज्ञाकी अवहेलना न करे" ॥ ७६ ॥

**अहिंसनाच्छादनमाश्रयन्नहं व्रजामि हिंसापथमित्यवोचथाः ।**
**तदस्तु ते मोहपरम्पराभुजो मनोनुबिम्बं न मयापराध्यते ॥७७॥**

मैं अहिंसाका आड़ लेकर हिंसाके मार्गमें जा रहा हूँ यह जो आपने

कहा है वह अज्ञानियोंके मनका प्रतिबिम्ब है। उसमें मेरा क्या दोष ? ॥ ७७ ॥

**प्रियोस्त्यहिंसा परमो मतो दृढः सदैव धर्मो मम शैशवादपि।**
**महासभासभ्यजनैरपि स्वयं तथैव सा स्वे हृदये निधीयते ॥७८॥**

अहिंसा तो मेरे बाल्यकालसे ही मेरी दृष्टिमें मेरा परम प्रिय दृढ़ धर्म बना हुआ है। महासभाके सदस्य भी उसे उसी प्रकारसे स्वीकार करते हैं ॥ ७८ ॥

**निपिञ्जने ये रतिमन्त आदधत्यरिप्रणाशाय शतघ्निकाः सदा।**
**ततोपि तीव्रायुधसंप्रयोगतः परेण ते स्युर्नियतं पराजिताः ॥७९॥**

जो लोग हिंसामें प्रेम रखनेवाले हैं वह अपने शत्रुओंको मारनेकेलिये सदा बन्दूक धारण करते हैं। परन्तु जिसके पास बन्दूकसे भी भयङ्कर अस्त्र शस्त्र होंगे वह अवश्य ही बन्दूकवालेको हरावेंगे ॥ ७९ ॥

**परं त्वहिंसा परमास्त्रशस्त्रभृज्जनेष्वनेकेषु महाबलेष्वपि।**
**अभीर्भवन्ती रिपुदुर्दलान्यपि प्रयाति भेत्तुं सबलैकिकापि सा ॥८०॥**

परन्तु अहिंसा तो बड़े बड़े अस्त्रशस्त्रोंसे सजे हुए महाबलवानोंके बीचमें भी निर्भय होकर शत्रुओंके हिंसकदलोंको फाड़नेकेलिये अकेली ही जाती है ॥ ८० ॥

**कुतः सिताङ्गावनिपस्य शासनं करालरूपाण्यधुना तनोत्यदः।**
**मया कदापीह न तद्विलोकितं समुद्गिरद्रोषमभद्रकान्तिकम् ॥८१॥**

अब यह अंग्रेजी राज्य भयङ्कररूप क्यों धारण करता है ? मैंने इतना क्रोध करते हुए और अभद्र कान्तिवाला इसे कभी नहीं देखा है ॥ ८१ ॥

**जहाहि देशं भरतेन पालितं वचो न वैतत्तव रोषकारणम्।**
**उपद्रवो वा जनताकृतोपि नो विभाति हेतुर्गतदूषणो मम ॥८२॥**

"भारत छोड़कर चले जावो" यह वचन तो क्रोधका कारण बन नहीं

सकता। जनताने जो उपद्रव किया है, उसमें तो कोई बुराई नहीं है, अतः वह भी रोषका कारण नहीं है ॥ ८२ ॥

सिताधिराज्यं विजहातु भारतं सुघोष एषोस्ति जनार्तिहृद्रवः।
अखण्डनीया प्रतिघोषणेयमाजगत्तलं व्यापदजस्रमस्रभृत् ॥८३॥

अंग्रेज़ी राज्य भारतको छोड़ दे यह आवाज़ तो लोगोंके दुःखित हृदयकी आवाज़ है। यह घोषणा अखण्डनीय है और आँसुओंसे भरी हुई है। इसी लिये सारे जगत्में फैल गयी है ॥ ८३ ॥

प्रजात्रयं युद्धदवानले यदा पतन्महारक्तनदी यदा वहत्।
महातमिस्रा जगदाश्रुताशु सा तदार्तरावः स जगत्समावृणोत् ॥८४॥

ब्रिटिश, अमेरिका, जापान यह तीन प्रजाएँ जब युद्धरूप दावानलमें पड़ीं और जब रक्तकी महानदी बह निकली तथा जब घोर अन्धकारसे जगत् ढँक गया तब यह करुण स्वर निकला और जगत्में छा गया ॥ ८४ ॥

परन्त्वगस्तस्य महाष्टमीं तिथिं स भाति यावन्न रवो यशोधरः।
यदा नवम्यां विनिगृह्य नायकानगोपयत्तद्धि कलाकलाश्रयः ॥८५॥

परन्तु अगस्तकी ९ वीं तारीखतक तो "भारत छोड़ो" यह यशस्वी शब्द प्रकट हुआ ही नहीं था। नवमी तारीखको जब सब नेताओंको पकड़कर छिपा दिया गया तब वह शब्द उत्पन्न हुआ ॥ ८५ ॥

समीहनं यत्परमं विशुद्धिमन्मतं मया न्याय्यतमं च तत्पुनः।
सिताङ्गशिष्टेरभवद्विधेर्वशादमर्षहेतुर्हतदैवमेव धिक् ॥८६॥

जो इच्छा अत्यन्त पवित्र है, और मेरी दृष्टि अत्यन्त न्याययुक्त है वही विधिवश अंग्रेजीके शासनके क्रोधका कारण बन गयी। दैवको ही धिक्कार है ॥ ८६ ॥

युधः परं भारतमेष्यति स्विकां स्वतन्त्रतामित्यवदत्पुनः पुनः।
सिताधिराज्यं तदपीह शङ्कितं जनैः सितक्रौर्यपरम्परेक्षकैः ॥८७॥

सर्कारने बारबार कहा था कि युद्धके बाद भारत स्वतन्त्रता प्राप्त

करेगा परन्तु सर्कारकी क्रूरता देखकर लोगोंको उस कथनमें भी सन्देह होने लगा ॥ ८७ ॥

विशुद्धबुद्धिप्रतिबुद्धशासनं भवेद्यपि प्रेमरतिप्रबद्धया ।
उपस्कृतां श्रीसभया सहायतां तदा तिरस्कारपदं न तन्नयेत् ॥८८॥

यदि सर्कारकी बुद्धि पवित्र होती तो प्रेमसे बँधी हुई महासभाकी दी हुई सहायताका वह अस्वीकार न करती ॥ ८८ ॥

महासभासभ्यजनाः समेत्य तां स्वतन्त्रतां रक्षितुमात्मसंमिताम् ।
प्रयासलब्धामरिसंक्षयाय तत्त्रिमित्रराष्ट्रध्वजशालिनो ध्रुवम् ॥८९॥

महासभाके सभ्य बड़े प्रयाससे मिली हुई प्राणसमान स्वतन्त्रताको प्राप्त करके उसकी रक्षाकेलिये शत्रुओंका नाशकरनेको मित्रराज्योंके ध्वजके नीचे आ जाते ॥ ८९ ॥

परं सितं शासनमत्र भारतान्समानभागान् इति मन्तुमादरात् ।
न काङ्क्षति स्मेति महाहितैषिणो निरास्थदत्रैकपदे खिलान्सतः ॥९०॥

परन्तु सर्कार भारतवासियोंको समान भागीदार आदरपूर्वक माननेको तैयार नहीं इसीलिये सर्कारने इन हितैषियोंको क्षण भरमें फेंक दिया ॥९०॥

जयप्रकाशं बहुलान्परानपि ग्रहीतुकामं सितशासनं महत् ।
प्रतीयते व्यग्रमिव प्रतिक्षणं सुहृज्जने हन्त भृशायतेस्य रुट् ॥९१॥

श्रीजयप्रकाश नारायण और अन्य अनेकोंको पकड़नेकेलिये यह विशाल अंग्रेजी राज्य क्षणक्षण व्याकुल प्रतीत हो रहा है। दुःखकी बात है कि अपने मित्रों पर ही इसका क्रोध बढ़ रहा है ॥ ९१ ॥

जयप्रकाशग्रहणाय शासनं सहस्रमुद्रं दश पारितोषिकम् ।
अजूघुषद्दातुमवापयेत तं य एव तस्मै प्रियशासनाय तत् ॥९२॥

श्री जयप्रकाश नारायणको पकड़नेके लिये सर्कारने दस हजार रुपये इनाममें देनेकी घोषणाकी है। जयप्रकाशको जो पकड़ा देगा—मिलादेगा वह तो सर्कारका प्रियपात्र बनेगा और उसीको वह पारितोषिक मिलेगा ॥९२॥

तदीयसिद्धान्तमहं समर्थये न सर्वथा किन्तु परा तपस्विता ।
निजस्य देशस्य हिताय संततं विलोक्यते सूक्ष्मदृशास्य सा मया ।।९३।।

जयप्रकाश नारायणके सिद्धान्तका सर्वथा समर्थन नहीं करता परन्तु अपने देशके हितकेलिये वह कितनी तपश्चर्या कर रहे हैं, इसको मैं सूक्ष्मदृष्टिसे देखा करता हूँ ।। ९३ ।।

अपप्रथद्यानगुणान्मनोहरे प्रिये च तस्मिन्बत तान्विचारयन् ।
प्रवक्तुमेतद्वचनं समुत्सहे समे स्वदेशप्रियतां विवृण्वते ।।९४।।

उस मनोहर और प्रिय जयप्रकाशमें जिन दोषोंकी आपने घोषणाकी है उनको विचार करनेसे यह कहनेका साहस करना पड़ता है कि "स्वदेशानुराग तो सभी प्रकाशित करते हैं" ।। ९४ ।।

विदेशिनां शासनमत्र कर्हिचिन्न शक्यते सोढुमनेन तद्विदा ।
इदं मते ते स्खलनं प्रतीयते मतं महद्गौरवमेव चापरैः ।।९५।।

वह विद्वान् आदमी हैं । परदेशियोंका शासन यहाँ वह सहन नहीं कर सकते । यह काम आपके मतसे अपराध है और अन्योंके मतसे बहुत बड़े गौरवकी बात है ।। ९५ ।।

अकिंचनानां भरणार्थमुद्यतो वितीर्णकोटित्रयरौप्यमुद्रकः ।
स चार्खसंघोपि निपातितः क्षणादनार्यवर्येण कुशासनेन ह ।।९६।।

गरीबोंके पालन पोषणकेलिये जो चरखासंघ सदा तैयार है और जिसने तीन करोड़ रुपये ग़रीबोंको बाँटे हैं उसे भी इस दुष्ट राज्यने क्षण भरमें नष्ट कर दिया ।। ९६ ।।

तदाधिपत्यं दधतं सहापरैः सहायकैर्जाजुमहोदयं तदा ।
निगृह्य काराभवने ह्यतिष्ठिपद्दुरन्तमेतत्तव शासनं हतम् ।।९७।।

उसी समय उसके-चर्खासंघके सभापति श्रीजाजूजीको भी उनके अन्य सहायकोंके साथ पकड़कर जेलमें आपकी दुष्ट सर्कारने रख दिया ।।९७।।

सभाधिकारस्थितचार्खकेन्द्रकः समूह आनायि निजाधिकारिताम् ।
सितेन तत्क्रौर्यमनिन्द्यकीर्ति कैर्जनैर्विकर्मापि च तद्विनिन्दितम् ॥९८॥

महासभाके अधिकारमें जितने भी चर्खा केन्द्र थे सबको सर्कारने अपने कब्जेमें ले लिया। प्रतिष्ठित सज्जनोंने इस क्रूरता और दुष्ट कर्मकी खूब निन्दा की ॥ ९८ ॥

महाधिकारिप्रमुखाः ससाधनं करोतवस्त्राद्यदहन्सितेरिताः ।
तथा कुमाराप्पियसंघकेपि तैः कृतं नराकार्यमिदं घृणास्पदम् ॥९९॥

बड़े बड़े अधिकारियोंने अंग्रेजोंके कहनेसे हाथके बुने हुए वस्त्र ( खादी ) को तथा उसके साधन चर्खा आदि जला दिये। इसी प्रकार श्री कुमाराप्पाके संघमें भी अमनुष्योचित निन्दनीय कार्य उन्होंने किये ॥ ९९ ॥

मुनिर्विनोबा स्वयमेव सांस्थिको बहुक्रियाकर्तृजनप्रणेतृकः ।
सहायकास्तस्य समे च सोधुनाधिबन्दिशालं क्षपयन्ति शर्वरीः ॥१००॥

मननशील विनोबा स्वयं एक संस्थारूप हैं तथा अनेक कार्यकर्ताओं-को पैदा करनेवाले हैं। वह भी अपने साथियों के साथ जेल में रात्रियाँ बिता रहे हैं ॥ १०० ॥

यदीदमुद्वेजकमाहितं भवेन्न शासनेनात्र विकर्म दुःखदम् ।
विलोकितं स्याज्जनतोपकारकं युधोपि वेगप्रदमेव किंचन ॥१०१॥

यदि सरकार दुःखद और व्याकुल करनेवाले इस दुष्ट कर्म को न करती तो जनताके उपकारकेलिये और युद्धको वेग देनेकेलिये कुछ किये गये कार्य को देखती ॥ १०१ ॥

यथा विहारे पृथिवीनिघानिघक्षणे स राजेन्द्रमहाशयोकरोत् ।
जनस्य सर्वस्य सहायतां तथा स्थिते समीके विदधीत तां ध्रुवम् ॥१०२॥

बाबू श्रीराजेन्द्रप्रसादजी ने जिस प्रकार बिहार में पृथिवी जब ऊँचे नीचे हो रही थी अर्थात् जब भूकम्प हुआ था तब सबलोगों की सहायता

की थी वैसे ही इस वर्तमान युद्धमें वह अवश्य सहायता करते ॥ १०२ ॥

यथा महाभीषणवारिसंप्लवे स गुर्जरेष्वारचयच्च वल्लभः ।
सहायतां सर्वशरीरिणां तथा तवापि युद्धे रचयेत्सतां मतः ॥१०३॥

जिस प्रकारसे श्रीवल्लभभाईने गुजरातमें महाभयङ्कर बाढ़ आनेपर सबकी सहायता की थी वैसे ही आपकी सहायता भी वह इस युद्ध में करते ॥ १०३ ॥

इति यतिवर उद्धैः सत्प्रयत्नैर्विधाय,
प्रतिपदमतिशुद्धं बोधिबोध्यं समाधिम् ।
सितपतिनरतर्क्यप्रश्नसंभारकस्य,
प्रतिदिनमभिलग्नो देशकल्याणसिद्धौ ॥१०४॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
द्वितीयः सर्गः

इस प्रकार से प्रशंसनीय प्रयत्नों द्वारा, समझदार समझ सकें ऐसा शुद्ध जवाब सरकारके आदमियोंके प्रश्नोंका देकर स्वयं देशके कल्याणमें प्रतिदिन संलग्न रहते थे ॥ १०४ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
द्वितीयः सर्गः



# तृतीयः सर्गः

उपोषणप्रवृत्तस्य मोहनस्य सतीशिखा ।
सेवायां निरता पत्नी कस्तूराम्बा प्रतिक्षणम् ॥ १ ॥

जब श्री महात्माजी आगाखाँमहलमें उपवास कर रहे थे उस समय सतीशिरोमणि श्री कस्तूर बा उनकी सेवामें सदा लगी रहती थीं ॥ १ ॥

दयनीयां दशां दृष्ट्वा तदानीं श्रीमहात्मनः ।
शोकातुराभवत्सद्यो हृद्रोगेण पराजिता ॥ २ ॥

उस समय महात्माजीकी करुण दशा देखकर वह बहुत शोकातुर थीं और तबसे उन्हें हृदयरोग हो गया ॥ २ ॥

उपवासे समाप्तेऽसौ महात्मा स्वास्थ्यमाभजत् ।
कथञ्चित्सापि निःशोका समजायत बन्दिनी ॥ ३ ॥

उपवास पूरा होनेपर श्री महात्माजी स्वस्थ बने और तब श्री कस्तूरबा भी किसी-किसी तरह शोकसे छुटकारा पायीं ॥ ३ ॥

परं तस्याः स हृद्रोगो वृद्धिमेव शनैः शनैः ।
अभजत्क्षीणकायायाः सत्यप्रियाया भयङ्करः ॥ ४ ॥

परन्तु उनका शरीर क्षीण होने लग गया था और वह भयङ्कर रोग धीरे-धीरे बढ़ता ही गया ॥ ४ ॥

श्रुतिश्रुतिग्रहब्रह्ममितेऽब्दे यैशवे सती ।
फेब्रुवर्याश्च सप्ताहे सान्तिमेतीव पीडिता ॥ ५ ॥

१९४४ ई० के फर्वरी महीनेके अन्तिम सप्ताहमें वह बहुत पीड़ित हुईं ॥ ५ ॥

सुशीला श्रीमती वैद्या मनुगांधिः कुमारिका ।
श्रीमज्जयप्रकाशस्य धर्मपत्नी प्रभावती ॥ ६ ॥

श्रीमीरा गिल्डरः श्रीमान् स्वयं बापू च सर्वदा ।
अम्बाया नियता आसन्परिचर्य्यापरायणाः ॥ ७ ॥

श्री० डाक्टर सुशीला, श्री० कुमारी मनुगांधी, श्री जयप्रकाशनारायण-की धर्मपत्नी श्री प्रभावती, श्री मीराबहिन, श्री० डाक्टर गिल्डर और स्वयं श्री महात्माजी बाकी सेवामें नियुक्त थे ॥ ६-७ ॥

जगदम्बा महावृद्धा विषमज्वरपीडिता ।
असह्यां वेदनां यद्वा तद्वा शान्त्या व्यषोढ सा ॥ ८ ॥

बाका शरीर वृद्ध था। निमोनियाँसे पीड़ित थीं। उस असह्य वेदनाको जैसे-तैसे वह सहन करती थीं ॥ ८ ॥

बन्दिशाला सितं राज्यं युद्धकालश्च शत्रुता ।
बन्धनानि बहून्यासन्संचेतुमगदादिकम् ॥ ९ ॥

जेलखाना, अंग्रेजी राज्य, युद्धका समय ( सत्याग्रह ) अंग्रेजोंके मनमें शत्रुता, यह सब बहुतसे बन्धन थे दवा, डाक्टर आदि इकट्ठा करनेमें ॥ ९ ॥

येन केन प्रकारेण संचिता औषधादयः ।
उपचारश्च संजातः श्रीमदम्बाज्वरापहा ॥ १० ॥

किसी-किसी प्रकारसे डाक्टर, वैद्य, औषधि सब प्राप्त हुए और बा-के ज्वरको दूर करनेके लिये उपचार भी हुआ ॥ १० ॥

आनर्थक्यं परं जातं कोप्युपायः पफाल नो ।
सर्वङ्कषं हि दैवस्य को बाधेत समीहितम् ॥ ११ ॥

परन्तु सब निरर्थक हुआ। कोई भी उपाय फलीभूत नहीं हुआ। सच है, ईश्वरकी इच्छा सबसे बलवती है, उसे कोई रोक नहीं सकता ॥ ११ ॥

निद्रा च नयने त्यक्त्वा मनः शान्तिर्विहाय च ।
गते एव समस्तायां तनौ व्याकुलतावृधत् ॥ १२ ॥

निद्रा आँखें छोड़कर चली गयी। शान्ति मनको छोड़ गयी। सारे शरीरमें व्याकुलता बढ़ गयी ॥ १२ ॥

न्युमोनिया जन्तुचयो ववृधे परितोम्बिकाम्।
ततस्तत्र यतीशस्य स्थितिर्नेष्टा भिषग्मते ॥ १३ ॥

बा के चारोंओर न्युमोनियाके जन्तु बहुत बढ़ गये थे। महात्माजीको उन जन्तुओंका संसर्ग न होने पावे, इस दृष्टिसे डाक्टर चाहते थे कि वह बाके पास बहुत न आवें ॥ १३ ॥

द्वाषष्टिं शरदो यावद्या छायेव व्यतिष्ठत।
सविधे सर्वदा तस्याः सांनिध्यं स कथं त्यजेत् ॥ १४ ॥

६२ वर्षोंतक जो बा उनके साथ छायाके समान रही हैं उनका सांनिध्य वह कैसे छोड़ सकते थे ? ॥ १४ ॥

हस्ते कृत्वा स्थिता नाडीमम्बिकाया महाभिषक्।
सुशीला दिवसं यावत्तद्व्यथाविह्वलान्तरा ॥ १५ ॥

डाक्टर सुशीला सारे दिवस बाकी नाड़ीपर हाथ रखकर, व्याकुल होकर बैठी थीं ॥ १५ ॥

रोगाक्रान्ता महादेवी नैर्बल्येन समन्विता।
तदानीं कोपना भूता सा शान्तापि स्वभावतः ॥ १६ ॥

उस समय बा रोगाक्रान्त थीं, निर्बलता बढ़ गयी थी अतः वह यद्यपि शान्तस्वभावकी थीं तथापि क्रोधवाली हो गयी थीं ॥ १६ ॥

महात्मा स्निग्धया वाचा तस्याः पार्श्वे स्थितोऽब्रवीत्।
शान्ता भव जहि क्रोधं रोगवृद्धेर्हि कारणम् ॥ १७ ॥

महात्माजी उनके पास बैठकर मधुर वचनसे बोले कि तुम क्रोध छोड़ दो, शान्त बनो। क्योंकि क्रोध अवश्य ही रोग बढ़ावेगा ॥ १७ ॥

अन्तरेण प्रकोपेण स्थिरा त्वं न भवेद्यदि।
तत्क्रुध्य मह्यमेव त्वं स्थिताय तव सन्निधौ ॥ १८ ॥

यदि तुम क्रोधके बिना स्थिर नह रहीं सकती हो तो मैं तुम्हारे पास बैठा हूँ। मेरे ऊपर क्रोध करो ॥ १८ ॥

आरभ्य ह्यस्तनात्कालात्त्वमभू रामपरायणा ।
तेन बाद्य ममात्यन्तमन्तरात्मा प्रसीदति ॥ १९ ॥

कलहसे तुम रामनाम जपने लग गयी हो इससे बा ÷ मेरा अन्तरात्मा अत्यन्त प्रसन्न हो गया है ॥ १९ ॥

हृदये रामनामैव समङ्कय सुखिनी भव ।
तदेव परमं दिव्यमौषधं रोगनाशनम् ॥ २० ॥

हृदयमें रामनामको अंकित करके तुम सुखी बनो। रामनाम ही रोगनाशक दिव्य औषध है ॥ २० ॥

जीवयिष्यति रामश्चेज्जीविष्याव: शतं समाः ।
अनुसृत्यान्यथा तस्य कामं गन्तास्व आदरात् ॥ २१ ॥

यदि राम जिलावेगा तो हम १०० वर्ष तक जीवेंगे, नहीं तो उसकी इच्छाका अनुसरण करके आदरसे चले जायँगे ॥ २१ ॥

अन्येन प्रेरितो रोगी सेवते सर्वमौषधम् ।
दुःखितोपि निराशोपि न स्वयं तत्समीहते ॥ २२ ॥

रोगीको जब कोई अन्य प्रेरणा करता है तभी वह औषध सेवन करता है। वह भले दुःखी हो, निराश हो परन्तु स्वयं दवा नहीं चाहता है ॥ २२ ॥

इदानीं त्वामहं वच्मि संत्यक्तुं सर्वमौषधम् ।
दधाना स्वं मनो रामे सर्वमेवाद्य विस्मर ॥ २३ ॥

मैं तुम्हें अब कहता हूँ कि सब औषधि छोड़ दो। राममें अपने मनको लगाकर सब कुछ भूल जावो ॥ २३ ॥

---

÷ बाको महात्माजी भी बा ही कहते थे।

पुत्रान्सम्बन्धिनोन्यान्वा यत्किञ्चिद्वस्तु वा प्रियम् ।
विस्मृत्य निखिलं कृत्स्नं मा त्वं स्मार्षीर्ममापि वा ॥ २४ ॥

पुत्रोंको, अन्य सम्बन्धियोंको अथवा किसी प्रिय वस्तुको, सब कुछ सम्पूर्ण भूलकर मुझे भी भूल जावो ॥ २४ ॥

भ्रमणाय बहिर्गन्तुं महात्मानं समुद्यतम् ।
उपदेशसुधापानतृप्ता सा तं न्यवर्तयत् ॥ २५ ॥

बापूजीके उपदेशरूप अमृतपानसे तृप्त होकर, भ्रमणके लिये बाहर जानेको जब बापूजी तैयार हुए, तो बाने रोक दिया ॥ २५ ॥

तत्पर्यङ्के सनीडेसौ तस्याः शान्त्या ह्युपाविशत् ।
सुप्ता क्रोडे शिरस्तस्य निधाय परमेश्वरी ॥ २६ ॥

महात्माजी बा के पलंगपर बाके पास शान्तिसे बैठ गये तथा बा उनके गोदीमें सिर रखकर सो गयीं ॥ २६ ॥

स्नानार्थं च तदा बापू गतवाञ्छोकसंकुलः ।
सुशीला श्रीमदम्बायाः सन्निधानमसेवत ॥ २७ ॥

बापूजी शोकातुर बने थे । स्नानके लिये गये । डाक्टर सुशीला बाके समीपमें बैठ गयीं ॥ २७ ॥

तस्या अङ्केपि सा सुप्ता जगन्माता महेश्वरी ।
स्मरन्ती हृदये रामं चक्षुषी संनिमील्य च ॥ २८ ॥

बा डाक्टर सुशीलाकी गोदमें भी सो गयीं । आँखें बन्द करके हृदयमें रामका स्मरण कर रही थीं ॥ २८ ॥

बा पप्रच्छ क्षणेनेति सुशीले मृत्यनन्तरम् ।
क्व गमिष्यामि वस्त्यक्त्वा किं भविष्यति मे ततः ॥ २९ ॥

श्री० बाने तुरन्त ही पूछा कि, सुशीला, मरनेके बाद मैं कहाँ जाऊँगी और उसके बाद क्या होगा ? ॥ २९ ॥

धीरा भव जगन्मातर्मा स्म भूर्दुःखविह्वला।
सर्व एव गमिष्यामः क्रमशो रामधाम तत्॥ ३०॥

बा, आप धैर्य रखें। दुःखसे व्याकुल न बनें। हम सभी क्रमशः आगे पीछे, रामके उस नित्य धाममें पहुँचेंगे॥ ३०॥

न रागो यत्र नो मोहो न शोको न विरोधिता।
परमानन्दसन्दोहं धामाऽस्माकं भविष्यति॥ ३१॥

जहाँ न तो राग है, न मोह है, न शोक है, न विरोध है वह परमानन्द धाम हमारा निवासस्थान होगा॥ ३१॥

जरामरादिरहितं दिव्यदेहमनश्वरम्।
अवाप्य परमानन्दस्वरूपा त्वं भविष्यसि॥ ३२॥

बा, जरा और मरणसे रहित अविनाशी दिव्यदेहको प्राप्त करके आप परमानन्दस्वरूप बनेंगी॥ ३२॥

स्नातुं प्रार्थयितुं देवं श्रीसुशीला बहिर्ययौ।
देवी प्रभावती तत्र समतिष्ठत सेवया॥ ३३॥

श्री डा० सुशीला स्नान और प्रार्थनाके लिये बाहर चली गयीं। श्री प्रभावती देवी सेवाके लिये वहाँ बैठीं॥ ३३॥

नित्यक्रियां समाप्यासौ सुशीला पुनरागमत्।
तत्र प्रभावती याता भोजनाय विषादिनी॥ ३४॥

स्नानादि नित्यक्रिया पूरी करके डा० सुशीला पुनः वहाँ आ गयीं और श्री० प्रभावती देवी भोजन करने गयीं॥ ३४॥

बापू तत्र समायातो दीनशामेहता तथा।
देवदासः समाहूतः सपदि प्राप दुःखितः॥ ३५॥

श्री बापूजी वहाँ आये। डा० दीनशा मेहता आये। श्री देवदास गांधीको बुलाया गया, वह भी दुःखित होकर शीघ्र ही आ गये॥ ३५॥

देवदाससमानीतं गाङ्गेयं वारि निर्मलम् ।
यतिना बामुखे क्षिप्तं चमसेन शनैः शनैः ॥ ३६ ॥

श्री देवदासगांधी गङ्गाजीका जल ले आये थे । बापूजीने उसे बाके मुखमें चमचसे धीरे-धीरे डाला ॥ ३६ ॥

जगदम्बाल्पकालेन निमील्य निजचक्षुषी ।
ईश्वरप्रार्थनां कर्तुं जिह्वां श्रान्तामलोलयत् ॥ ३७ ॥

थोड़ी देरके बाद श्री० बाने आँखें बन्द कर लीं । जीभ थक गयी थी परन्तु ईश्वर-प्रार्थनाके लिये बाने उसे हिलाया ॥ ३७ ॥

कृपालो राम भक्तिं ते प्रेम चापि निरन्तरम् ।
याचेऽस्मिन्नन्तिमेकाले पूरयस्व मनोरथम् ॥ ३८ ॥

श्री बाने प्रार्थनाकी कि. हे कृपालु राम अब तो केवल तेरी भक्ति और तेरा प्रेम ही सतत मुझे चाहिये । इस अन्तिम कालमें यही मांगती हूँ । मेरा मनोरथ पूर्ण करो ॥ ३८ ॥

उदार करुणासिन्धो मया सर्वज्ञ नित्यशः ।
आकण्ठं केवलं भुक्तं पशुवत्तत्क्षमस्व माम् ॥ ३९ ॥

हे उदार, हे दयाके सागर, हे सर्वज्ञ, मैंने हमेशा पशुओंके समान पेट भर-भरकर खाया है । आप मुझे क्षमा करेंगे ॥३९॥

स्वरेण करुणेनाम्बा बापूजीत्यक्षरत्रयम् ।
व्यक्तवातः प्रभावत्या समाहूतो यतीश्वरः ॥ ४० ॥

श्री० बाने करुण स्वरसे "बापूजी" इन तीन अक्षरोंका एकबार उच्चारण किया । अतः प्रभावती देवीने बापूजीको बुलाया ॥ ४० ॥

आजगाम यतीशोऽसौ सपद्येव कृपानिधिः ।
संतस्थे संनिधौ तस्याः शान्तिस्तस्या अजायत ॥ ४१ ॥

दयालु यतिराज शीघ्र ही वहाँ आये और बाके पास बैठ गये । बाको शान्ति हुई ॥ ४१ ॥

किं भवतीति पृष्टा सा न किञ्चिदवबुध्यते ।
इत्युक्त्वोत्थाय तस्याङ्केपप्तदाच्छिन्नजीवना ॥ ४२ ॥

बापूजीने पूछा कि "क्या होता है"? बाने उत्तर दिया "कुछ समझाता नहीं है"। इतना कहकर, उठकर, बापूजीकी गोदमें पड़ गयीं। जीवन टूट चुका था ॥ ४२ ॥

मासे फ्रेबुअरीत्याख्ये सायं द्वाविंशके तिथौ ।
सप्तहोरेत्यजत्प्राणान्पञ्चत्रिंशत्पलाधिके ॥ ४३ ॥

ता० २२-२-१९४४ को सायंकाल ७-३५ बजे बाने शरीरका त्याग कर दिया ॥ ४३ ॥

ख ख खाक्षिमिते संवद्वैक्रमे फाल्गुने शिवे ।
शिवरात्रौ तनुं त्यक्त्वा शिवतां प्रापदम्बिका ॥ ४४ ॥

फाल्गुन मास शिवरात्रिकी रात्रिमें ( २००० वि० संवत् ) शरीर त्यागकर बा कल्याण पदको चली गयीं ॥ ४४ ॥

महादेवस्य सविधे निद्रास्यामीति तद्वचः ।
बभूव सफलं साद्य निद्रास्यति तदन्तिके ॥ ४५ ॥

बा कहती थीं कि मैं तो महादेव भाईके पास ही सोऊँगी। उनका यह वचन सफल हुआ। वह आज उन्हींके पास ही सोवेंगी ॥ ४५ ॥

यतिराजः सुशीला च धर्मशीला प्रभावती ।
पल्पूलनं समादाय शवस्नानमकारयन् ॥ ४६ ॥

श्री महात्माजी, डा० सुशीलाजी, और प्रभावती देवीने साबू लेकर शवको स्नान कराया ॥ ४६ ॥

यतिराजस्वहस्तेन निर्मितैः सूत्रसंचयैः ।
समुतां शाटिकां दिव्यां तत्तनौ पर्यधापयत् ॥ ४७ ॥

महात्माजीने अपने हाथोंसे सूत काता था। उसीकी साड़ी बनाकर

रखी हुई थी। उसी दिव्य साड़ीको बाके शरीर पर धारण कराया गया ॥ ४७ ॥

मश्रूवाला मनुर्देवी कुङ्कुमैरलिपत्तनुम् ।
विशाले भालपटले चान्दनं तिलकं दधौ ॥ ४८ ॥

श्रीमनु मशरूवालाने बाके शरीरपर कुङ्कुमका लेप किया। विशाल मस्तकपर चन्दनका तिलक किया ॥ ४८ ॥

यशस्विनीं मनुः सैव जगदम्बां महासतीम्।
आरार्तिकेन तां धन्यामन्तिमेन समार्चयत् ॥ ४९ ॥

उन्हीं मनु मशरूवालाने महासती जगदम्बाकी अन्तिम आर्तीसे पूजा की ॥ ४९ ॥

श्रीमीरा सुधया दीर्घं चतुष्कं तत्र संव्यधात्।
ओमुत्तरस्यामाशायां दक्षिणस्यां च स्वस्तिकम् ॥ ५० ॥

श्रीमीराबाईने चूनासे एक बड़ा चौक बनाया था। उसमें उत्तर दिशामें ॐ और दक्षिण दिशामें स्वस्तिक बनाया था ॥ ५० ॥

सर्वत्रान्यत्र रामेति व्यलिखत्सा सदक्षरैः।
तदा राममयी सर्वा सर्वैर्भूमिरदृश्यत ॥ ५१ ॥

अन्यत्र सभी जगह सुन्दर अक्षरोंसे उन्होंने "राम" लिख दिया। उस समय सभीने देखा कि पृथिवी राममय हो गयी थी ॥ ५१ ॥

पृथिवीमस्तृणादेकबन्दिशालीयवाससा ।
तस्योपरि महादेव्याः धन्यं शवमशोभत ॥ ५२ ॥

ज़मीन पर जेलखानेकी चादर बिछा दी गयी और उसी पर बन्दी शवको सुला दिया गया ॥ ५२ ॥

आरात्रि तत्र समभूद्गीतापाठः प्रियस्वरैः।
रामनामध्वनिः सर्वं प्रासादं पर्य्यपूरयत् ॥ ५३ ॥

सारी रात मधुर स्वरसे गीता पाठ होता रहा। रामनाम की धुन से सारा आग़ाख़ाँ महल भर गया ॥ ५९ ॥

शवं वेष्टयितुं शुद्धां खादीमानाययत्तदा।
कटेली यतिराजस्य सविधे तामवापयत् ॥ ६० ॥

मि० कटेलीने देहको लपेटनेके लिये शुद्ध खादी मँगायी थी और वह महात्माजीके पास पहुँचायी गयी ॥ ६० ॥

केषामपि दरिद्राणामुपयोगाय सा भवेत्।
इत्युक्त्वा स महात्मा दाहनात्तामरक्षयत् ॥ ६१ ॥

यह खादी किसी ग़रीबके काममें आवेगी ऐसा कहकर महात्माजीने उसे जलानेसे बचवा लिया ॥ ६१ ॥

काष्ठैर्मलयजैः कर्तुं चितां श्रीमद्यतीश्वरम्।
श्रीमती प्रेमलीलासावन्वयुङ्क्त जगाद सः ॥ ६२ ॥

चन्दनकाष्ठसे चिता बनानेकेलिये श्रीमती प्रेमलीला ठाकरशीने श्रीमहात्माजीको पूछा। उन्होंने कहा कि—॥ ६२ ॥

दीनान्दग्धुं वयं शक्ताः काष्ठैर्यदि न चान्दनैः।
कथं धक्ष्यामि तैस्तर्हि दीनदीनस्य भार्यिकाम् ॥ ६३ ॥

जब हम गरीबोंको चन्दनकी लकड़ीसे नहीं जला सकते तो मैं तो गरीबोंसे भी गरीब हूँ, अपनी धर्मपत्नीको चन्दनसे कैसे जलाऊँ ? ॥६३॥

केटली राजपुरुषः प्रोवाच विनयानतः।
छिन्नं तिष्ठति मत्पार्श्वे चान्दनं विटपिद्वयम् ॥ ६४ ॥

श्रीकेटलीने नम्रतासे कहा कि उनके पास चन्दनके दो कटे हुए वृक्ष पड़े हैं ॥ ६४ ॥

यदि तस्योपयोगाय कृपया भक्तवत्सलः।
भवांश्चेदनुजानातु मुदाहं तत्समर्पये ॥ ६५ ॥

यदि आप कृपाकर उसके उपयोगके लिए प्रसन्नतासे आज्ञा दें तो मैं लाकर अर्पण करूँ ? ॥ ६५ ॥

अन्तन्तः शासनेनैव व्यवस्था निखिला इह ।
कर्तव्येति तथा कर्तुं तमाज्ञापयदीश्वरः ॥ ६६ ॥

अन्ततो गत्वा तो सर्कारको ही सब व्यवस्था करनी है, ऐसा कहकर श्रीमहात्माजीने उन्हें वैसा करनेकी आज्ञा दे दी ॥ ६६ ॥

द्वितीयस्मिन्दिनेन्त्येष्टिक्रिया सम्पादिताभवत् ।
श्रोत्रियैर्ब्राह्मणैः श्रौतमार्गेणैव यथायथम् ॥ ६७ ॥

दूसरे दिन श्रोत्रिय ब्राह्मणोंके द्वारा वेदमार्गके अनुसार योग्यरीतिसे अन्त्येष्टि क्रिया सम्पन्न हुई ॥ ६७ ॥

गाँधी जयसुखलालः कनुगांधिस्तथैव च ।
कमलनयनः शान्तिकुमारोरचयच्चिताम् ॥ ६८ ॥

श्रीजयसुखलाल गांधी, श्रीकनुगांधी, श्रीकमलनयन बजाज, श्रीशान्तिकुमारने चिता बनायी ॥ ६८ ॥

प्रथमं वेदविधिना मातुर्देहः प्रपूजितः ।
ततश्चितायां संस्थाप्य यतिर्मन्त्रानवोचत ॥ ६९ ॥

पहले वेद विधिसे बा के शरीरकी पूजा की गयी । पश्चात् चितापर देहको रखकर महात्माजी मन्त्र बोलने लगे ॥ ६९ ॥

सार्धं शवेन तत्रासीत्काचकङ्कणपञ्चकम् ।
संस्थापितं महाभागासौभाग्यं परिचायकम् ॥ ७० ॥

शवके साथ ही चितापर सौभाग्यवतीके चिह्न स्वरूप काँचकी पाँच चूड़ियाँ भी रखी गयीं ॥ ७० ॥

गांधिना देवदासेन चान्दने हि शवासने ।
अग्निराधीयत श्रौतमन्त्रैर्मोहनिना तदा ॥ ७१ ॥

मौहनिः—श्रीमहात्माजीके पुत्र श्रीदेवदासगांधीने वेदमन्त्रोंके साथ चन्दनकी चितामें अग्न्याधान किया ॥ ७१ ॥

देहो दग्धो गता देहसम्बन्धाः सकलास्तदा।
तदाध्यात्मिकसम्बन्धश्चिरं स्थास्यति भूतले ॥ ७२ ॥

देह जल गया। समस्त देहसम्बन्ध भी चले गये। परन्तु उनके साथका आध्यात्मिक सम्बन्ध चिरकाल तक पृथिवीपर रहेगा ॥ ७२ ॥

मयि लीनाभवत्साद्य मदीया चिरसङ्गिनी ।
इत्युवाच महातेजा यतिराजो ययौ ततः ॥ ७३ ॥

"आज वह मेरी चिरसंगिनी मुझमें लीन हो गयी" कहकर महातेजस्वी यतिराज श्रीमहात्माजी वहाँसे चले गये ॥ ७३ ॥

द्वितीयस्मिन्दिने शान्ते चिताभस्मनि संचिते।
पञ्चापि प्रकृतिस्थानि काचानां कङ्कणानि च ॥ ७४ ॥

दूसरे दिन जब चिता ठंडी हुई और भस्म इकट्ठा किया गया तब वह पाँचों ही चूड़ियाँ ज्योंकी त्यों मिलीं ॥ ७४ ॥

न द्रुतानि न भिन्नानि न स्फुटानि च कुत्रचित्।
अद्भुतानि च तान्याप रघुनाथः प्रभावती ॥ ७५ ॥

वह न तो गली थीं, न टुकड़े-टुकड़े हुई थीं न तो कहीं फूटी अथवा तड़की थीं। श्री रघुनाथ और श्रीप्रभावती बहिनको वह मिली थीं ॥७५॥

महादेवो यातः परमयमिनः पङ्कजपद-
द्वयीं सेवित्वासावजरममरं शाश्वतपदम्।
शिवा कस्तूराम्बा यतिपतिगतेनैव सुपथा,
सदा यान्ती तस्मिन्नभवदिह लीना यतिपतौ ॥ ७६ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते

पारिजातसौरभे

तृतीयः सर्गः

श्री महात्माजीकी चरण सेवा करके श्रीमहादेव भाई अजर, अमर, शाश्वत धामको प्राप्त हो गये। परमकल्याणी श्रीकस्तूराम्बा अपने समस्त जीवनमें उसी मार्गसे जाती रहीं, जिससे महात्माजी जाते थे। और अन्तमें वह उन्हींमें लीन हो गयीं ॥ ७६ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञराष्ट्रभाषाटीकायां
तृतीयः सर्गः



# चतुर्थः सर्गः

जयप्रकाशस्य महाप्रिया सती प्रभावती स्वल्पदिनैर्महात्मनः।
वियुज्य सा भागलपूरबन्धनालयं गमिष्यत्यतिदुःखसागरम् ॥ १ ॥

श्रीजयप्रकाश नारायणकी पत्नी श्रीप्रभावती देवी थोड़े ही दिनोंमें महात्माजीसे वियुक्त होकर भागलपूर जेलमें जायँगी जो अत्यन्त दुःखपूर्ण है ॥ १ ॥

वियोगजन्यामविषह्यवेदनां कथं सहिष्ये नु यती यतीश्वरात् ।
विचार्य सैतन्मनसा मनस्विनी गता विषादं न विषादिनी क्वचित् ॥ २ ॥

महात्माजीके पाससे जाती हुई मैं वियोगजन्य असह्यवेदनाको कैसे सहन करूँगी, ऐसा मनमें विचारकर, जो कभी विषाद नहीं करती थीं वह विषादको प्राप्त हुईं ॥ २ ॥

यतीश्वरः प्राह गमस्तव स्थलादितो मनो मेतिदुनोति तत्त्वतः ।
परं गतिस्ते तव लाभदायिनी तपस्विता त्वां परिचारयिष्यति ॥ ३ ॥

बापूजी बोले कि, तुम्हारा यहाँसे जाना मुझे भी दुःखद प्रतीत हो रहा है । परन्तु तुम्हारा जाना तुम्हारे लिये लाभदायक है । अब तपस्विता तुम्हारी सेवा करेगी, अर्थात् अबसे तुम तपस्विजीवन व्यतीत करोगी ॥३॥

इहास्ति किंचिन्न विपत्करं तव प्रसादलाभाय च वस्तु विद्यते ।
समस्तमत्रेति न जीवनं तपस्तपेत्कदापीतितु नास्ति शङ्करम् ॥ ४ ॥

यहाँ कोई दुःख नहीं है । प्रसन्नता—आनन्दकेलिये यहाँ सब वस्तु उपस्थित है । अतः जीवन कभी तपोमय नहीं बन सकता; यह अच्छा नहीं है ॥ ४ ॥

विहाय हर्म्यानुगतं स्वजीवनं प्रपद्य किञ्चिद्विपदन्विते स्थले ।
प्रपत्स्यसे त्वं ह्यनुभूतिसंकरं ततो बलर्धिर्भविता मनस्यलम् ॥ ५ ॥

महलके अपने जीवनको छोड़कर, किसी दुःखमय स्थान में जाकर, तुम अनेक प्रकारके अनुभवोंको प्राप्त करोगी। इससे तुम्हारा मानसिक बल बढ़ेगा ॥ ५ ॥

विहारशास्ता यदि बन्धनालयाद् विमोक्षणं ते विदधातु सत्वरम्।
तदा त्वया किं करणीयमित्यहं न वक्तुमौत्सुक्यमुपाददेऽधुना ॥ ६ ॥

यदि बिहार सर्कार तुमको शीघ्र ही जेलमेंसे छोड़ दे तो तुमको क्या करना चाहिये, यह मैं आज नहीं कह सकता ॥ ६ ॥

न वेद्मि वातावरणं बहिः स्थितं स्थितोत्र काराभवने चिरेण तत्।
बहिर्गतान्यान्मतिशालिनो बहून् जनानुपेत्य स्थितिमाशु संचिनु ॥ ७ ॥

बाहर कैसा वातावरण है, मैं इसे यहाँ जेलमें चिरकालसे रहनेके कारण जानता नहीं हूँ। यदि तुम बाहर जावो—अर्थात् सर्कार तुमको छोड़ दे तो बुद्धिशाली लोगोंके पास जाकर स्थितिको समझो ॥ ७ ॥

भवन्ति ये तत्र च कार्यवाहका भवन्ति मित्राणि च यानि ते तदा।
गृहाण तेषां सुमतिं च संमतिं ततो यथायोग्यमुपास्स्व सत्कृतिम् ॥ ८ ॥

वहाँ जो कार्यकर्ता हैं, जो तुम्हारे मित्र हैं, उनकी सुमति और सम्मति ग्रहण करना। पश्चात् कोई योग्य अच्छा काम करने लग जाना ॥ ८ ॥

ततो विनीता सितराजकिङ्करैस्ततश्च नीता सरला प्रभावती।
पदान्तिकाच्छ्रीमहितान्महात्मनो विहारदेशीयनिबन्धनालयम् ॥ ९ ॥

उसके पश्चात् अंग्रेज सर्कारके नौकर विनीत और सरला श्री प्रभावती बहिनको महात्माजीके पूज्य चरणोंकी संनिधिमेंसे भागलपुर ले गये ॥९॥

समुद्रवेदग्रहसर्वदेवतामिते खिरिस्तीयमते हि वत्सरे।
चतुर्थमासे द्विदशे तिथौ स्वसा प्रभावती श्रीयतितो व्ययुज्यत ॥१०॥

तारीख दो, अप्रैल महीना और उन्नीस सौ चौवालीस ई० सन्में प्रभावती बहिन श्रीमहात्माजीसे अलग की गयीं ॥ १० ॥

ततस्तृतीयेऽहनि देवतात्मको मलेरियाख्येन गदेन पीडितः।
महात्मवर्यः सहसा ततः शनैः शनैर्बभूवातिकृशोऽतिदुर्बलः ॥११॥

तीसरे दिन ता० १४–४–१९४४ ई० को महात्माजीको अकस्मात् मलेरिया हो गया और उससे धीरे-धीरे वह बहुत कृश अत एव निर्बल हो गये ॥ ११ ॥

दिने च षष्ठेऽवदद्देष नायकः पियारलालं मनुगांधिरेषिका।
इहागमद्वापरिचर्यया गता विहाय साऽस्मात्परिचारिका निजाः ॥१२॥

छठे दिन ता० २०–४–४४ ई० को महात्माजी श्रीप्यारेलालजीसे कहने लगे कि यह मनु गांधी तो बा की सेवाकेलिये यहाँ आयी थी। बा तो सब अपनी परिचारिकाओंको छोड़कर चली गयी ॥ १२ ॥

न सेवितुं मामिह सा समागता निरीक्ष्यतेऽस्या न ततः प्रयोजनम्।
ततश्च तस्या गमनं हितप्रदं प्रतीयते मे हृदयेऽनुपश्यतः ॥१३॥

वह मेरी सेवाके लिये तो आयी ही नहीं थी अतः अब उसका यहाँ प्रयोजन नहीं देख रहा हूँ। मैं मनमें विचार करता हूँ तो उसका यहाँसे जाना ही हितकारक मालूम होता है ॥ १३ ॥

विचारितं पूर्वतरं मया पुनः स्थितेह सा स्याच्च मयैव पाठिता।
परं रुजा क्षीणमना भवन्नहं तथा न कर्तुं क्षमतां दधेऽधुना ॥१४॥

बहुत पहले मैंने विचार किया था कि वह यहाँ रहे और मैं ही उसे पढ़ाऊँ। परन्तु इस रोगसे मेरा मन कमजोर हो गया है अतः अब मैं उसे पढ़ानेमें असमर्थ हूँ ॥ १४ ॥

इहावहद्गर्वमहं मलेरिया न मत्समीपेऽपि समागमिष्यति।
गतो मदो मे मनसाऽबलोऽभवं सदैव सा निर्बलमेव बाधते ॥१५॥

मुझे गर्व था कि यहाँपर मलेरिया ज्वर मेरे पास भी नहीं आवेगा। परन्तु मेरा मद चला गया। मैं मनसे कमजोर बन गया। कमजोर ही मलेरियासे हैरान होता है ॥ १५ ॥

मनो हि यस्यास्ति नियन्त्रितं परं रुजा विहीनं च कदाप्यसौ न हि ।
निरामयत्वाच्च्युतिमेत्य संपतेद्रुदाधिकारे सहसा महाबलः ॥१६॥

जिसका मन नियन्त्रण में रहता है और जो सदा रोगरहित रहता है वह कभी भी नीरोग दशासे गिरकर रोगके अधिकारमें अकस्मात् नहीं आ पड़ता ॥ १६ ॥

अहं समुन्नम्य पतन्निवास्मि तन्मदीयचेतो विकलं भवत्यलम् ।
दशामदम्यां मनसो ममाद्य नो विदन्ति केचित्सहवासिनो जनाः ॥१७॥

मैं ऊँचे जाकर नीचे गिर रहा हूँ, ऐसा मुझे मालूम होता है। अतः मेरा मन अत्यन्त विकल रहता है। मेरे मनकी आज अदम्य दशाको मेरे कोई सहवासी नहीं जानते हैं ॥ १७ ॥

सुशीलयोचे न किमप्यहीयत क्विनाइनेनैव निपातितो भवान् ।
दिनेषु गच्छत्सु भवच्छरीरगं बलं मनोप्याशु करिष्यते बलि ॥१८॥

डा० श्रीसुशीलाने कहा कि कुछ भी नहीं घटा है। क्विनाइन ने आपको इस तरह नीचे गिरा दिया है। कुछ दिनोंमें जब आपके शरीरमें बल आ जायगा तो आपके मनको भी बलवान् बनावेगा ॥१८॥

वरं शरीरं नबलं भवेत्परं मनोयमं सन्दधदत्र नो यतिः ।
रुजा समाक्रान्त इहास्तु संततं मतिर्मदीयेति मनस्यपुष्यत ॥१९॥

भले शरीर निर्बल हो जाय परन्तु मेरे मनमें सदा यह विचार परिपक्व बना है कि जो संयमी पुरुष मनका संयम रखता है उसपर रोगका आक्रमण नहीं होना चाहिये ॥ १९ ॥

मनोरितः स्यात्परिवर्तिता पुनर्निबन्धशालेति विमुक्तिरस्त्विति ।
इयेष बापू परमश्रुजाह्नवीर्मनोर्न्यषेधीत्स्तगितं च तत्ततः ॥२०॥

महात्माजीकी इच्छा थी कि मनुगांधीकी फिरसे जेल बदली कर दी जाय अथवा वह छोड़ दी जाय। परन्तु मनु बहिनके आँसुओंने

महात्माजीको ऐसा करनेसे रोका, और इसलिये यह विचार स्थगित रहा ॥ २० ॥

अहन्यहन्यस्य शरीरमातुरं क्षणं क्षणं क्षीणबलं बभूव तत्।
सिताधिकारिष्वपि चिन्तया कृतं पदं स्वकीयं सकलेषु सर्वथा ॥२१॥

महात्माजीका शरीर प्रतिदिन और प्रतिक्षण निर्बल होता जा रहा था अतः सभी अंग्रेज अधिकारियोंके मनमें चिन्ता पैदा हो गयी ॥ २१ ॥

विधानचन्द्रोपि समाजगाम तं परीक्षितुं वङ्गभुवो यतीश्वरम्।
महाभिषक्तस्य च संमतिश्रवात्सिताङ्गचेतश्चलितं हि चिन्तया ॥२२॥

बङ्गालसे डॉक्टर विधानचन्द्रजी बापूकी परीक्षा करने आये। उनकी संमतिको सुनकर अंग्रेजोंका चित्त चिन्तासे विचलित हो गया ॥ २२ ॥

उवाच भण्डारिमहाशयो यतिं भवस्थितिः स्यात् परिवर्तिता भवेत्।
स्थले क्वचिद्योग्यतमे भवत्कृते विचार्यते शासनसूत्रधारिणा ॥२३॥

श्री भण्डारीने आकर महात्माजीसे कहा कि आपकेलिये किसी योग्यतम स्थानमें आपके स्थान परिवर्तनके विषयमें सर्कार विचार कर रही है ॥ २३ ॥

उवाच दीनार्तशिरोमणिस्तदा व्ययो महानत्र धनस्य जायते।
मदर्थमेतेन च रोचतेद्य मे स्थलान्तरं गन्तुमितस्तदिच्छया ॥२४॥

दीन-दुखियोंके शिरोमणि महात्माजीने कहा कि यहाँपर मेरे लिये धनका बहुत बड़ा व्यय हो रहा है अतः दूसरे स्थानमें सर्कारकी इच्छासे ही जाना मुझे पसन्द है ॥ २४ ॥

इतो महादेव इतोच्युतां गतिं ययावितो बा पुनरच्युताश्रयम्।
ततो भिया बाधितमेव शासनं विचारयत्यद्य ममान्यतो गतिम् ॥२५॥

फिर वह बोले, यहाँसे ही महादेव वैकुण्ठवासी बने और यहाँसे ही बा भी परधाम गयीं। अतः सर्कार भयके मारे ही मेरा अन्यत्र जाना विचार रही है ॥ २५ ॥

परं स्थलं चैतदतीव मे प्रियं प्रियौ मदीयौ वसतोत्र शाश्वतम् ।
विहाय तावन्न गतिर्न रोचते कथंचनाप्यद्य हि मेतिरोगिणे ॥२६॥

परन्तु मुझे तो यह स्थल अत्यन्त प्रिय है । मेरे दो प्रियजन यहाँ ही सदाकेलिये निवास करते हैं । मैं अतिरोगी हूँ तो भी उन दोनोंको यहाँ छोड़कर जाना मुझे किसी प्रकार भी अच्छा नहीं लगता है ॥ २६ ॥

जहत्यसौ बा जगदीयुषी परं प्रभोर्महाधाम परं च तेन मे ।
मनोतितुन्नं हृदयं स्फुटत्कथंचिदेव संरक्षितमायुषो बलात् ॥२७॥

बा तो इस जगत्को छोड़ती हुई प्रभुके परम धाममें पहुँच गयी हैं । परन्तु उससे मेरा मन बहुत व्यथित है । फटते हुए हृदयको किसी प्रकार आयुष्यके बलसे बचा रखा है ॥ २७ ॥

इदं तु सत्यं परमोत्तमां मृतिं गता हि सा तेन न शोच्यतां गता ।
परं वियोगानल इष्टबान्धवान्दहत्यजस्रं नियतेति पद्धतिः ॥२८॥

यह तो सत्य है कि बा अत्युत्तम मृत्युको पायी हैं । अत एव वह शोक करने योग्य तो नहीं ही हैं । तथापि वियोगाग्नि इष्ट बन्धुओंको जलाता ही है, यह नियत मार्ग है ॥ २८ ॥

सदेहनीयापि मयेहिता मृतिर्न तादृशी प्रार्थय ईश्वरं सदा ।
बहिर्नयाश्वेव सजीवितं च मां परं क्रियाक्षेत्रमवापय प्रभो ॥२९॥

यद्यपि बा का मरण आदर्श मरण था । वह सब सत्याग्रहियोंकी इच्छा का विषय होना चाहिये; तथापि मैंने उसकी इच्छा नहीं की है । मैं तो भगवान्से सदा प्रार्थना करता हूँ कि मुझे जीता ही बाहर शीघ्र ले जा और मुझे कार्य करनेकेलिये क्षेत्र भी प्राप्त करा ॥ २९ ॥

रुजार्दितोस्माद्यदि बन्धनालयाद्व्रजेद्बहिः कोपि सदाग्रही भवन् ।
अवश्यमेतद्धृदयव्यथाकरं भवेत्सदा तस्य मनो विलज्जितम् ॥३०॥

यदी कोई आदमी सत्याग्रही होकर, रोगसे पीड़ित होकर इस जेलसे

बाहर जाय तो अवश्य ही यह बात उसके हृदयको दुःखित करेगी और उसका मन सदा लज्जित रहेगा ॥ ३० ॥

गतोपि कारानिलयाद्बहिः पुनः कृतिं करिष्यामि च कां सुशोभनाम्।
परिस्थितिः संकथितास्ति भारते सितास्तुदेयुः सततं सतां सृतिम् ॥३१॥

बाहर जाकर भी मैं क्या अच्छा काम करूँगा ? भारतकी परिस्थिति इस समय अव्यवस्थित हो गयी है। अंग्रेज अच्छे लोगोंके मार्गको पीड़ित करेंगे ॥ ३१ ॥

हठादिदं शासनमुद्यतं भवेद्विमोक्तुमस्मान्यदि बन्धनालयात्।
कृतं तदास्माभिरिहास्तु किं पुनर्न काशते कोपि च मार्ग ऊर्जितः ॥३२॥

यदि यह सर्कार हमको हठसे छोड़ ही दे तो हम क्या कर सकते हैं ? कोई भी सुन्दर मार्ग नहीं दीख रहा है ॥ ३२ ॥

स पञ्चमे मासि च पञ्चमे तिथौ सहैव सर्वैरनुयायिभिर्विभुः।
चकार कर्णे निजमुक्त्युदन्तकं दिनावसाने व्यथितो यतीश्वरः ॥३३॥

तारीख पाँच मई १९४४ को दिनान्तमें श्री महात्माजीने सारे अनुयायियोंके साथ अपने छूटनेका समाचार दुःखके साथ सुना ॥ ३३ ॥

मनुर्महादेवसमाधिमन्वहं समेत्य कस्तूरसमाधिमप्यथ।
सकम्पमभ्यर्थयते स्म मा स्म भूद्वियोगयोगो मुनिपादपद्मतः ॥३४॥

मनुबहिन गाँधी रोज महादेव भाई और श्री-कस्तूर बा की समाधिके पास जाकर प्रार्थना करती थीं कि बापूजीके चरणकमलोंसे कभी वियोग न हो ॥ ३४ ॥

मनोर्महामोदकरो मनोरथोफलत्तदानीं सफलाशिषौ च तौ।
पवित्रभावेण समर्चितो महाजनः फलं यच्छति देवतापि वा ॥३५॥

मनुबहिनका आनन्दप्रद वह मनोरथ सफल हुआ। श्री बा और महादेव भाईका आशीर्वाद भी सफल हुआ। पवित्र भावसे महापुरुष

अथवा देवताकी पूजाकी गयी हो तो वह महापुरुष और वह देवता फल देते ही हैं ॥ ३५ ॥

**निशम्य वृत्तान्तममुं यतीश्वरोभवन्महाव्याकुल एव मानसे ।**
**ववाञ्छ नासौ निजरोगहेतुना स्वमोक्षमद्धा सितवन्दितां वहन् ॥३६॥**

इस छुटकारेके वृत्तान्तको सुनकर महात्माजी हृदयमें अत्यन्त व्याकुल हो गये । क्योंकि अंग्रेजोंके कैदी बने हुए वह अपने रोगके निमित्तसे मुक्ति चाहते ही नहीं थे ॥ ३६ ॥

**महाविपद्ग्रस्त इवावदन्मुनिः शिरश्च मे भ्राम्यति कम्पते तनुः ।**
**बहिर्गते हन्त मयि प्रवत्स्यंति प्रहार आपातत एव वागसेः ॥३७॥**

किसी महाविपत्तिमें फँसे हुएके समान महात्माजी बोले कि मेरा सिर घूम रहा है । शरीर काँप रहा है । बाहर जानेपर पहिले तो बिना विचारके ही लोग मुझपर कटुवचन प्रहार करेंगे ॥ ३७ ॥

**गतः शमोद्य प्रभृति श्रितो मया तटस्थता चापि गतैव मामिका ।**
**अशान्तवातावरणेषु जीवनं कथं कथञ्चित्पुरतः प्रवत्स्यंति ॥३८॥**

यहाँ जो मुझे शान्ति मिली थी वह गयी । मेरी तटस्तथा भी चली गयी । अशान्त वातावरणमें जीवन किसी-किसी प्रकार चलेगा ॥ ३८ ॥

**स रोगशय्यामधिशिश्य आतुरो भवन्प्रतीतस्तत एव योगिराट् ।**
**न विस्मृतं देशहितं न दुःखतो भयस्य बाधास्पृशदप्यमुं न वा ॥३९॥**

वह रोग शय्यापर पड़े थे अत एव आतुरके समान प्रतीत होते थे । वस्तुतः न तो वह देशहितको भूले थे और न दुःखके भयकी बाधाने ही उनका स्पर्श किया था ॥ ३९ ॥

**परेहनि श्रीपतिसंनिभप्रभो विरागरोषो महतां स पूजितः ।**
**अमुच्यत श्वेतमहाधिकारिणा समस्तलोकैकमहासुहृज्जनः ॥ ४०॥**

विष्णु समान कान्तिवाले, राग-क्रोधरहित महान् लोगोंसे पूजित समस्त

लोकके एकमात्र सुहृत् श्री महात्माजी अधिकारियों द्वारा दूसरे दिन ता० ६-५-१९४४ को छोड़ दिये गये ॥ ४० ॥

**गतो महात्मा निजपार्श्ववर्तिभिः समाधिभूमावुभयोर्निजात्मनोः ।**
**समर्च्य सर्वैः कुसुमादिभिः प्रियद्वयीसमाधी न्यवृतद्गलच्चितिः ॥४१॥**

महात्माजी अपने सभी समीपवर्ती जनोंके साथ अपने ही आत्म-स्वरूप दोनोंकी-महादेवभाई और बा की समाधिपर गये । सभीके साथ पुष्पादिसे दोनों प्रियजनोंकी समाधिकी पूजा करके, चेतना शक्ति चली जाती न हो, इस प्रकारसे लौट आये ॥ ४१ ॥

**सर्वे लोका मुदितमनसा शुश्रुवांसो विमुक्ते-**
**वृत्तान्तं तं परमयमिनो गांधिदेवस्य हृद्यम् ।**
**द्रष्टुं स्प्रष्टुं चरणकमले बन्दिशालामुखाग्रे,**
**गांधिर्जीयादितिपदममी नैकवारं जगर्जुः ॥४२॥**

महात्माजीके छूटनेका समाचार सब लोग सुनकर प्रसन्न हो गये । उनके चरणोंके दर्शन तथा स्पर्शके लिये जेलखाने ( आगाखाँ महल ) के आगे ( उपस्थित ) उन लोगोंने "गांधी विजयी बनें" अनेकों बार गर्जना की ॥ ४२ ॥

**स्वास्थ्यं लब्धस्य च यतिपतेः स्वाश्रमं संनिपत्य,**
**सेवाग्रामे हृदय उदगाद्देशकल्याणसिद्धेः ।**
**तस्याकाङ्क्षा पुनरपि ततो देशकालौ विचार्य,**
**भिन्ने भिन्ने पथि परियता कोपि कालोपनिन्ये ॥४३॥**

सेवाग्राममें अपने आश्रममें पहुँचकर स्वास्थ्य सम्पन्न होनेपर पुनः उनके हृदयमें देश कल्याणकी सिद्धि की आकांक्षा उत्पन्न हो गयी । अतः देश, कालका विचार करके उन्होंने भिन्न भिन्न मार्गोंसे चलकर कितना ही समय व्यतीत किया ॥ ४३ ॥

**स्वातन्त्र्यस्य प्रतिदिनमसौ हन्त पुण्यावतारं,**
**कर्तुं यत्नैर्विविधरचनैर्भारते भारतेस्मिन् ।**

वार्तामार्तात्र्यपद्धतिपरो विश्ववन्द्याब्जपादो,
यातः शिम्लां तनितुममितो राजकीयैर्नरैः सः ॥४४॥

स्वतन्त्रताके पवित्र अवतारको शोभायुक्त भारतमें विविध रचनावाले यत्नोंके साथ ले आनेके लिये दीनोंके दुःखहर और विश्ववन्द्य महात्माजी राजकीयपुरुषोंके साथ वार्तालाप करनेके लिये शिमला गये ॥ ४४ ॥

सितानां मानसे जाता जिहासा भारतक्षितेः ।
तस्माद्ब्रिटिशसचिवैर्नियुक्ता आगता बुधाः ॥४५॥

अंग्रेजोंके मनमें भारतको छोड़नेकी इच्छा हो गयी थी अतः ब्रिटिश-मन्त्रियों द्वारा नियुक्त विद्वान् यहाँ आये ॥ ४५ ॥

रसवेदग्रहब्रह्ममिते यैशववत्सरे ।
चतुर्विंशे तिथौ मासे जान्युआरीतिभाषिते ॥४६॥
राजधान्यां महापुर्य्यां तैः सहैव महाबुधः ।
स्वराज्यमार्गशोधाय सेवाग्रामाज्जगाम सः ॥४७॥

ता० २४-१-१९४६ ई० के दिन महानगरी राजधानी दिल्लीमें उन महाविद्वानोंके साथ स्वराज्यके मार्गका शोध करनेके लिये वह सेवा-ग्रामसे गये ॥ ४६ ॥ ४७ ॥

ततश्च पञ्चमे मासे मयीत्याख्ये इयाय सः ।
स्टेफर्ड क्रिप्सं देहल्यां द्रष्टुं प्रष्टुं च किञ्चन ॥४८॥

उससे पाँचवें महीने बाद = मई महीनेमें वह सर स्टेफर्ड क्रिप्सको देखने-मिलने और कुछ पूछनेके लिये पुनः दिल्ली गये ॥ ४८ ॥

स्वरश्रुतिग्रहब्रह्ममिते संवत्सरेऽमिताः ।
नवखल्यां मुसल्माना अनुजग्मुः पिशाचताम् ॥४९॥

१९४६ ई० सन्में अगणनीय मुसलमान नोवाखली ( बंगाल ) में पिशाच लीला करने लग गये ॥ ४९ ॥

हिन्दूनां ते सहस्राणि निजघ्नुर्नरपामराः ।
देहुर्ग्रामांश्च सद्मानि व्यपजह्रुः स्त्रियः शिशून् ॥५०॥

उन पामर मुसलमानोंने हजारों हिन्दुओंको मार डाला । हिन्दुओंके गाँवके गाँव और घर सब जला दिये गये । स्त्रियों और बच्चोंको उठाकर वह ले गये ॥ ५० ॥

जह्रुर्धनानि सर्वेषामाभरणानि राक्षसाः ।
बलाच्छतानि हिन्दूनां स्वमते निन्युरासुराः ॥५१॥

सब हिन्दुओंके धनको मुसलमानोंने चुरा लिया । गहने चुरा लिये । और जबर्दस्तीसे सैकड़ों हिन्दू मुसलमान बना दिये गये ॥ ५१ ॥

इदं सर्वं कृतं दुष्टैः स्वीयसंख्याभिवृद्धये ।
मुसल्मानप्रायदेशे पाकिस्तानपदाप्तये ॥५२॥

उन दुष्टोंने यह सब इसलिये किया कि उनकी तादाद बढ़ जाय और जिस प्रदेशमें मुसलमान् अधिक हैं वहाँ पर पाकिस्तान बन जाय ॥५२॥

तत्र शान्तिविधानाय ययौ सानुचरः प्रभुः ।
वङ्गभूमौ नवाखल्यां चिन्ताचक्रविचूर्णितः ॥५३॥

चिन्ताके चक्रसे चूर्णित होकर श्रीमहात्माजी अपने साथियोंके साथ नवखलीमें शान्ति स्थापनके लिये गये ॥ ५३ ॥

आसीद्वङ्गेषु सर्वेषु मुस्लिमलीगशासनम् ।
कालिकातापुरे तस्माद्विलम्बः कोप्यजायत ॥५४॥

सारे बङ्गालपर मुस्लिमलीगकी हुकूमत थी । अतः कलकत्तेमें थोड़ा सा उन्हें विलम्ब हुआ ॥ ५४ ॥

तत्रत्याश्च मुसलमाना निहन्युश्चेद्यतीश्वरम् ।
महदेव विजायेत तदनिष्टं कलङ्कदम् ॥५५॥
इत्यनुचिन्त्य योगीशः प्रार्थितः सैनिकैः सह ।
तत्र गन्तुं परं श्रीमानस्वीचक्र इदं वचः ॥५६॥

वहाँकी सर्कारने विचार किया कि यदि नोवाखलीके मुसलमान् महात्माजीको मार डालें तो बड़ाभारी कलङ्क देनेवाला अनिष्ट बनाव बनेगा। ऐसा विचारकर सर्कारने महात्माजीसे प्रार्थना की कि वह सरकारी फौजके साथ वहाँ जायँ। परन्तु उन्होंने इस बातको स्वीकार नहीं किया ॥ ५५ ॥ ५६ ॥

**शासनेन ततस्तस्य नवखल्यां न्यरुध्यत ।**
**गमनं यतिराजस्य बभूव तदरुन्तुदम् ॥५७॥**

तब सर्कारने महात्माजीको नोवाखलीमें जानेकी आज्ञा नहीं दी। यह घटना महात्माजीकेलिये बहुत दुःखद बन गयी ॥ ५७ ॥

**अगमनात्परं श्रेयो गमनं सैनिकैः सह ।**
**परामृश्येति धर्मात्मानुमेने शिष्टिनिर्णयम् ॥५८॥**

महात्माजीने विचार किया कि वहाँ सर्वथा न जानेकी अपेक्षा फौजके साथ जाना अच्छा है, अतः उन्होंने सर्कारके निर्णयको मान लिया ॥५८॥

**तच्छासनेन यतिरक्षणकामनेन,**
**संप्रेषिताः स्वपुरुषाः पृतनाः सनाथाः ।**
**तेनैव सार्धमिति सैनिकमानवान्स,**
**कर्षंश्चचाल नरपेव च सार्वभौमः ॥५९॥**

**इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते**
**पारिजातसौरभे**
**चतुर्थः सर्गः**

यतिराजकी रक्षाकी इच्छावाली उस सर्कारने उनके साथ सिपाही और सैनिक तथा सेनापति भेजे। उन सैनिकोंको खींचते हुए महात्माजी एक चक्रवर्ती राजाके समान चले ॥ ५९ ॥

**इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते**
**पारिजातसौरभे स्वोपज्ञराष्ट्रभाषाटीकायां**
**चतुर्थः सर्गः**



चांदपुर
फशीदगंज
कमालपुर २१/२
चरसलादी २३-२
चरकृष्णापुर २२-२
हेमचर २-३-४७
बिशकाधली २०/२
बिरानपुर १९-२
आलुनीआ १८-२
देवीपुर १७-२
रायपुर १४-१६-२
प. केशवा १४-१५-२
पूर्व केशवा १३
काफीलातली १२-२
हेमचंडी ११-२
विजयनगर ९-१०-२
नंदीग्राम ८-२
प्रसादपुर ७-२
धरमपुर ६-२
श्रीनगर ५-२
सादुरखील ३-४-२
वशायरिया २-२
आमीशापाडा १-२-४७
नवग्राम ३१-१-४७
आमकी ३०-१
जयाग २९-१
पांचगांव २८-१
पल्ला २७-१
बांसा २६-१
हीरापुर २५-१
मुराईम २४-१
डाल्टा २३-१
पनीआला २२-१
केथुरी २१-१
शिरन्दी २०-१
अटखोरा १९-१
बादलकोट १८-१
पारकोट १७-१
रामदेवपुर १६-१
नारायणपुर १५-१
भटियालपुर १४-१
कायपाडा १२
शाहपुर १३
लामचर ११-१
जगतपुर १०-१
फतेहपुर ९-१
मासिमपुर ७-१
श्रीरामपुर २-१-४७
चंडीपुर २-१-१
लक्ष्मीपुर
फर्स्ट स्टेज
सेकेण्ड स्टेज
थाना सरहद
० १ २ ३ ४
मील

# पञ्चमः सर्गः

कलिकतात उपेत्य महामतिः सुखितया च विवर्धितचिन्तया ।
यतिपतिर्बत रामपुरे निजां निरचिनोत्कृतिमाकृतिसुन्दराम् ॥ १ ॥

श्री महात्माजीने कलकत्तेसे सुखसे परन्तु चिन्ताके साथ श्रीरामपुर आकर वहाँ ही अपने सुन्दर कार्यका निश्चय किया ॥ १ ॥

अधिसभं यतिराज उवाच तामुपगतां जनतां यतिमीक्षितुम् ।
कथमहं समुपागममत्र तत्प्रणिगदामि भवत्पुरतोखिलम् ॥ २ ॥

सभामें उनके दर्शनकेलिये आयी हुई जनताको उन्होंने कहा कि मैं यहाँ कैसे आया हूँ सो सब आपके समक्ष कहता हूँ ॥ २ ॥

अतितरां पतितान्मनुजानहं गुरुपदं प्रतिनेतुमुपस्थितः ।
उपकुसिष्यति मामभितोमिता सफलतेति न वक्तुमहं क्षमः ॥ ३ ॥

मैं यहाँपर अत्यन्त पतित मानवोंको उच्च पदपर पहुँचानेके लिये आया हूँ । इसमें पूर्ण सफलता चारों ओर मुझे मिलेगी या नहीं, यह मैं नहीं कह सकता ॥ ३ ॥

हृदयतो यसता हि सता शिवं यदि न लभ्यत ईहितमात्मनः ।
किमपि तत्र न लोक्यत ऊर्जितं परिशुचः कटु बीजमथो ह्रियः ॥ ४ ॥

हृदयसे कोई प्रयास करता हो और कल्याणकारी मनोरथकी सिद्धि न हो तो इसमें शोक अथवा लज्जाका कोई बलवान् कारण नहीं है ॥ ४ ॥

सफलतापि च निष्फलतापि च प्रभवतो मितये न कदाचन ।
प्रयतनस्य जनस्य हि कस्यचिन्निरवधिर्ह्यथ सास्तु सहावधिः ॥ ५ ॥

सफलता और निष्फलता यह दोनों चाहे थोड़ी हो, चाहे अधिक हो किसीके प्रयत्नका माप काढ़नेमें असमर्थ है ॥ ५ ॥

प्रयतते यदि कोपि शुभाशयो भवति तत्र गतासुरपव्यथः।
भवतु तज्जगतोस्य च भव्यतामहितमोदसुतोषसुकारणम् ॥ ६ ॥

. यदि कोई आदमी शुभेच्छासे प्रयत्न करता हो और उसमें वह मर भी जाय परन्तु मृत्युका उसे शोक न हो तो उसका मरण समस्त जगत्के आनन्द और सन्तोषका कारण बनना चाहिये ॥ ६ ॥

प्रयतमान उपस्थितकर्मणि प्रयतते सततं विरतोन्यतः।
भवति यत्नगता परिदर्शिता जगति निर्भ्रमतो मिततथ्यता ॥ ७ ॥

यदि कोई आदमी सब ओरसे विरक्त होकर उपस्थित काममें ही सतत प्रयत्न करता है तो उसके यत्नमें रही हुई प्रामाणिक तथ्यता निर्भ्रम रूपसे दिखायी जा सकती है ॥ ७ ॥

परमनिष्ठुरमानसमानवा अचिरतो न भवन्ति दयालवः।
परमयत्नभरः समपेक्षितः फलमनिन्द्यमभीप्सितमाप्स्यते ॥ ८ ॥

अत्यन्त निर्दय मनुष्य जल्दी दयालु नहीं बन जाता। बहुत बड़े यत्नकी वहाँ आवश्यकता है। प्रयत्न करनेपर पवित्र इष्ट फल मिलेगा ही ॥ ८ ॥

भवतु शासननीतिरपीहचेद्धितकरी समभावपरायणा।
फलमनूनमथो परिलिप्सितं भवति हस्तगतं नचिरेण तत् ॥ ९ ॥

यदि सर्कारकी नीति भी हितकारक और समभाव वाली हो तो अवश्य ही शीघ्र ही इष्ट फल मिल जाता है ॥ ९ ॥

जडतया निखिलं यदि हिन्दवो विवशतः परिषोढुमनीहितम्।
कुशलतामनुसन्दधते भवत्ववमतिर्हृदये न विपश्चिताम् ॥१०॥

यदि हिन्दूलोग जड़ताके कारण लाचार होकर अनिष्ट सहन करनेमें कुशल हैं तो विद्वानोंके हृदयमें उनके लिये अपमान नहीं होना चाहिये ॥ १० ॥

इयमसह्यदशा निखिलेष्विह प्रतिगता हृदयेन विचार्यताम् ।
अहमिमां जडतामपरोपि सन्क्षपयितुं क्षम एव न संशयः ॥११॥

आप हृदयसे विचार करें, यह असह्य दशा यहाँ सबमें विद्यमान है । मैं इस जड़ताको अपर=असहाय होकर भी नष्ट करनेमें समर्थ हूँ ॥ ११ ॥

अहमिहायमवापयितुं फलं सुखकरं बहुधैकतरं न हि ।
स्वमथ तोषयितुं ननु केवलं मम समागतिरित्यनुमन्यताम् ॥१२॥

मैं यहाँ अनेक प्रकारका सुफल प्राप्त करानेके लिये आया हूँ, केवल एक ही फलके लिये नहीं । अथवा तो आप यह मान लें कि यहाँ मेरा आना केवल मेरे सन्तोषके लिये ही है ॥ १२ ॥

मम मनोनिहिता परमार्थिका परनिर्हिंसनवृत्तिविरोधिता ।
भवतु सा निखिलैः सुपरीक्षिता सह मयैव नवाखलिभूतले ॥१३॥

मैं यहाँ आया हूँ कि मेरे मनमें जो हिंसाकी विरोधिनी अहिंसाके भाव भरे हुए हैं, लोग मेरे साथ ही उसकी परीक्षा करें ॥ १३ ॥

यदि फलं न लभेहमहिंसया भवतु सा न कदाप्यफलोहिता ।
मम तपो न गतं परिपूर्णतामिति विदन्तु तदा निखिला जनाः ॥१४॥

यदि मुझे यहाँ अहिंसासे कुछ फल न मिले तो यह नहीं समझना चाहिये कि अहिंसा निष्फल वस्तु है । इतना ही मानना चाहिये कि उसके लिये जितनी तपस्या चाहिये, मुझमें पूर्णतया नहीं है ॥ १४ ॥

अहमथापि जवाहरपण्डितः कथयितुं न कदाचन शक्नुवः ।
इह न शासनमिच्छति शाश्वतं शमदमाद्युभयोरपि वर्गयोः ॥१५॥

मैं और पण्डित जवाहिरलालजी कभी यह नहीं कह सकते हैं कि बङ्गाल सर्कार दोनों जातियोंमें शाश्वत शान्ति नहीं चाहती है ॥ १५ ॥

अधिविहारमकुर्महि किं वयं किमकरोदिदमत्र च शासनम् ।
इति विचारणया परिसाधिता भवति चात्मगता लघुता परा ॥१६॥

बिहारमें हमने क्या किया और यहाँकी सर्कारने क्या किया, ऐसे विचारसे केवल अपनी हलकाई ही सिद्ध की जा सकेगी ॥ १६ ॥

विहितमस्तु मयात्मपरीक्षणं यदि जनैः सकलैर्हरिसाक्षिकम् ।
उपकृतिर्बहुधा विहिता भवेज्जगत एव शमाय शिवाय च ॥१७॥

यदि मैं और आप सभी भगवान्‌को साक्षी बनाकर आत्मपरीक्षा करें तो जगत्‌की शान्ति और कल्याणके लिये विविध उपकार किये जा सकते हैं ॥ १७ ॥

अहमुपायमिहाद्य न केवलं मुसलमानगणं परिनिन्दितुम् ।
अपितु हिन्दुजनानपि पीडितान्किमपि वक्तुमथापि विनिन्दितुम् ॥१८॥

मैं केवल मुसलमानोंकी निन्दा करने यहाँ नहीं आया हूँ । प्रत्युत पीड़ित हिन्दुओंकी भी निन्दा करने और कुछ कहने आया हूँ ॥ १८ ॥

किमभवन्नबला इह हिन्दवः क्व गतवद्बलसाहससद्धृति ।
न हि मनोबलमस्ति न दैहिकं बलमिहास्ति विलोकितमैहिकम् ॥१९॥

हिन्दूलोग निर्बल क्यों हो गये हैं ? उनके बल, साहस, धैर्य यह सब कहाँ चले ? न मनोबल है, न शरीरबल है और न अन्य ऐहिक बल है ॥ १९ ॥

हरिजना मुखजानतिशिश्यिरे भुजजनीनुरुजांश्च पराक्रमैः ।
उदयते न हि यावदुदारता द्विजजनेषु न तावदुदेति शम् ॥२०॥

हरिजन = अन्त्यज ब्राह्मणों, क्षत्रियों और वैश्योंसे अच्छे साबित हुए हैं । वह निर्बल नहीं बने हैं । जबतक द्विजातिमें ब्राह्मणों, क्षत्रियों और वैश्योमें उदारता नहीं आती तबतक कल्याणोदय भी नहीं होता ॥२०॥

स्पृशतु नायमिमं न च तं स्पृशत्वयमिति व्यवहार उदस्यते ।
द्विजगणैर्न यदि प्रतियोगिता न हि समेष्यति हन्त कदापि तान् ॥२१॥

यह इसे न छूवे और यह उसे न छूवे यह व्यवहार जबतक ब्राह्मणादि-

कोंके सभी वर्ग नहीं छोड़ेंगे तबतक मुकाबिला करनेकी शक्ति उनमें नहीं आवेगी ॥ २१ ॥

**यदि बलात्प्रतिधर्ममवापिता अवशहिन्दुजना न पुनर्निजम् ।**
**सपदि धर्ममुपेयुररातिता ह्यभिभविष्यति गाढमुभावपि ॥२२॥**

जबर्दस्तीसे मुसलमान बनाये गये हुए हिन्दू यदि फिरसे अपने धर्मको शीघ्र नहीं ग्रहण कर लेते तो दोनों जातियोंमें गाढ़ शत्रुता पैदा होगी ॥ २२ ॥

**निखिलधर्मगता गुरुता समा मम मतास्ति तथैव पुनः पुनः ।**
**उपदिशामि यथोदयमाप्नुयान्मनसि सा परधर्मसहिष्णुता ॥२३॥**

सब धर्मोंमें गुरुत्व समान ही है । ऐसा ही मैं बार-बार सबको उपदेश देता हूँ जिससे कि मनमें परधर्मसहिष्णुता उत्पन्न हो ॥ २३ ॥

**उपदिशेद्यदि कोपि कुमार्गितां परधनाहरणादि च वञ्चनाम् ।**
**स हि भवेदिह निन्द्यतमस्तथा सततमेव जनैः स विहीयताम् ॥२४॥**

यदि कोई कुमार्गमें जानेका, परधन-परदार आदि हरण करनेका और वञ्चना करनेका उपदेश करे तो वह अत्यन्त निन्दनीय है और सदा ही उसका संग छोड़ देना चाहिये ॥ २४ ॥

**भवति धर्मतरुः सुमहान् भवे स च सदैक उदित्य ततः परे ।**
**जनिमवापुरिमे विटपा इवानुगणमत्र पृथक्पृथगेव ते ॥२५॥**

संसारमें महान् धर्मवृक्ष तो एक ही सनातन है । उसीसे दूसरी शाखाएँ निकलकर जन्म पायीं हैं । जैसे वृक्षकी शाखाएँ अलग-अलग हैं परन्तु मूल एक है, ऐसे ही धर्म एक ही है, और शाखाएँ अनन्त हैं ॥२५॥

**न हि कदाप्युचितं परिहाय तं विटपमेकमकारणमन्वितम् ।**
**अपरमाश्रयितुं तत एव मे न मनसेत्र मनागपि रोचते ॥२६॥**

जिसके साथ अपना सम्बन्ध बना हुआ है उस एक शाखाको बिना

किसी कारणके, छोड़कर अन्यको ग्रहण करना कभी भी उचित नहीं है। इसीलिये यह कार्य मुझे तनिक भी रुचता नहीं है ॥ २६ ॥

**मतिविकासमुपेत्य विचार्ययत्तमिह संपरिवर्तयते जनः ।**
**भवति तन्न विषादविधायकं क्वचिदिति प्रथिता हि सतां सृतिः ॥२७॥**

बुद्धिका विकास हो और मनुष्य विचार करके यदि धर्म परिवर्तन करे तो वह कार्य चिन्ताजनक कभी न बने, ऐसा सज्जनोंका प्रसिद्ध मार्ग है ॥ २७ ॥

**भवति धर्मतरो रचनेदृशी न सहते परिवर्तनमल्पकम् ।**
**न निखिला रचना निखिलान्तरग्रहविधौ क्षमतां दधते क्वचित् ॥२८॥**

धर्मवृक्षकी रचना ही ऐसी है कि वह जरा भी परिवर्तनको नहीं सह सकती। सभी रचना सबके अंतःकरणको पकड़नेमें समर्थ नहीं है ॥ २८ ॥

**जनधनासुसुरक्षणहेतवे भविकलाभमपेक्ष्य च कर्हिचित् ।**
**न सुगुणं क्वचिदावहते ततो दुरितमेव च तत्परिवर्तनम् ॥२९॥**

धर्मपरिवर्तन यदि जन, धन, प्राणोंकी रक्षाके लिये यहाँ सांसारिक लाभकी अपेक्षासे किया गया हो तो कभी भी वह अच्छा लाभ नहीं देता है। अतः धर्मपरिवर्तन पाप ही है ॥ २९ ॥

**अभवदत्र जनेषु पिशाचता गतदिनेषु जनैरवलोकिता ।**
**मम नवे वयसि प्रतिवीक्षिता ननु मयैव निरङ्कुशतान्वहम् ॥३०॥**

गत दिनोंमें लोगोंने यहाँ पर जो शैतानियत देखी है उसे तो मैंने अपनी नयी अवस्थामें सदा देखी है ॥ ३० ॥

**यदि तदन्तरवस्थितमेकमप्युपनतं विनतं प्रतिवादितम् ।**
**भवतु तन्त्रमवश्यममुष्य सा ननु हसेद्विमलैव मनुष्यता ॥३१॥**

यदि जनताके हृदयका एक भी नम्र तार मैं बजा सकूँ तो अमुष्य = बंगालकी मनुष्यता हँस उठेगी ॥ ३१ ॥

बहुलतास्त्यधुनापि विलोकिता प्रतिदिनं नरराक्षसतोदितैः ।
अतिकठोरमपि प्रतिवेपते हृदयमत्र न कापि विसंगतिः ॥३२॥

अभी भी यहाँ भारी शैतानियत रोज दिखायी पड़ती है। अत्यन्त कठोर हृदय भी काँप रहा है। इसमें कोई विसंगति नहीं है। हृदयका कम्प स्वाभाविक ही है ॥ ३२ ॥

अहमपृच्छमिहाधिकृतान्बहून्बलवता बलतोबलहिन्दवः ।
स्वमतधर्ममुपेक्ष्य विवर्तिता वदत नेत्यथवोमिति वस्तुतः ॥३३॥

मैंने बहुतसे अधिकारियोंको पूछा है कि यहाँ निर्बल हिन्दुओंको जबर्दस्तीसे अपने धर्मको छुड़वाकर मुसलमान् बना लिया गया है या नहीं ? ॥ ३३ ॥

अपहृता अबला अपि हिन्दवः समभवन्निह ता अपि धर्षिताः ।
धृतमहेशभया बहवोवदन्सकलमेतदभूदिति निश्चितम् ॥३४॥

मैंने पूछा कि यहाँ हिन्दूस्त्रियोंका अपहरण किया गया है ? उन्हें सताया गया है ? ईश्वरसे डरनेवाले बहुतोंने कहा है कि हाँ, यहाँ यह सब अवश्य ही हुआ है ॥ ३४ ॥

किमपि कर्तुमिहाद्य न शक्यते निजबलादपि राजबलादपि ।
विमलधर्मबलाद्यदभीप्सितं निखिलमाप्तुमतः सुकरं भवेत् ॥३५॥

स्वबलसे अथवा सर्कारके बलसे आज यहाँ कुछ नहीं किया जा सकता । पवित्र धर्मके बलसे जो अभीष्ट है सब प्राप्त करना सुगम है ॥ ३५ ॥

विमतयोपहृतानबलाजनानित इतः परिगोपयितुं क्षमाः ।
सुमतिदानसुनीतिसुरीतिभिर्वशयितुं विमतीनिह शक्नुथ ॥३६॥

बदमाश लोग हरणकी गयी स्त्रियोंको इधर उधर छिपा सकते हैं। परन्तु समझानेसे, सुनीतिसे, सुन्दर रीतिसे उन्हें वशमें किया जा सकता है ॥ ३६ ॥

अथ जवाहरलाल इयाय चेदधिविहारधरं त्वरयायुजत् ।
स्वबलमत्र कथं न तथाकरोदिदमिहास्त्यनुयोज्यमनर्थकम् ॥३७॥

और यह पूछना अनर्थक है कि पण्डित जवाहरलालजीने विहारमें जाकर शीघ्र ही अपनी शक्तिका उपयोग किया तो वह यहाँ क्यों नहीं करते ? ॥३७॥

अधिविहारमसौ समुपागमन्नहि कदाप्यधिकारिबलं दधत् ।
भवति भारतसप्रथसेवकस्तत उपेत्य यथामति तद्व्यधात् ॥३८॥

पण्डित जवाहरलालजी विहारमें एक अधिकारीके नातेसे नहीं गये थे । वह तो भारतके प्रसिद्ध सेवक हैं अतः वहाँ जाकर जैसा उचित जान पड़ा, उन्होंने किया ॥ ३८ ॥

भवति वङ्गधरा न विदूषिता व्यजनि यत्र रवीन्द्रमहाकविः ।
अतत बङ्किमचन्द्र इनप्रभो निजयशोभिवितानमनुत्तमम् ॥३९॥

जिस बङ्गालमें महाकवि श्री रवीन्द्रनाथ ठाकुर पैदा हुए और जहाँ सूर्यसमान श्री बङ्किमबाबूने अपनी यश पताका फहराई थी वह बङ्गाल गन्दा नहीं है ॥ ३९ ॥

निजगृहं निजधर्मगृहाणि वा निखिलहिन्दुजना विरहय्य ते ।
परिपलाय्य गता इति नो कृतं मतिमतामनुमोदितवर्तनम् ॥४०॥

सारे ही हिन्दू अपने घर और मन्दिरोंको छोड़कर भागकर चले गये, यह बुद्धिमानोंके योग्य व्यवहार उन्होंने नहीं किया है ॥ ४० ॥

सधृतिभिर्यदि तैर्निजसद्मनो न हि पलाय्य गतैरभविष्यत ।
किमपि चाद्भुतमेव जनैरिह स्वजननीक्षितिगैरकरिष्यत ॥४१॥

यदि धीरज रखकर हिन्दू लोग अपने-अपने घरसे भागकर चले न गये होते तो वह अपनी जन्मभूमिमें रहकर अवश्य ही कुछ अद्भुत कार्य किये होते ॥ ४१ ॥

यदि भवेयुरमी इह मेधिताः समितिरद्भुतबुद्धिभृतां भृता।
विरचिताभवदद्य न सद्धियः कतिपयैः परमत्र विलोकिताः ॥४२॥

यदि वह सभी हिन्दू यहाँ इकट्ठे होते तो अद्भुत बुद्धिमानोंसे भरी हुई एक सभा यहाँ बनायी गयी होती। उस सभामें केवल थोड़ेसे ही विद्वान् न दीख पड़ते ॥ ४२ ॥

न समितेः समितिः कृतकृत्यतां नयति कंचन तेन शमान्विता।
भवति सात्र मयाद्य विधित्सिता परमहो न लभे कृतिकारिणः ॥४३॥

इसीलिये यहाँ शान्ति समिति किसीको समितिकी कृतकार्यता नहीं प्राप्त करा रही है। मुझे वैसी समिति बनाना यहाँ इष्ट तो है परन्तु कार्यकर्ता नहीं मिल रहे हैं ॥ ४३ ॥

शमकृते निखिलैः प्रयतेत तद्भवतु मानभृतः शम एषकः।
भवतु नो पुनरत्र जनासुभिः प्रहसनं रमणं हृदयच्छिदी ॥४४॥

शान्तिके लिये सब मिलकर यदि प्रयत्न करें तो मानपूर्ण यह शान्ति हो सकती है। और फिर यहाँ मनुष्योंके प्राणोंके साथ हृदयविदारक हँसी और खेल न हो सके ॥ ४४ ॥

न हि भवेन्नरकण्ठविकर्तनं न हि भवेद्धनहानिरुपार्जिता।
भवतु काप्यबला न विदूषिता शम इहास्तु तदा फलवानिति ॥४५॥

यहाँ फिर मनुष्यके गले न काटे जायँ, लोगोंके धनकी हानि न की जाय और कोई भी स्त्री अपमानित न हो सके तब यह शान्ति सफल मानी जाय ॥ ४५ ॥

गृहधरोपवनादि विसृज्य ये परिगतास्तत एव तदागमः।
शिवमिहाजनयिष्यति वान्यथा विफल एव भविष्यति स श्रमः ॥४६॥

घर, जमीन, बाग आदि छोड़कर जो जहाँ चले गये हैं वहाँसे यदि उनका यहाँ आगमन हो तो ही कल्याण होगा; नहीं तो वह श्रम व्यर्थ होगा ॥ ४६ ॥

प्रतिपुरं यदि हिन्दुकुरानिनौ सुमिलितौ जनतां परिरक्षताम् ।
परमशक्तिसमन्वित ईश्वरे जनतया निजधीः प्रणिधीयताम् ॥४७॥
स्वमिह यो विपदोद्य रिरक्षिषेत्प्रतिविधास्यति तस्य सहायताम् ।
जगदधीश उदारसुहृद्भवन्भवति नान्य उपाय उपस्कृतः ॥४८॥

प्रत्येक गाँवमें हिन्दू और मुसलमान् दोनों ही मिलकर यदि जनताकी रक्षा करें, तथा जनता परम शक्तिमान् ईश्वरको अपनी बुद्धि सौंप दे तो आज विपत्तिसे जो अपनी रक्षा चाहते हैं, अवश्य ही वह जगदीश्वर उदार मित्र बनकर उनकी रक्षा करेगा। दूसरा अच्छा उपाय नहीं है ॥४७॥४८॥

भयभयङ्कररूपविकल्पनाभयविमोहितहिन्दुगणः सदा ।
स्वसदनं परिहृत्य यथातथा व्यथितहृत्कमलोद्य पलायते ॥४९॥

भयके भयंकर रूपकी कल्पनाके भयसे व्याकुल बने हुए हमेशा अपने घरको जैसे-तैसे छोड़कर दुःखी हृदयवाले हिन्दू रोज भाग रहे हैं ॥ ४९ ॥

इदमनार्यनिषेवितवर्त्म तैर्यदि विहाय भयं विरहय्य च ।
अविगणय्य कृतं च कुरानिभिः पुनरिहेयत एव तदा शुभम् ॥५०॥

यदि हिन्दूलोग इस अनार्य मार्गको छोड़कर भयको भी छोड़कर और मुसल्मानोंने जो कुछ किया है उसका विचार किये बिना ही यहाँ फिर आ जायँ तभी श्रेय होगा ॥ ५० ॥

अहमिहैकक एव समागतो भवति नो मम कोपि सहायकः ।
निवसतिर्मुसलिम्भवनेद्य मे सुखमयी भविता सुखमेव तत् ॥५१॥

मैं यहाँ अकेला ही आया हूँ। कोई मेरा सहायक नहीं है। मुसलमानोंके घरमें ही मेरा सुखमय निवास है। अतः सुख ही होगा ॥ ५१ ॥

सकलसंगिजनेभ्य इह स्थितो मुसलमानजनैः सह संस्थितिम् ।
रचयता प्रयतेन मया मनो मुसलमाननृणां परिभोत्स्यते ॥५२॥

मैं अपने सभी साथियोंसे अलग होकर यहाँ रहा हूँ। मुसलमानोंके साथ निवास करता हुआ मैं इनके मनको समझूँगा ॥ ५२ ॥

मम मनस्यपि यत्किमपि स्थितं तदिह ते निखिलं प्रविदन्तु च ।
इति परस्परसंगतिसाधनाद्धृदयभावविकस्वरता भवेत् ॥५३॥

मेरे मनमें भी जो कुछ है उसे यह लोग समझें। इस प्रकारसे परस्पर संग करनेसे हृदयका भाव खिलेगा ॥ ५३ ॥

बहुगुणा कथिताभयताखिलैरगुणमेव भयं नितरां मतम् ।
तदिह भीतिमपास्य हि हिन्दुभिर्धृतिधराधरताद्य निषेव्यताम् ॥५४॥

सब लोगोंने कहा है कि निर्भयतामें बहुत गुण हैं और भय निर्गुण वस्तु है। अतः भीतिको छोड़कर हिन्दू लोग धीरज रखें ॥ ५४ ॥

यदि भयाद्धरणीभवनादिकं निखिलवस्तुगणं परिमुच्य ते ।
बहिरितः परियन्ति न कल्पये कमपि गण्यगुणादिगणं स्थिरम् ॥५५॥

यदि हिन्दूलोग भयसे घरबार आदि सब वस्तुओंको छोड़कर यहाँसे बाहर जाते हैं तो मैं कोई अच्छा स्थिर लाभ नहीं देखता हूँ ॥ ५५ ॥

प्यारेलालो मन्त्रितां मे गतोसौ लोकान्यातो भीतभीतान्पलाय्य ।
मार्गे दृष्ट्वा तांश्च रुद्ध्वा व्यपृच्छत्प्रत्यागन्तुं स्वीयगेहं सुखेन ॥५६॥

श्रीप्यारेलालजी मेरे मन्त्री हैं। उन्होंने डरके मारे भागकर जाते हुए लोगोंको रास्तेमें देखकर, उनको रोककर सुखसे उनके घर लौट जानेके लिये उनको पूछा ॥ ५६ ॥

नासीत्तेषां पूर्वजोपार्जितं स्वं ग्रामं गेहं गन्तुमालोकितुं वा ।
श्रद्धा धैर्यं साहसं वापि तेन नो पश्येयुः श्रेयसामाननं ते ॥५७॥

अपने पूर्वजोंके उपार्जित गाँव, घरको जाननेके लिए अथवा देखनेके लिये उनमें न श्रद्धा थी, न धैर्य था, और न साहस ही था। इससे वह लोग कल्याणका तो मुख भी नहीं देख सकेंगे ॥ ५७ ॥

ते गच्छेयुर्यत्र यत्रैव तत्र संप्राप्ताः स्युर्मुस्लमाना अनेके।
भीतान्दृष्ट्वा तेपि तान्भीषयेरंस्ते गन्तारस्तर्हि कुत्राविदग्धाः ॥५८॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
पञ्चमः सर्गः

वह तो जहाँ-जहाँ जायँगे, वहाँ ही अनेक मुसलमान् मिलेंगे और उनको डरे हुए देखकर वह भी डरावेंगे। तब वह लोग कहाँ जायँगे? ॥५८॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञराष्ट्रभाषाटीकायां
पञ्चमः सर्गः



# षष्ठः सर्गः

वङ्गहिन्दुहृदयव्यथां यतिर्भूयसीमनुभवन्यथार्थतः ।
शोकवेगलुलिताङ्गकोप्यसौ धैर्यपूर्वकमुवाच सद्वचः ॥ १ ॥

बङ्गालके हिन्दुओं की हार्दिक महती व्यथाको ठीक-ठीक अनुभव करके शोकके वेगसे थके शरीरवाले श्री महात्माजीने धैर्यपूर्वक यह शब्द कहे ॥ १ ॥

बन्धवो मम वचो हितप्रदं धर्मपूतमनघं निशम्यताम् ।
मा बिभीत मनुजात्सशस्त्रकाद्भीतिरंहस इहास्ति कारणम् ॥ २ ॥

बन्धुओ ! मैं हितकारक, निर्दोष और धर्मसे पवित्र वचन कहता हूँ, उसे आप सुनें । सशस्त्र आदमियोंसे आप डरें नहीं । भय पापका हेतु है ॥ २ ॥

केवलं बिभित सर्वशक्तिमत्सर्वदर्शिपरमात्मदेवतः ।
तद्भयाच्च परिधूय सर्वतः पापकर्म परिकुरुयतानघम् ॥ ३ ॥

सर्वशक्तिमान् तथा सर्वदर्शी परमात्मदेवसे ही केवल डरना चाहिए । उसके भयसे पापकर्म को सब ओरसे नष्ट करके धर्मका आलिङ्गन करें ॥ ३ ॥

हन्ति चेत्कमपि हिन्दुबालकं बालिकामपि च हैन्दवीमिह ।
नो विधत्त हृदयेरितां क्वचिच्छान्तिमाश्रयत शान्तचेतसः ॥ ४ ॥

यदि कोई किसी हिन्दू बालक या बालिका का वध करता है तो भी आप हृदय में उसके प्रति शत्रुता न रखें और शान्तचित्त होकर शान्ति का आश्रय लें ॥ ४ ॥

शान्तिरस्ति निरुपद्रुता स्वयं सा विधास्यति शनैः शनैरिह ।
विप्लवाभिरतिमानसाञ्जनान्विप्लवक्वथिततान्तमानसान् ॥ ५ ॥

शान्ति में कोई उपद्रव नहीं है। वह अच्छी चीज है। वह धीरे-धीरे यहाँ विप्लव-उपद्रवसे प्रेम करनेवाले लोगोंको विप्लवसे दुःखित मनवाला बना देगी। अर्थात् पीछेसे मारकाट करनेवाली प्रजाका मन दुःखित होगा ॥ ५ ॥

**हिन्दवो यदि च हिन्दुतां स्वयं संत्यजन्तु च भवन्तु मुस्लिमाः।**
**सर्वभीरपहतिं गता भवेच्छान्तिराज्यमिह संतनिष्यते ॥६॥**

हिन्दू यदि हिन्दूधर्मको छोड़कर स्वयं मुसलमान हो जायँ तो सर्व भीति नष्ट हो जाय और शान्तिका राज्य यहाँ फैल जाय ॥ ६ ॥

**ये वदन्ति मुसलिम्जना इदं नो विदन्ति निजधर्मभूमिकाम्।**
**धर्ममार्गमवमत्य संततं मत्तशोभिवचनं गिरन्ति ते ॥ ७ ॥**

जो मुसलमान् इस प्रकारसे ( ऊपर कहे गये प्रकारसे ) बोलते हैं वह अपने धर्मकी मर्यादाको नहीं समझते हैं। धर्ममार्गका अपमान करके पागल आदमीको शोभा दे, ऐसी बात वह बोलते हैं ॥ ७ ॥

**शास्ति न क्वचिदपीत्थमुद्धतं शासनं बत कुरानचोदितम्।**
**केनचित्सह विधातुमीदृशं वीर्यतो भवति पापहेतुकम् ॥ ८ ॥**

कुरानशरीफ़की आयतें कभी इस प्रकारका उद्धत उपदेश नहीं करती हैं। किसीके साथ इस प्रकार बलात्कार करना तो पाप ही करना है ॥ ८ ॥

**धर्म ईदृशबलेन योजितो नैव शक्त इह धर्मसंपदे।**
**न्याय्यवर्त्म परिहाय चोदना स्यादलं निखिलधर्महानये ॥ ९ ॥**

इस रीतिसे बलसे ग्रहण कराया हुआ धर्म, धर्मके लिये कभी भी समर्थ नहीं होता है। न्यायके मार्गको छोड़कर जो किया और कहा जाता है वह सर्व धर्मकी हानि ही करता है ॥ ९ ॥

**मुस्लिमैर्विबुधमानसैः कृतं ग्रन्थराशिमहमापठं परम्।**
**नैक्षिषि क्वचिदपीत्थमाग्रहं धर्मसंग्रहविधौ कदाचन ॥१०॥**

विद्वान् मुसलमानोंके रचे हुए मैंने बहुतसे ग्रन्थ पढ़े हैं। परन्तु कहीं भी धर्मग्रहण करानेके लिये ऐसा आग्रह मैंने नहीं देखा है ॥ १० ॥

**यो बलेन निशितास्त्रशस्त्रसंदर्शनेन यदि वा प्रवर्तते।**
**धर्ममारहयितुं च कंचन स्वस्य हानिमवशश्चिनोति सः ॥११॥**

जो आदमी बलसे या हथियार दिखाकर किसीसे धर्म छुड़ानेका यत्न करता है वह अपनी ही हानि करता है ॥ ११ ॥

**भीतितोत्र यदि कोपि संभजेदारहय्य निजधर्ममुज्ज्वरः।**
**ईसलाममथ भीरुमानवैः सेवनीय इति स प्रसिद्ध्यति ॥ १२ ॥**

जो कोई अपना धर्म छोड़कर डरसे इसलामको स्वीकार करे तो इसका अर्थ तो यही है कि इसलाम डरपोकोंका धर्म है ॥ १२ ॥

**धर्मसौष्ठवमिदं न गण्यते प्राणभीतिरिति तत्र कारणम्।**
**धर्मचारणमभीप्सितं भवेत्तद्भवेत खलु धर्मसेविनः ॥१३॥**

बलात्कारसे ग्रहण कराये हुए धर्मकी यह सुन्दरता नहीं गिनी जायगी। उस धर्म ग्रहण करनेमें तो प्राणोंका भय भी कारण है। यदि धर्मप्रचार करना इष्ट हो तो स्वयं धर्मपालन करने वाला बनो ॥ १३ ॥

**ज्ञानपूर्वकमतो मतो भवेत्केनचिद्यदि परैर्निषेवितः।**
**धर्म एष भविता श्रियै द्वयोर्ग्राहयिष्यति च यो ग्रहीष्यति ॥१४॥**

दूसरेके धर्मको यदि कोई ज्ञानपूर्वक उसे समझकर मान लेता हो तब वह धर्म ग्रहण करनेवाले और ग्रहण करानेवाले दोनोंके लाभके लिये होता है ॥ १४ ॥

**कोपि कांचन पतिव्रतां स्त्रियं धर्षयेद्यदि विरुग्णबुद्धिकः।**
**सापि भीतिवशगा जिहासतु स्वं न धर्ममिति मे ध्रुवा मतिः ॥१५॥**

यदि कोई दुराचारी-पापी किसी पतिव्रता स्त्रीका धर्म भ्रष्ट कर दे तो भी वह डरके वशमें आकर अपने धर्मको छोड़ने की इच्छा न करे, यह मेरी दृढ़ संमति है ॥ १५ ॥

नास्ति कोपि समयो विसंकटस्तस्य यो न विजिहिंसते परान् ।
तेन शान्तमनसा तपस्विनी भामिनी भवतु कालवक्त्रगा ॥१६॥

जो आदमी दूसरोंकी हिंसा करनेकी इच्छा नहीं करता, उसके लिये कोई भी समय संकटमय है ही नहीं । अतः ऐसी स्त्रियोंको चाहिये कि वह शान्त मनसे मृत्युके आलिंगनके लिये तैयार रहें ॥ १६ ॥

ते भवन्तु पुरुषा अथ स्त्रियो मार्गयन्तु भगवत्सहायताम् ।
एक एव जगदीश्वरो महान्सर्वजीवसुहृदस्ति निर्मलः ॥१७॥

चाहे कोई सताये गये पुरुष हों अथवा सताई गई स्त्री हों, सबको भगवान्‌की सहायता ढूँढ़नी चाहिये । एक भगवान् ही सर्व जीवोंका निर्मल और महान् मित्र है ॥ १७ ॥

यः प्रसन्नवदनो भुजान्तरे मृत्युमार्तचिरसंगिनं वहेत् ।
सर्वदृश्वपरमेश्वरोवशस्तं स्वकीयहृदये विलाययेत् ॥१८॥

जो हँसते मुखसे पीड़ितोंके चिरसंगी मृत्युका आलिंगन करता है अवश्य ही उसे सर्वद्रष्टा भगवान् अपने हृदयमें लाचार होकर विलीन करते हैं ॥ १८ ॥

एष एव परमो मतोस्ति मे धर्म इत्यभयचारुशस्त्रकः ।
तं प्रचारयितुमागमं सुखं साहसेन सह वङ्गमेदिनीम् ॥१९॥

अभय-निर्भयता ही जिसका सुन्दर शस्त्र है वही मेरे मतमें परमधर्म है । इसीका प्रचार करनेके लिए मैं साहसके साथ इस वङ्ग भूमिमें आया हूँ ॥ १९ ॥

यच्च तत्त्वमखिलेभ्य उत्तमं निर्भयं समुपदिश्यते मया ।
तत्समाचरितुमत्र मेभवद्भाग्यतोद्य ललितः समागमः ॥२०॥

जिस सर्वश्रेष्ठ तत्त्वका मैं सबको उपदेश करता हूँ उसीका आचरण करनेके लिये आज भाग्यसे मेरा यहाँ शुभागमन हुआ है ॥ २० ॥



जगदम्बा श्रीमती कस्तूरबा

नवजीवन कार्यालयके सौजन्यसे

पृच्छ्यते जनतया मुहुर्मुहुः शस्त्रधारणमवैधमस्ति किम् ।
किञ्चिदौन्यमिह पृच्छकेषु मे भाति मानवमनोहरान्तरे ॥२१॥

लोग मुझसे बार बार पूछते हैं कि क्या शस्त्रधारण करना अन्याय है ? मुझे मालूम होता है कि पूछनेवालोंमें कुछ निर्बलता–कमी है ॥२१॥

अभ्यहिंसमधिराजते महान्सुप्रभाव इति मेस्ति निश्चयः ।
तत्समो न हि परं प्रवर्तते रोषदोषशमनाय साधनम् ॥२२॥

अहिंसामें बहुत बड़ा प्रभाव रहा हुआ है, यह मेरा निश्चय है । क्रोधरूप दोषको शान्त करनेके लिये अहिंसाके समान दूसरा साधन है ही नहीं ॥ २२ ॥

विद्यते न मनुजेषु साहसं हिंसनेतरजमद्य तेन ते ।
आणवादिभयदास्त्रसंग्रहे सन्ति दत्तमनसो मनस्विनः ॥२३॥

आज मनुष्योंमें हिंसा करनेके सिवाय कोई अन्य साहस ही नहीं पैदा हुआ है इसलिए अणुबाँब जैसे भयङ्कर अस्त्रके संग्रहमें सब लोग लग गये हैं ॥ २३ ॥

स्वीयशीलपरिहायसङ्कटापन्नकालमधिगत्य कश्चन ।
अभ्युपायमनवैत्य सद्व्रता प्राणहानमभिवष्टु कापि हि ॥२४॥

जब अपने शीलधर्मके त्यागका संकटमय कोई समय आ जावे तो पतिव्रता स्त्रीको चाहिए कि यदि कोई दूसरा अच्छा उपाय धर्म बचानेकेलिये नहीं है तो, प्राणत्याग कर दे । ॥ २४ ॥

तां न लिम्पति पतिव्रतान्वितामात्मघातजनितांहसो लवः ।
पापिपापकरसंगसंमुचं सेतुमेव बलहीनयोषिताम् ॥ २५ ॥

पतिव्रता स्त्रीको आत्मघातका तनिक भी पाप स्पर्श नहीं करता है । क्योंकि वह स्त्री तो अन्य निर्बल स्त्रियोंकेलिये पापियोंके पापी हाथके संगसे छुड़ानेकेलिये पुल समान है ॥ २५ ॥

आत्मघातपरघातयोर्द्वयोरात्मघात इह संनिषेवितः ।
वर्त्म केवलमपेक्ष्यते मया सर्वदोषपरिवर्जितं हितम् ॥ २६ ॥

आत्मघात करना और दूसरोंकी हिंसा करना इन दोनोंमें आत्मघातका मार्ग ही यदि लिया गया हो तो वह हितकारक है और सर्वदोषोंसे रहित है ॥ २६ ॥

इष्यतेनुदिवसं मया भवेच्छान्तिरत्र चिरवासिनी परम् ।
नानुपश्यति मनोरथो ममाद्यापि किञ्चिदपि सत्फलं फलम् ॥ २७ ॥

मैं तो यही चाहता हूँ कि यहाँ स्थायी शान्ति हो। परन्तु यह मेरा मनोरथ अभीतक कोई मनोहर सुफल नहीं देख रहा है ॥ २७ ॥

यावदत्र यवनाश्च हिन्दवः सोदरा इव वसन्ति नो सुखम् ।
तावदत्र वसतिर्ध्रुवास्तु मे नो जिहासति मनो धरामिमाम् ॥ २८ ॥

जब तक हिन्दु और मुसलमान् यहाँ सगे भाईके समान सुखसे रहने न लगें तबतक मैं यहाँ ही रहूँगा। इस भूमिको छोड़नेको मन नहीं करता है ॥ २८ ॥

सागसः स्वमपराधमञ्जसा ते नयन्तु विपुलं प्रकाशताम् ।
न्यायमन्दिरगतान्न कामये तान्गताननभिनन्द्यबन्दिताम् ॥ २९ ॥

जो अपराधी हों वह अपने बड़ेसे बड़े पापको प्रकाशित कर दें। मैं यह नहीं चाहता हूँ कि वह कोर्ट में जायँ और कैदी बनाये जायँ ॥२९॥

सर्व एव महिताः कुरानिनस्तानुपेत्य मतिदानपूर्वकम् ।
सज्जनैः सुपरिशीलिते पथि प्रेरयन्तु मम मुद्भवेत्तदा ॥ ३० ॥

जितने प्रतिष्ठित मुसलमान् हैं वह सभी उन अपराधियोंके पास जाकर उन्हें समझाकर जिस मार्गमें सज्जन जाते हैं उसमें जानेकी उन्हें प्रेरणा करें, तब मुझे प्रसन्नता होगी ॥ ३० ॥

अन्यथा व्यतिकराग्रगामिनां दुर्जनाग्र्यपदवीनिषेविणाम् ।
राजशासनविधानदण्डनं रोचते च मनसे ममाधुना ॥ ३१ ॥

यदि ऐसा न हो तो हुल्लड करनेमें जो अगुवा थे और जो भारी अपराधी हैं उन सबको कायदेके अनुसार दण्ड मिले, यह मुझे अच्छा लगता है ॥ ३१ ॥

नो नियम्य यदि तान्सतां द्विषः शासनं सुजनवृत्तितां नयेत् ।
कोपि धर्मपथवर्तिमानवो न श्वसिष्यति सुखं क्वचित्पुनः ॥ ३२ ॥

यदि सर्कार अच्छोंको हैरान करनेवाले उन दुष्टोंको अच्छे मार्गमें न ले जाय तब तो कोई भी धर्मात्मा यहाँ फिर श्वास भी न ले सकेगा ॥ ३२ ॥

लुण्ठितानि निखिलानि ते धनान्यर्पयेयुरधिकारिषु स्वयम् ।
ग्लानिमप्यनुभवन्तु कर्मणो ज्ञानहीनचरिताच्च सर्वथा ॥ ३३ ॥

उन अपराधियोंने जो धन लूट लिये हैं उन्हें अपने आप जाकर अधिकारियोंको सौंप दें । तथा अज्ञानपूर्ण अपने किये कर्मकेलिये मनमें ग्लानिका भी अनुभव करे ॥ ३३ ॥

यन्निजार्थमभिवाञ्छितं भवेत्तत्परार्थमपि चेन्न काङ्क्षितम् ।
येन शुद्धमनसा न स क्वचिन्मुस्लमान इह गण्यते बुधैः ॥ ३४ ॥

जो वस्तु अपने लिये इष्ट है वही वस्तु दूसरोंकेलिये जो नहीं चाहता उसे विद्वान् लोग मुसलमानों में नहीं गिनते ॥ ३४ ॥

यो निजार्थमपि कर्म नाचरेन्नो परार्थमपि तन्निषेवते ।
नो भवेत्स इसलामसंमतो नैव तत्र भगवान्प्रसीदति ॥ ३५ ॥

जो अपनेलिये भी कर्म न करे और दूसरोंकेलिये भी न करे वह सच्चा मुसलमान् हो नहीं है । उसपर खुदा खुश नहीं होता है ॥ ३५ ॥

यो वदत्यनुदिनं मृषा वचो यो न पालयति भाषितं निजम् ।
यः प्रतारयति चात्मप्रत्ययं नास्ति मे स मम शत्रुरेव सः ॥ ३६ ॥

जो हमेशा झूठ बोलता है, जो अपने वचनका पालन नहीं करता

है और जो अपने ऊपर विश्वास करनेवालेको ठगता है उसके साथ मेरा कोई सम्बन्ध नहीं। वह मेरा शत्रु ही है ॥ ३६ ॥

**यो निजे हितमनारतं जनैः प्रत्ययं च परिरक्षितुं रतः।**
**न प्रमाद्यति निजोक्तितोपि यो वस्तुतोस्ति स हि मुस्लमान्परम् ॥३७॥**

लोग अपने ऊपर विश्वास रखें, उस विश्वासकी रक्षामें जो सावधान रहता है, अपने वचनसे जो प्रमाद नहीं करता, अर्थात् अपने वचनका पालन करता है, वस्तुतः वही मुसलमान् है ॥ ३७ ॥

**ईश्वरेण रचिताञ्छरीरिणो योनुकम्पत इह प्रतिक्षणम्।**
**स प्रयाति नितरां जगत्पतेरीश्वरस्य परमानुकम्प्यताम् ॥ ३८ ॥**

ईश्वरके बनाये हुए देहधारियोंपर जो सदा दया करता है उसपर जगन्नाथ ईश्वरकी भी दया होती है ॥ ३८ ॥

**यः करेण रसनाविनर्तनैरप्युपास्त इह नापकारिताम्।**
**वेद्य एव परमोत्तमः सदा मुस्लमान इति कोपि नापरः ॥ ३९ ॥**

जो हाथ से अथवा जीभसे भी किसीकी बुराई नहीं करता है वही सर्वश्रेष्ठ मुसल्मान् है, दूसरा नहीं ॥ ३९ ॥

**यो जनः प्रकुरुते कुलान्वितामङ्गनामिह कदापि मोहतः।**
**तं त्यजत्यहह पामरं परं धर्म एष मम निश्चयोऽव्ययः ॥ ४० ॥**

जो आदमी कुलीन स्त्रीकी मर्यादाका भङ्ग कभी भी अज्ञानसे करता है, उस परम पामरको धर्म छोड़ देता है, यह मेरा निश्चय है ॥ ४० ॥

**यः प्रधर्षति कदापि कामपि स्त्रीं समुद्धतमतिश्च कामतः।**
**यो विलुण्ठति परान्निषेवते मद्यमस्ति न हि भक्तिमानसौ ॥ ४१ ॥**

जो उद्धत पुरुष कामवश किसी स्त्रीको छेड़ता है, दूसरोंको लूटता है और मद्यपान करता है वह भक्तिमान् ही नहीं है ॥ ४१ ॥

**कोपि मुस्लिम उताप्यमुस्लिमः पीड्यते यदि कदा च केनचित्।**
**तस्य शीघ्रमिह संविधीयतां यापि कापि सकलैः सहाय्यता ॥ ४२ ॥**

किसी मुसलमान्को अथवा मुसलमान् नहीं है उसको भी कोई दुःखी करता हो तो सबको मिलकर शीघ्र ही जो बन सके उसकी सहायता करनी चाहिये ॥ ४२ ॥

संततं हि निखिलाक्षसंयमाद्धारणादनशनव्रतस्य च ।
ब्रह्मचर्यमुपसेव्यतां जनैर्मुस्लिमैर्मदनुयायिभिर्मुदा ॥ ४३ ॥

हमेशा ही सर्व इन्द्रियोंपर संयम रखकर, उपवास आदि करके मेरे अनुयायी मुसलमानोंको ब्रह्मचर्य पालन करना चाहिये ॥ ४३ ॥

सत्यवर्त्म परिगृह्य सर्वदा याबला परमपेक्षते न हि ।
स्वामिसेवनविधावनन्यतां संदधाति जगतोस्ति सा धनम् ॥४४॥

जो स्त्री सत्य मार्गका ग्रहण करके अन्य पुरुषकी अपेक्षा नहीं रखती तथा स्वामिकी सेवा अनन्य भावसे करती है वह सारे जगत्का धन है ॥ ४४ ॥

एवमादि भगवान्मुहम्मदः संजगावखिल मुस्लिमान्प्रति ।
मुस्लिमास्तु निखिला मुहम्मदे विश्वसन्तु वचनेषु तस्य च ॥४५॥

इस प्रकारसे ( श्लो० ३४ से ४४ तक ) मुहम्मद साहेबने सब मुसलमानोंके लिये कहा है। मुसलमानोंको उनमें और उनके वचनमें विश्वास करना ही चाहिये ॥ ४५ ॥

पाटियालवसुधाजनिर्बुधाः मुस्लिमापि अमतुलसलामिति ।
मुस्लमानजनताविशुद्धये सोपवासपटलं समातनोत् ॥४६॥

पटियाला स्टेटमें जिनका जन्म हुआ है उन मुसलमान् बहिन श्री अमतुलसलामने मुसलमानोंकी शुद्धिकेलिये कितने ही उपवास किये हैं ॥ ४६ ॥

मंत्पुरः समयपत्रमेकमालेखितं सुविदितैश्च मुस्लिमैः ।
स्वाक्षराणि निहितानि तत्र तैर्धर्मतत्त्वविबुधैर्निजेच्छया ॥४७॥

कुछ प्रख्यात धार्मिक मुसलमानोंने मेरे समक्ष एक प्रतिज्ञापत्र लिखकर उसपर स्वेच्छासे अपने हस्ताक्षर भी किये हैं ॥ ४७ ॥

सर्वं एव मिलिताः सुमुस्लिमास्तत्समस्तसमयानुपालने ।
उद्यताः प्रतिदिनं भवन्तु चेत्सुस्थमत्र निखिलं भविष्यति ॥४८॥

सभी मुसलमान् मिलकर यदि उन प्रतिज्ञाओंके पालनेमें सदा तैयार रहें तो यहाँ सब कुशल होगा—शान्ति हो जायगी ॥ ४८ ॥

हिन्दवश्च विबुधाः कुरानिनः सर्वं एव यदि शुद्धमानसाः ।
भूतमात्रमभिभूय संगताः स्युस्तदास्तु मम सुस्थिरं मनः ॥४९॥

सभी हिन्दू और मुसलमान् यदि शुद्ध मनवाले होकर गत वस्तुको भुलाकर मिल जायँ तो मेरा मन सुस्थिर हो जायगा ॥ ४९ ॥

ये वचः स्वविहितं स्वयं सदा पालयेयुरभितोत्र मुस्लिमाः ।
ते प्रमाणपदवीमुपाश्रिताः शोधयेयुरखिलाननार्यताम् ॥५०॥

अपने आप ही की हुई प्रतिज्ञाको जो मुसलमान् स्वेच्छासे भले प्रकार पालेंगे वह प्रामाणिक बनकर सबके मुखपर लगे कलङ्कको धो डालेंगे ॥ ५० ॥

लुण्ठितानि सकलानि यन्नृणां द्रव्यवासवसनादिकानि ह ।
तान्कथं सुसुखितान्विदध्महे चिन्तयेति न शमं लभामहे ॥५१॥

जिन लोगोंके सब द्रव्य, घर, वस्त्र आदि लूट लिये गये हैं उनको किस रीतिसे सुखी बनाऊँ इसी चिन्तासे अशान्त बना हूँ ॥ ५१ ॥

तादृशान्यपि कुलानि यत्र हा घातिता धनसमर्जिपूरुषाः ।
तत्र रक्षणमपेक्षितं परं किं च तत्र करणीयमर्तिहम् ॥५२॥

ऐसे भी परिवार हैं जिनके धन पैदा करनेवाले सब पुरुष मार डाले गये हैं । उनकी रक्षा तो करनी है परन्तु कैसे और क्या करना यह विचारणीय है ॥ ५२ ॥

तत्र बालकगणाय शिक्षणं पोषणं च बहुधा कुटुम्बिनाम् ।
चैलभक्तसदनादिदानतो धर्म एष धनिनां महानिह ॥५३॥

उनके बालकोंको शिक्षण देना है, कुटुम्बियों को अन्न, वस्त्र, घर आदि देकर सब प्रकारसे पोषण करना है। धनवानोंका यह महान् धर्म है ॥ ५३ ॥

शासनेन करणीयमस्ति तत्सर्वमेव परमस्मदादिभिः ।
किञ्चनापि यदि कर्तुमिष्यते शोभते तदधिकं यशःप्रदम् ॥५४॥

सर्कारको तो यह सब करना ही चाहिये परन्तु यदि हम लोग कुछ भी करनेकी इच्छा करें तो वह अधिक शोभा देगा और यशोदायक भी होगा ॥ ५४ ॥

आपदां व्यरचि धाम मुस्लिमैस्तेन तैरिह विचारपूर्वकम् ।
दुःखकर्कशकशाभिताडिताः सन्तु हिन्दव इमे भृता भृशम् ॥५५॥

मुसलमानोंने ही यह दुःख पैदा किया है अतः उन्हें ही विचार पूर्वक इन दुःखी हिन्दुओं का पालन-रक्षण करना चाहिये ॥ ५५ ॥

नो बलाद्भवतु साधितं किमप्याग्रहादपि च नापि लज्जया ।
धर्ममात्रमनुसृत्य सर्वथा दीयतां किमपि वा विधीयताम् ॥५६॥

जबर्दस्तीसे अथवा आग्रहसे अथवा लज्जासे कुछ नहीं करना है। धर्मका विचार करके ही कुछ दीजिये या कुछ कीजिये ॥ ५६ ॥

जाड्यतो भवति चेत्समागमः स्वीयबन्धुषु विपत्पयोनिधेः ।
रोधनीय इह सोखिलैर्जनैरेष एव महतां महान्गुणः ॥५७॥

यदि मूर्खतासे अपने भाइयोंपर विपत्तिका सागर उमड़ पड़े तो सबको मिलकर उसे रोकना चाहिये; यही महापुरुषों का महान् गुण है ॥ ५७ ॥

यच्च राज्यमुपलब्धजीवनं शस्त्रयोगबलतो न तत्पुनः ।
याचितं किमपि कर्तुमुत्सहेत्स्वाश्रयोस्ति फलदायकस्ततः ॥ ५८ ॥

जो राज्य हथियारके बलसे जीवन प्राप्त कर रहा है वह माँगनेसे कुछ भी न कर सकेगा। अतः स्वाश्रय ही फलदायक है ॥ ५८ ॥

सेवयैव समगंसतात्र ये दुःखिनामथ न तैर्विचार्यताम्।
कार्यमेतदतिलघ्विदं महत्प्रेयमेतदिदमस्ति नो तथा ॥५९॥

जो लोग यहाँ दुःखियोंकी सेवाकेलिये इकट्ठे हुए हैं उन्हें यह न विचार करना चाहिये कि यह कार्य बहुत हलका है और यह बड़ा है, यह कार्य प्रिय है और यह अप्रिय है ॥ ५९ ॥

यो हि यत्र नियतोधिकारिभिस्तत्र सोस्तु सुरवज्रलेपितः।
प्राणसंकट उपस्थितेपि तन्नो भवेत्परिजिहीर्षितं स्थलम् ॥६०॥

अधिकारियोंने जिसे जहाँ नियत कर दिया हो उसे वहाँ इन्द्रके वज्रका लेप बन जाना चाहिये। प्राणसंकट उपस्थित हो तो भी उस स्थलको छोड़नेकी इच्छा नहीं करनी चाहिये ॥ ६० ॥

कार्यमत्र यदतीतसंख्यकाः प्रारभन्त ऋततन्तुभिः सिताः।
क्षुद्रमेव भवतीह तद्गुरु त्यागरागत उत व्यवस्थया ॥६१॥

जिस कार्यको यहाँ सत्यकी डोरीसे बँधकर बहुतसे लोग शुरू करते हैं वह क्षुद्र हो तो भी त्यागके प्रेमसे और व्यवस्थासे गुरु बन जाता है ॥६१॥

शिल्पिनोत्र विपदा प्रतारिता मा जिघृक्षिषुरुपेत्य गृध्नुताम्।
दीयमानमवमं तथोत्तमं द्रव्यराशिमिति मे समीहितम् ॥६२॥

मेरी सलाह है कि जो कारीगर विपद्ग्रस्त बने हैं उन्हें थोड़ी रकम दी जाय या बड़ी, परन्तु लोभमें पड़कर उसे स्वीकार न करें ॥ ६२ ॥

दीयते किमपि यैश्च तत्र सत्प्रेम कापि करुणापि कारणम्।
नो तथापि यदि तद्ग्रहीष्यते पारतन्त्र्यमपसारितं भवेत् ॥६३॥

जो कोई कुछ किसीको देता है उसमें शुद्ध प्रेम और अपूर्व दया कारण होती है। तथापि यदि वह न लिया जाय तो परतन्त्रतामेंसे बचाया जा सकता है ॥ ६३ ॥

यः प्रयस्य तनुतो धनादिकात्सत्यतोपि समुपार्जितात्स्वयम् ।
निर्विशेदिह च यत्प्रमाणकं देयमेव समजाय तत्पुनः ॥६४॥

जो आदमी शरीरसे प्रयास करके सत्यसे स्वयं पैदा किये गये धनमेंसे जितनेका उपभोग करता है उतना पुनः उसे समाज को देना ही चाहिये ॥६४॥

अप्रदाय समजाय तद्धनं स्वोपयुक्तमिह तद्धनार्जकः ।
चौर्यमेव कुरुते न चोरतः साधयेत्कमपि भेदमात्मनः ॥६५॥

जितने धनका उसने स्वयं उपभोग किया है उतने धनको उस धनका पैदा करनेवाला यदि समाजको नहीं देता है तो वह चोरी करता है और चोरमें तथा अपनेमें कोई भेद सिद्ध नहीं कर सकता ॥ ६५ ॥

कारणानि खलु सन्त्यनेकशो द्वेषरागजनितानि मानवे ।
ईदृशस्तत उपस्थितो भवेन्नित्यमेव कलहो विपत्प्रदः ॥६६॥

मनुष्योंमें राग-द्वेष आदिसे पैदा हुए अनेक कारण रहते ही हैं जिससे कि इस प्रकारका दुःखद कलह नित्य ही हो सकता है ॥ ६६ ॥

मुस्लिमा असमदेशमेत्य ते रिक्तभूमिमधिचक्रिरे स्वयम् ।
नीतिरीतिरियमस्ति न क्वचित्कारणं कलह एतदप्यथ ॥६७॥

अमुक मुसलमान् आसाममें गये और वहाँ जो जमीन खाली पड़ी थी उसपर अपना अधिकार जमा दिया । यह कभी भी न्यायका मार्ग नहीं है । झगड़ेमें यह भी एक कारण है ॥ ६७ ॥

शास्ति शासनमिमं प्रदेशकं किञ्चनापि सबलं च दुर्बलम् ।
कश्चनापि सबलो जनो ह्यनापृच्छ्य तन्न वसु हर्तुमर्हति ॥६८॥

इस प्रदेशमें सर्कार चाहे सबल हो चाहे निर्बल हो; परन्तु कोई बलवान् पूछे विना उसके धनको ले ले, यह उसकेलिये योग्य नहीं है ॥ ६८ ॥

नित्यमेव सुविचार्य चारु चेत्किञ्चिदाचरितमस्तु कैश्चन ।
वैमनस्यमिह नोद्भवेत्क्वचित्स्यान्न कोपि कलहः समुत्थितः ॥६९॥

यदि अच्छी तरहसे विचार करके कोई कुछ अच्छा काम करे तो न तो कभी मनमुटाव हो सकता है और न झगड़ा ही खड़ा हो सकता है ॥ ६९ ॥

दालतापुरमुपेत्य मोहनः सर्वमोहनमुदाहरद्वचः ।
भूमिखण्डमिदमामिलत्सभं स्वामिभिः स्वयमदीयताद्य मे ॥७०॥

दालतापुरमें पहुँचकर श्रीमहात्माजीने सबको मोहित करनेवाली बात यह कही कि जमीन जिसमें कि अभी सभा हो रही है, इसके स्वामियोंने मुझे आज दे दी है ॥ ७० ॥

सर्ववर्णजनतोपभुक्तये भूरियं च भविता निरावृता ।
या प्रवर्तत इहाद्य भावना सा सती भवतु दीर्घजीविनी ॥७१॥

यह जमीन सभी वर्णों और जातियोंके उपयोगकेलिये खुली रहेगी । जो पवित्र भावना आज यहाँ प्रवृत्त है, वह चिरजीविनी बने ॥ ७१ ॥

ब्राह्मणाश्च वणिजश्च मुस्लिमा अन्त्यजा अपि भुवीह सर्वदा ।
सर्वमानवहितानुगामिनीं कांचनापि सुकृतिं वितन्वताम् ॥७२॥

ब्राह्मण, बनिया, अन्त्यज, मुसलमान् सभी इस भूमिपर सबके कल्याणकेलिये कोई भी सत्कर्म कर सकते हैं ॥ ७२ ॥

नाहमस्मि मुखजो न बाहुजो नोरुजात इति नास्मि पादजः ।
नैव हिन्दुरथ नैव मुस्लिमः सर्व एव मयि सर्वगोप्यहम् ॥७३॥

मैं स्वयं तो न ब्राह्मण हूँ, न क्षत्रिय, न वैश्य, न शूद्र; न हिन्दू और न मुसलमान् । सब मुझमें हैं और मैं सबमें हूँ ॥ ७३ ॥

तेन वस्तु मम कोपि किञ्चन नैकवर्ण उपभोक्तुमर्हति ।
सर्वशिष्टजनता ततः सदा क्ष्मामिमां निजतयैव निर्विशेत् ॥७४॥

इसलिये मेरी किसी वस्तुको कोई एक ही वर्ण उपयोगमें नहीं ला सकता । सभी शिष्ट जनता इस भूमिको अपना मानकर इसका उपयोग करे ॥ ७४ ॥

श्रीसुभाषवसुरत्र जन्मना सर्वमानवसमानदर्शकः ।
वङ्गवीरवसुधां कृतार्थयामास कोपि विशयो न कस्यचित् ॥७५॥

मनुष्यमात्रको समानदृष्टिसे देखनेवाले श्रीसुभाषचन्द्रबोसने इस वङ्गालकी भूमिको कृतार्थ किया है, इसमें तो किसीको कुछ कहना ही नहीं है ॥ ७५ ॥

चित्तरञ्जनमहाशयैरसौ संगतो निखिलदेशसेवया ।
बन्दिसद्म बहुशो गतो मुहुः कष्टमत्र बहुलं ह्यसोढ सः ॥७६॥

श्रीचित्तरञ्जनदासबाबूके साथ वह सम्पूर्ण देशकी सेवाके निमित्त शामिल हुए थे। बहुत बार जेल गये और यहाँ बहुतसे कष्ट सहन किये ॥ ७६ ॥

राष्ट्रसंसदधिकारिमुख्यतां द्विः प्रयात इह सुप्रभातकः ।
राजपूरुषसुरक्षितोप्यसौ काबुलं स्वकलयागमत्पुनः ॥७७॥

वह दो बार तो कांग्रेसके सभापति बने हैं। सर्कारी सिपाहियोंके पहरेमेंसे भी निकलकर अपने चातुर्यसे काबुल चले गये ॥ ७७ ॥

यूरुपेषु बहुलासु पूर्षु सम्प्रासरत्स च जपानमाप्तवान् ।
संचिकाय परमाप्तसैनिकान्भारतोद्धरणदत्तचित्तकान् ॥७८॥

यूरोपके बहुतसे नगरोंमें घूम कर वह जापान गये। वहाँपर भारतके उद्धारमें जिनका चित्त था ऐसे सैनिकोंको इकट्ठा किया ॥ ७८ ॥

तेन चित्रकरमत्र यत्कृतं तत्तथैव विरलः करिष्यति ।
यद्यशः सुगममास्त तत्कृते प्राप्स्यतीतरनरोपि वा न वा ॥७९॥

उस सेनासे उन्होंने आश्चर्यजनक कार्य किया उसे तो विरला ही कोई करेगा। जो यश उनकेलिये सुगम था उसे दूसरा कोई पावेगा या नहीं भी पावेगा ॥ ७९ ॥

तस्य वीररसरूपधारिणो वन्दनीयवसुधेयमस्ति सा ।
शोभते न मनुजेषु केनचित्कारणेन सुतरापि संभिदा ॥८०॥

वीररसकी साक्षात् मूर्तिके समान उन्हीं सुभाषबाबूकी यह वन्दनीय भूमि है। इसमें किसी भी कारणसे मनुष्योंमें अल्प भी भेद शोभा नहीं देता है ॥ ८० ॥

सर्वमनुष्यदुःखदुरिताद्यपनयनरत,
आस्त यदस्य चेतसि भृतं तदखिलमिह सः।
निर्भयतो दयाजलनिधिर्गतनिखिलभिदः—
स्तत्र यतीश्वरोच्चकथतातिपरिमितगिरा ॥८१॥

श्रीमहात्माजीके मनमें जो कुछ भरा था, सबको सर्व मनुष्योंके दुःख और पापोंके दूर करनेमें लगे हुए उन्होंने संक्षिप्त शब्दोंमें निर्भयताके साथ कह दिया ॥ ८१ ॥

विमलवचा यतीश्वर इहाधिविराट्सभं समागतान्,
निजहितमीहमानमनुजानुपदिश्य मुस्लिमान्।
सकलविधांहसां दलनशक्तिधरः परमार्तसेवको,
निजमुटजं स जर्जरितगात्र उदारयशा ययौ निशि ॥८२॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
षष्ठः सर्गः

स्पष्ट बोलनेवाले, सर्वपापोंको नष्ट कर सकनेवाले, दीनोंके सेवक, शिथिलशरीरवाले श्रीमहात्माजी वहाँ विराट सभामें अपना कल्याण चाहने वाले आये हुए मुसलमानोंको उपदेश देकर रात्रिमें अपनी झोपड़ीमें चले गये ॥ ८२ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
षष्ठः सर्गः



# सप्तमः सर्गः

श्रीमद्गांधीवंशजा कापि बाला तस्य श्रेयःसाधिपादेषु लीना ।
भक्तिश्रद्धापूर्णचित्ता मनुः सा नोवाखल्यां पार्श्वभाक्त्वं गतासीत् ॥१॥

श्रीमहात्मागांधीजीके वंशमें उत्पन्न हुई एक अपूर्व बालिका जो महात्माजीके ही चरणोंमें लीन थीं, जो भक्ति और श्रद्धासे पूर्ण थीं, जिसका नाम श्रीमनुबहिन गांधी है, वह नोवाखलीमें महात्माजीके पासमें ही रही थीं ॥ १ ॥

सर्वेषां कारिचिन्तापरोसौ गीतापाठे तां युयोजातिबालाम् ।
गीताचार्यः स्वानुभूतामृतैस्तां तृप्तां कर्तुं प्रायसन्नित्यमेव ॥ २ ॥

सबके कार्यकी चिन्ता रखनेवाले महात्माजीने श्रीमनुबहिनको गीता पढ़नेमें लगा दिया। वह गीताचार्य अपने अनुभवरूप अमृतसे उनको तृप्त करनेके लिये नित्य ही प्रयास करते थे ॥ २ ॥

गीतापाठोप्यस्ति यज्ञो महार्घ्यो यज्ञेनात्मा शुध्यति श्रीमतां च ।
शुद्धात्मा सन्नेति शुद्धात्मतत्त्वं लोकाद्दूरं भौतिकाद्दुःखपूर्णात् ॥ ३ ॥

गीताका अध्ययन एक बहुमूल्य यज्ञ है। यज्ञसे भाग्यशालियोंका मन पवित्र होता है। पवित्र मनवाला होकर मनुष्य दुःखपूर्ण भौतिक लोकसे पृथक् शुद्ध आत्मतत्त्वको प्राप्त करता है ॥ ३ ॥

ये ये मूढा मानवा यज्ञकृत्यं स्वाद्वस्वाद्वन्नाद्यकृत्वाप्यदन्ति ।
ते पापाढ्याश्चौर्यमेवाचरन्तो नो कल्याणं क्वापि बाले लभन्ते ॥ ४ ॥

जो मूर्ख मनुष्य यज्ञ किये विना ही स्वादिष्ट अथवा अस्वादिष्ट भी कुछ खाते हैं वे पापी चोरी करनेके कारण, हे पुत्रि, कभी कल्याण नहीं प्राप्त करते ॥ ४ ॥

अन्नं चौर्येणार्जितं भुञ्जते ये तेषां कुक्षौ पारदत्येव तत्तु ।
न स्यात्पाको जाठरे तस्य न स्याच्छान्तिः काये मानसे वापि बुद्धौ ॥ ५ ॥

जो लोग चोरीसे पैदा किये हुए अन्नको खाते हैं वह अन्न उनके पेटमें पारा जैसा बन जाता है। उनके पेटमें वह पचता नहीं है। उनके शरीर, मन और बुद्धिमें शान्ति नहीं होती ॥ ५ ॥

चोरा न स्यामेति सर्वैः प्रयोज्यो यागो नित्यं श्रेयसां साधनाय।
नेयः कालो न क्षणो वा क्षणार्धं यज्ञानुष्ठानेन कैश्चिद्विनात्र ॥ ६ ॥

हम चोर न बनें, इसलिये सबको नित्य ही कल्याण सिद्धिके लिये याग करना चाहिये। यज्ञानुष्ठानके विना किसीको एक क्षण, आधा क्षण भी काल व्यतीत नहीं करना चाहिये ॥ ६ ॥

नायं यज्ञः सर्वथापेक्षतेऽत्र स्वाहाशब्दं वेदमन्त्रादिकं वा ।
आस्ते चित्तं यस्य नित्यं विशुद्धं तस्यायं स्यादेव सिद्धोऽप्रयासात ॥ ७ ॥

इस यज्ञको न तो स्वाहा शब्दकी अपेक्षा है और न किसी वेद-मन्त्रादि की। जिसका चित्त नित्य पवित्र है उसको यह यज्ञ विना प्रयासके ही सिद्ध है ॥ ७ ॥

दीनैर्वा निर्धनैर्वापि साध्यो वित्तापेक्षस्तेन नायं विचिन्त्यः ।
कामक्रोधौ रागमोहौ विहाय स्वल्पेनैवानेहसा साध्य एषः ॥ ८ ॥

सामान्य दीन हों, धनहीन हों वह भी यह यज्ञ कर सकते हैं। इस यज्ञको धनकी अपेक्षा नहीं है। काम-क्रोध, राग-मोह छोड़कर थोड़े ही दिनोंमें यह सिद्ध किया जा सकता है ॥ ८ ॥

नायं बुद्धिं नाप्यधीतिं न वर्णं नान्यां कांचिद्योग्यतां वाञ्छतीह ।
शान्तात्मा सन्सर्वलोकोपकारी शीघ्रं यज्ञं साधयेदेतमृद्धम् ॥ ९ ॥

यह यज्ञ बुद्धि, विद्या, वर्ण अथवा अन्य किसी योग्यताको नहीं चाहता। शान्तात्मा तथा सबका उपकारक बनकर शीघ्र ही इस यज्ञको करना चाहिये ॥ ९ ॥

ये स्वं कालं जीवनं चापि नित्यं श्रेयो धातुं संनयन्ते परेषाम् ।
नो ते चौरा नापि ते भुञ्जते वा चौर्येणाप्तं किञ्चिदन्नं कदापि ॥१०॥

दूसरोंका कल्याण करनेकेलिये जो अपना समय और अपना जीवन व्यतीत करते हैं वह न तो चोर हैं न चोरीका अन्न खाते हैं ॥१०॥

यश्चान्येषां नोपकारं तनोति व्यर्थं कालं भावभोगैर्नयेद्वा ।
चौरश्चासौ पापबुद्धिर्निबोध्यः स्वार्थे लीनो बद्ध ईर्ष्यादिदाम्ना ॥११॥

और जो परोपकार तो करते नहीं किन्तु सांसारिक भोगविलासमें ही अपना काल व्यर्थ बिताते हैं वह पाप बुद्धिवाले चोर ही हैं, ऐसा समझना चाहिये; क्योंकि वह केवल स्वार्थपरायण हैं तथा ईर्ष्या आदि पाशोंसे बँधे हुए हैं ॥ ११ ॥

अल्पं योत्र श्रेयसि स्वे रतः सन्दीनानां वा रोगिणां संविधत्ते ।
सेवां सोसावल्पमेवादधाति स्तेयं चेत्येतद्धि विज्ञेयमार्यम् ॥१२॥

जो अपने हितमें थोड़ासा लगे हुए हों और दीनों तथा रोगियोंकी सेवा भी करते हों वह थोड़ी ही चोरी करते हैं ऐसा तत्त्वार्थ समझना चाहिये ॥ १२ ॥

यावन्न स्यात्सर्वथा स्वार्थहानिर्यावन्न स्यादार्द्रता स्वीयचित्ते ।
संत्रस्तानां दुःखदावं निरीक्ष्य ज्ञेया ताव ज्ञपूर्तिर्न वत्से ॥१३॥

हे वत्से, जब तक सर्वांशमें स्वार्थ नष्ट नहीं होती और जबतक पीड़ितोंके दुःखदावानलको देखकर हृदयमें दयाभाव नहीं उत्पन्न होता तब तक यज्ञकी पूर्ति नहीं समझना चाहिये ॥ १३ ॥

त्यागोहन्ताया ममत्वस्य चापि ज्ञेयो यज्ञो गीतया बोधितोसौ ।
यावद्दूरं नैत्यहन्ता ममत्वं तावत्काशा यज्ञदेवस्य पूर्तेः ॥१४॥

अहंभाव और ममभावका त्याग ही तो गीताके मत से यज्ञ है। जबतक अहन्ता और ममताका त्याग नहीं होता तबतक यज्ञदेवकी पूर्तिकी क्या आशा है ? ॥ १४ ॥

एषा माता विद्यते मेहमस्याः पुत्रोस्मीति ज्ञानमाद्योतते चेत् ।
शुद्धेशुद्धे वापि चित्तेस्मदीये नैतद्यज्ञानुग्रहोस्मासु तिष्ठेत् ॥१५॥

भगवद्गीता मेरी मा है और मैं इसका पुत्र हूँ, इस प्रकारका जबतक ज्ञानोदय शुद्ध अथवा अशुद्ध चित्तमें नहीं होता तबतक हमपर गीताकी कृपा नहीं होगी ॥ १५ ॥

एषा चास्ते मे स्वसा मे च पुत्री द्वे चैते स्तो यस्य कस्यापरस्य ।
यावत्तिष्ठेन्मानसे रोग एष कास्तामाशा यज्ञदेवोदयस्य ॥१६॥

यह मेरी बहिन वा पुत्री है और यह किसी अन्यकी है, जबतक यह मानसिक रोग विद्यमान है तबतक यज्ञदेवके प्रकट होनेकी कोई आशा नहीं है ॥ १६ ॥

यः स्वं सर्वव्यापके सर्वरूपे भावाधीशे भावनातो महेशे ।
श्रद्धाप्रेमश्रीभरेणार्पयेत्स श्रेष्ठो जीवो यज्ञमेनं वितन्यात् ॥१७॥

जो सर्वव्यापक और सर्वरूप तथा प्रेमके स्वामी परमात्मामें अपनेको श्रद्धा और प्रेमसे अर्पण करता है वही श्रेष्ठजीव इस यज्ञको कर सकता है ॥ १७ ॥

यो मध्यस्थं श्रीपतिं संविधायाधत्ते यज्ञं लोकसेवाख्यमिद्धम् ।
तस्मिन्नीशः स्वां कृपां संनिधत्ते शुभ्रं लोकं ज्ञानिगम्यं स एति ॥१८॥

जो श्रीरामको मध्यस्थ बनाकर लोकसेवारूप यज्ञ करता है उसपर ईश्वर अपनी कृपा फैलाते हैं और वह ज्ञानियोंके प्राप्य पवित्र लोकमें पहुँच जाता है ॥ १८ ॥

स स्यात्प्राप्तः शान्तिमात्यन्तिकीं स प्राप्तः स्यान्नित्यमानन्दभूमिम् ।
पश्यन्दुःखे वापि सौख्ये समत्वं सेवाभावाद्यज्ञमासेवते यः ॥१९॥

जो सुख और दुःखमें समानभावसे रहकर सेवाबुद्धिसे इस लोकोपकार रूप यज्ञको करता है वह आत्यन्तिक शान्ति पाता है और नित्य तथा आनन्दमय लोकको प्राप्त करता है ॥ १९ ॥



पटने (विहार) में श्री० महात्माजी प्रातःकालीन भ्रमण कर रहे हैं और कुमारी श्री० मनु गांधीको गीताका उपदेश दे रहे हैं।

 [फोटोग्राफर श्री. जगन वी. महेता

देहं गेहं वा मतिं मानसं वा यत्किञ्चिद्वा तस्य वर्तेत भूमौ।
तत्सर्वं व्यापारयेल्लोकहेतोः सत्यं यज्ञं सेवमानो मनुष्यः ॥२०॥

इस सत्यरूप यज्ञको जो सेवन करे उसे चाहिये कि अपना शरीर, घर, बुद्धि, मन अथवा जो कुछ उसके पास हो उस सबको लोकहितमें लगा दे ॥ २० ॥

न स्युः कर्तुं सर्वलोकाः समर्था यज्ञं शुद्धं चेदृशं द्वेषशून्यम्।
भाग्येनैवावाप्य एतादृशः स स्वात्मारामैर्भूरिभाग्यैः कदाचित् ॥२१॥

जिसमें राग-द्वेषका नाम भी नहीं है ऐसे इस पवित्रयज्ञको सब लोग नहीं कर सकते। यह यज्ञ तो आत्माराम और भाग्यशाली लोगोंको भाग्यसे ही मिल सकता है ॥२१॥

किन्तु प्रास्यैवैषणाः सर्वदा ये सेवाभावात्तन्वते धीरचित्ताः।
सौत्रं यज्ञं सूत्रचक्रेण नित्यं ते तं यज्ञं पूर्णरूपेण यन्ति ॥२२॥

परन्तु जो लोग पुत्रैषणा, वित्तैषणा और लोकैषणाका त्याग करके धीरचित्त होकर सेवाभावसे चर्खेसे सूत कातकर सूत्रयज्ञ नित्य करते हैं वह पूर्णरूपसे यज्ञको प्राप्त करते हैं ॥ २२ ॥

येषां दृष्टिः स्वार्थ एवास्ति नित्यं ये पारार्थ्यं चापि कृत्यं विधातुम्।
ईहन्ते ते कृत्स्नशः संभजन्ते कार्तार्थ्यं तत्सूत्रसत्रेण सत्यम् ॥२३॥

जो स्वार्थमें दृष्टि रखनेके साथ-साथ परोपकार भी करना चाहते हैं वह सूत्रयज्ञसे वस्तुतः कृतार्थता प्राप्त करते हैं ॥ २३ ॥

यज्ञेनानेनात्र लोका असंख्याः क्षुत्क्षामाः संबिभ्रते स्वं पिचण्डम्।
नेत्रैर्हीनाः कर्णहीनाश्च लोका एवं यज्ञं देवमाहर्तुमीशाः ॥२४॥

इस सूत्र यज्ञसे असंख्य भूखपीड़ित लोग अपना पेट भर रहे हैं। अन्धे और बहिरे लोग भी यज्ञदेवका आवाहन कर सकते हैं ॥ २४ ॥

नायं यज्ञः केवलं लौकिकार्थं सूते सूते किंतु भव्यं परार्थम्।
सार्धं प्रत्येकं च सूत्रेण नाम श्रीरामस्य स्यात्स्मृतं चेत्पवित्रम् ॥२५॥

यह सूत्रयज्ञ केवल लौकिक ही नहीं पारलौकिक फल भी देता है यदि प्रत्येक सूत्रके साथ रामका पवित्र नाम स्मरण किया जाय ॥ २५ ॥

**आचारः स्यात्सर्वथा चेत्पवित्रो न स्याद्यस्य स्वार्थसंश्लिष्टबुद्धिः ।**
**तस्यैवायं सेवितो यज्ञदेवः सर्वान्कामानाशु सूते प्रसन्नः ॥२६॥**

जिसका आचार अत्यन्त पवित्र हो और जिसकी बुद्धि स्वार्थमयी न हो उसीको यह देव प्रसन्न होकर सब पदार्थ देते हैं ॥ २६ ॥

**यद्यत्कुर्वे प्रातरारभ्य सर्वं रात्र्यन्तं तद्रामपादाब्जयुग्मे ।**
**श्रद्धापूर्वं चार्पयामीति बुद्ध्या कृत्ये कृत्ये नास्ति दोषावकाशः ॥२७॥**

"जो कुछ भी मैं प्रातःसे लेकर रात्रि तक करता हूँ, सब भगवान् रामके चरणकमलोंमें श्रद्धापूर्वक अर्पण करता हूँ या करूँगा" इस बुद्धिसे कर्तव्य कर्म किया जाय तो कोई दोष हो ही नहीं सकता ॥ २७ ॥

**यो नित्यं स्यादेवमीशप्रसत्त्यै रक्तो लोकश्रेयसां संविधाने ।**
**हास्यं पानं क्रीडनं भक्षणं वा सर्वं कार्यं तस्य सेवाभृतं स्यात् ॥२८॥**

इस प्रकारसे जो मनुष्य भगवत्प्रसन्नताकेलिये लोककल्याण करनेमें लगा रहता है उसका खाना, पीना, हँसना, खेलना सर्व कार्य सेवासे भरा हुआ होता है ॥ २८ ॥

**यद्यत्सेवाभावतस्तन्वते ते कार्यं सर्वं व्यापृतं स्यात्सदा तत् ।**
**निर्दोषत्वेनैव धत्ते महेशः साहाय्यं चापीह तस्याविकुण्ठम् ॥२९॥**

ऐसे लोग सेवाभावसे जो जो कार्य करते हैं वह सब सदा निर्दोषतापूर्ण ही होते हैं । ईश्वर भी उसमें सम्पूर्ण सहायता करता है ॥ २९ ॥

**ये ये भक्ताः प्रीतियुक्ता भजन्ते मां तान्नित्यं योजये बुद्धियोगे ।**
**कृष्णः प्राहेत्यात्मगीतासु नैतन्मिथ्येत्येवं त्वं प्रतीहि प्रबोधात् ॥३०॥**

गीतामें भगवान् कृष्णने जो यह कहा है कि "जो जो भक्त प्रीतियुक्त मेरी सेवा करते हैं मैं उन्हें बुद्धियोग—ज्ञानयोगमें जोड़ता हूँ" वह मिथ्या नहीं है, ऐसा तुमको विश्वास रखना चाहिये ॥ ३० ॥

गीताज्ञानं सर्वपापापनुत्त्यै गङ्गानीरं विद्यते सर्वशक्तिः।
ये तत्त्यक्त्वा ज्ञानमन्यच्छ्रयन्ते नो ते सिद्धिं प्राप्नुवन्ति प्रकृष्टाम् ॥३१॥

गीताका ज्ञान सर्वपापोंका नाश करनेकेलिये सर्वशक्तिमान् गङ्गाजल समान है। जो इस ज्ञानको छोड़कर अन्य ज्ञानका आश्रय लेते हैं वह उत्तम सिद्धिको नहीं पाते ॥ ३१ ॥

बी ए एमे इत्युपाधी गृहीत्वा दैवे कर्मण्यत्र न त्वं प्रभुः स्याः।
सर्वव्यापी नेश्वरः सेवितश्चेत्किं तेन स्यात्तर्ह्युपाधिर्ह्युपाधिः ॥३२॥

वत्से, बी० ए०, एम्० ए० इन उपाधियों को लेकर तुम दैव कर्ममें तो समर्थ नहीं ही हो सकती। यदि सर्वव्यापी भगवान्की सेवा न की तो उन उपाधियोंसे क्या लाभ? तब वह उपाधि-उपाधि ही बनेगी ॥३२॥

सर्वा बालाः सर्वबालाश्च वाचं मन्येरन्मे शीघ्रमेवादिशानि।
विद्याशालात्यागपूर्वं सपद्यागच्छेयुस्ते शान्तिकर्मात्र कर्तुम् ॥३३॥

यदि सभी बालिकाएँ और सभी बालक मेरी बात मानें तो मैं उनको बिना विचारे उपदेश दूँ कि वह सब स्कूल-कॉलेज छोड़कर एक दम यहाँ शान्तिके काममें आकर लग जायँ ॥३३॥

लोभस्तेषां चेदपाकर्तुमीषच्छक्यः स्याद्वा तत्परीक्षा फलानाम्।
देशोऽस्माकं लाघवोपेत एष प्राप्य श्रीमद्गौरवं पूजितः स्यात् ॥३४॥

यदि परीक्षाके उन फलों ( बी० ए०, एम्० ए० इत्यादि उपाधियों ) का लोभ उनका थोड़ा भी दूर हो सके तो यह हमारा देश जो गिरा हुआ है, गौरवशाली होकर पूजित बन जाय ॥३४॥

योऽतिक्रम्य स्वस्य शक्तिं विदध्यात्कार्यं स स्यात्क्षीणवेगः क्षणेन।
नैतामुक्तिं छात्रसंघोऽस्मदीयो ध्यायत्येतेनैव दृश्योऽवपातः ॥३५॥

जो अपनी शक्तिसे अधिक कार्य करता है वह थोड़े समयमें ही हतोत्साह हो जाता है। हमारा विद्यार्थिवर्ग इस वचनका ध्यान नहीं करता इसीलिये उसका पतन देखा जाता है ॥३५॥

स्वस्मिन्देशे पद्धतिर्यास्ति तस्यास्त्यागः कार्यः सर्वथा नैव कैश्चित् ।
श्वेताङ्गानां रीतिमाश्रित्य सर्वत्रत्या लोका दुःखभाजो भवन्ति ॥३६॥

अपने देशकी जो पद्धति है उसका कभी किसीको त्याग नहीं करना चाहिये। अंग्रेजोंकी रीतिका यहाँके लोग आश्रय लेकर दुःखी हो रहे हैं॥३६॥

यद्यप्यत्रास्त्येव राशिर्बहूनां दूरूढीनां नात्र शङ्कावकाशः ।
किन्तु स्वस्याभ्यस्तमार्गेण गच्छन्देशोयं स्यादाशु सर्वैरपीड्यः ॥३७॥

यद्यपि यहाँ भी बहुत सी निकृष्ट रूढियाँ वर्तमान हैं, इसमें सन्देह नहीं; परन्तु यदि यह देश अपने अभ्यस्त मार्गसे चले तो शीघ्र ही सबका प्रशंसापात्र बन जाय ॥ ३७ ॥

गीताज्ञानं सर्वपापापहारि श्रेयः प्राप्तुं चैकमात्रं सहायः ।
इत्येवं श्रीपूज्यपादाब्जगांधेः सर्वागम्या शास्त्रगम्या मनीषा ॥३८॥

श्रीमद्भगवद्गीताका ज्ञान सर्व पापोंका हरण करनेवाला तथा मोक्षप्राप्तिका एक मात्र सहायक है ; सबकी समझमें न आ सके परन्तु शास्त्रद्वारा समझा जा सके, ऐसा यह विचार श्रीमहात्मागांधीजीका है ॥३८॥

पौत्रीं मनुं प्रतिदिनं गुणवद्वरिष्ठां,
गीतार्थमेवमवबोधयति स्म देवः ।
साप्यार्यपादसरसीरुहमाश्रयन्ती,
दुर्बोधमर्थमधिगम्य कृतार्थिताभूत् ॥३९॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
सप्तमः सर्गः

इस प्रकारसे महात्माजी अपनी पौत्री चि० मनुबहिन गांधीको गीताके अर्थका उपदेश करते थे। वह भी महात्माजीके चरणकमलोंका आश्रय लेकर दुर्बोध अर्थको जानकर कृतार्थ होती थीं ॥३९॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
सप्तमः सर्गः

# अष्टमः सर्गः

ऋष्यर्थरन्ध्रेशमितैशवीयसंवत्सरस्य प्रथमे हि मासे।
शुभे तिथौ तर्कमिते यतीशः समागतान्सर्वजनानवोचत् ॥१॥

ता० ६ जनवरी १९४७ ई० के दिन इकट्ठे हुए लोगोंको श्रीमहात्मा जीने कहा ॥१॥

यारम्भि यात्रात्र तिथौ द्वितीये महापवित्रे ऋतुसंमितार्योः।
स्यात्सत्फला सेति विनम्रभावैः संप्रार्थये राममनन्तशक्तिम् ॥२॥

सज्जनो! कलह महापवित्र यज्ञके समान जिस यात्राका मैंने आरम्भ किया है वह सुफल बने ऐसी प्रार्थना रामसे करता हूँ ॥२॥

विघ्नानतीत्यापरिचिन्त्यरूपान्परस्सहस्रान्प्रतिवासरोत्थान्।
आप्नोमि सिद्धिं स्वमनीषितेर्थे यूयं प्रयच्छन्तु शुभाशिषो मे ॥३॥

प्रतिदिन आनेवाले बड़े-बड़े हजारों विघ्नोंको पार करके मैं अपने कार्यमें सिद्धि प्राप्त करूँ, ऐसा आप सब लोग मुझे आशीर्वाद दें ॥३॥

हिन्दूमुसल्मानमनोविशुद्धिः प्रेम द्वयोः शाश्वतिकं च शुद्धम्।
परस्परप्रत्ययशालिनौ तौ भयं भवेतां परिहाय सम्यक् ॥४॥

जिस कार्यके लिये यह यात्रा है उसका वर्णन करते हैं। हिन्दू-मुसलमानोंके मन पवित्र हों। दोनोंमें नित्य शुद्ध प्रेम पैदा हो। भय छोड़कर दोनों ही परस्पर विश्वास करने लग जायँ ॥४॥

एतत्समाराधयितुं मयेयं यात्रा समारम्भि फलं प्रकृष्टम्।
धाता विधाता फलितेच्छकं मां नैवात्र शङ्काप्रसरावकाशः ॥५॥

इसी उत्तम फलको प्राप्त करनेके लिये मैंने यह यात्रा शुरू की है। भगवान् मेरी इच्छा पूर्ण करेगा, इसमें सन्देहकेलिये अवकाश ही नहीं है ॥ ५ ॥

एतत्समीहापरिसाधनाय यात्रा न कंचिल्लभतेवकाशम् ।
संशेरते चेदिति वो मनांसि तेषां समाधानमिदं प्रविच्त ॥६॥

यदि आपके मनमें यह शङ्का होती हो कि उपर्युक्त सिद्धिके लिये यात्रा करनेमें कोई कारण नहीं है तो इसका यह समाधान समझें ॥६॥

येषां तदन्तःकरणं पवित्रं त एव संशोधयितुं परेषाम् ।
मनोतिसूक्ष्मं दुरघं क्षमन्ते नान्यः स्वयं सन्तमसावलीढः ॥७॥

जिनका अन्तःकरण पवित्र है वही दूसरोंके अतिसूक्ष्म पापी मनको शुद्ध कर सकते हैं। जो स्वयं अज्ञानी और अपवित्र है वह यह कार्य नहीं कर सकता ॥७॥

येषां मनो भीतिपराहतं स्यान्नो साहसं यत्र पदं दधीत ।
कथं हि ते साध्वसभारभाजां मनः सशक्तं तनितुं क्षमन्ताम् ॥८॥

जिनका मन डरा हुआ है, जिसमें साहसका नामभी नहीं है, वह लोग डरे हुओंके मनको सशक्त कैसे बना सकते हैं ? ॥ ८ ॥

आतङ्कपङ्काभिकलङ्किता ये स्वरक्षणायापि विनास्त्रसंघैः ।
उपायमन्यं न विदन्ति ते किं रक्षां विधास्यन्ति भयातुराणाम् ॥९॥

आतङ्कसे भरे हुए जो लोग हथियार विना अपना रक्षण करनेकेलिये कोई अन्य उपाय नहीं जानते हैं वह डरे हुओंकी क्या रक्षा करेंगे ? ॥९॥

येषामहिंसैव बलं विशुद्धा शस्त्रास्त्रसंघेस्ति च निर्दरत्वम् ।
प्रेमामृतौघेन भृतं मनः स्यात्ते साधयिष्यन्ति महद्धि साध्यम् ॥१०॥

विशुद्ध अहिंसा ही जिनका बल है, अस्त्र-शस्त्रोंके बीचमें भी जिन्हें निर्भयता है, प्रेमरूप अमृतसे जिनका मन भरा हुआ है वह अवश्य ही बड़े से बड़े कार्य को सिद्ध करेंगे ॥ १० ॥

त एव लोकान्निशितानि शस्त्राण्यस्त्राणि चोत्सर्जयितुं समर्थाः ।
प्रेमामृतं पाययितुं प्रकोपक्ष्वेडप्रसारव्यथितांश्च सर्वान् ॥११॥

वही लोग तीक्ष्ण अस्त्र शस्त्रोंको लोगोंसे छुड़ा सकते हैं। वही लोग क्रोधरूप विषसे व्याकुल लोगोंको प्रेमरूप अमृत पिला सकते हैं ॥११॥

ग्रामादटन्ग्राममहं च सर्वांस्तद्ग्रामवासानतिनिर्मलं मे।
बन्धुत्वभावाकलितं मनोज्ञं प्रदर्शयिष्यामि मनः समुत्कः ॥१२॥

एक गाँवसे दूसरे गाँवमें घूमता हुआ मैं उन-उन गाँवोंमें रहनेवालोंको मेरा भ्रातृभावपूर्ण, अतिनिर्मल सुन्दर मन उत्साहसे दिखाऊँगा ॥ १२ ॥

ततश्च मां येद्य न विश्वसन्ति मत्तोपि ये बिभ्यति मुस्लमानाः।
मध्ये हि तेषां भवनेषु तेषां वासोद्य मे कामित एव सद्यः ॥१३॥

इससे जो मुसलमान् मेरा विश्वास नहीं करते और मुझसे भी डरते हैं उनके बीचमें, और उनके घरोंमें शीघ्र निवास करनेकी आज मेरी इच्छा हो गयी है ॥ १३ ॥

यद्यप्यमी शास्त्रसुसज्जिता मामनुव्रजन्तीह नरेन्द्रचोद्याः।
परं ममेच्छां न विदन्तु तत्र हेतुं भवन्तः परिवीतभीतेः ॥१४॥

यद्यपि यह शस्त्रसे सजे हुए राजपुरुष मेरे साथ चल रहे हैं परन्तु इसमें आप लोग मेरी इच्छाको कारण न समझें। मैं तो सर्वथा भय-रहित हूँ ॥ १४ ॥

राज्यं स्वधर्मं परिपालयेच्चेत्कस्तान्निरोद्धुं क्षमते क्षमायाम्।
ततो ममास्त्यत्र हि पारवश्यं न वोत्तरं किञ्चिदपि प्रमाणम् ॥१५॥

राज्य यदि अपना धर्म पालन करे तो उसे रोकनेकेलिये पृथिवीपर कौन समर्थ है ? अतः इस विषयमें मेरी निश्चय ही पराधीनता है। कोई भी प्रामाणिक उत्तर मेरे पास नहीं है ॥ १५ ॥

अहं क्षमः केवलमाननेन श्रद्धातिशय्यं भगवत्पदाब्जे।
कर्तुं स्फुटं प्रेमभराश्रयेण चित्तेन चान्या सरणिर्न मेस्ति ॥१६॥

मैं केवल मुखसे और प्रेमभरे मनसे अपनी अतिशय श्रद्धाको स्फुटकर सकता हूँ। मेरेलिये आज दूसरा मार्ग नहीं है ॥ १६ ॥

प्रत्येम्यहं केवल ईश्वरेत्र सुखं स्वपिम्यस्य च दोर्बलेन।
न चाश्रयोन्यो मम दुर्बलस्य भवज्वलज्ज्वालवितापितस्य ॥१७॥

मैं केवल ईश्वरमें विश्वास रखता हूँ। यहाँ पर उसीके बाहुबल पर सुखसे सोता हूँ। संसारकी जलती आगसे तपे हुए मुझ दुर्बलको और कोई आश्रय नहीं है ॥ १७ ॥

**यूयं प्रतीताद्य वचो न वा मे न तत्र वक्तव्यमहं विजाने।**
**सर्वान्तरात्मा परमात्मदेवः शक्नोति बोद्धुं जनमानसानि ॥१८॥**

आप आज मेरे वचनका विश्वास करें या न करें इस विषय में मैं नहीं समझता कि मुझे क्या कहना चाहिये। मनुष्योंके हृदयको तो केवल सर्वान्तरात्मा परमात्मा ही जान सकता है ॥ १८ ॥

**कर्तव्यमास्ते जगदीशपादपरायणस्याखिलमानवस्य।**
**स आन्तरादेशमिहानुसृत्य क्रियापरः स्यात्स्वभियं निरस्य ॥१९॥**

ईश्वरभक्त सभी मनुष्योंका कर्तव्य है कि अन्दरकी आवाजके अनुसार अपने भयको छोड़कर क्रियापरायण बनें ॥ १९ ॥

**मन्येहमात्मान्तरजातशब्दजालं विभाव्यैव समाचरामि।**
**न तत्र भीतिः परिबाधते मां न वा मनः संकुचतीति सत्यम् ॥२०॥**

मैं मानता हूँ कि मैं अपने अन्तरात्माके शब्दोंको विचार करके ही आचरण करता हूँ। उस आचरणमें न तो मुझे भय लगता है और न मनमें संकोच ही होता है। यह सत्य वस्तु है ॥ २० ॥

**सिक्खा अपि स्नेहवशादुपेता आदेशमागृह्य हि शासनस्य।**
**सार्धं मयास्मिन्कुपिते प्रदेशे बन्धुत्वमाप्यैव सदा चरन्ति ॥२१॥**

सिक्ख भाई भी प्रेमवश होकर ही यहाँ सर्कारकी आज्ञा लेकर आये हैं। इस क्रोधभरे प्रदेशमें भाईपनेको लेकर ही मेरे साथ चलते हैं ॥२१॥

**न ते निरोध्याः कथमप्यवद्याचारावतारप्रतिकूलभावाः।**
**न चागताः सन्ति नियोद्धुकामाः कृपाणमात्मीयमपास्य धर्म्यम् ॥२२॥**

हम उनको रोक नहीं सकते क्योंकि उनके हृदय में हिंसाके प्रतिकूल

भाव भरे हुए हैं। वह यहाँ लड़नेकेलिये नहीं आये हैं। यह तो अपना धार्मिक कृपाण भी छोड़कर यहाँ आये हैं ॥ २२ ॥

सुभाषचन्द्रेण महोदयेन व्यरच्युदात्ता पृतना च तस्याः।
प्रधानमुद्देश्यमिहाखिलेषु साम्यं स्वदेशोद्धरणादिकं च ॥२३॥

श्रीसुभाषबाबूने एक उदार सेना बनायी थी। उसका प्रधान उदेश्य था—सब लोगोंमें—हिन्दू-मुसलमान-पारसी-ईसाई आदि में समानताका व्यवहार और स्वदेशका उद्धार करना ॥ २३ ॥

गृहीतसाम्यप्रशमादिभावा भयप्रदाः सन्ति कदापि नैते।
सुभाषसेनानुगता इहैता हिन्दूमुसल्मानसपर्ययैव ॥२४॥

यह सबमें समान भाव रखते हैं। शान्तिके चाहनेवाले हैं। अतः इनसे कभी डरना नहीं चाहिये। हिन्दू-मुसलमानोंकी सेवा करनेकेलिये ही सुभाषबाबूके यह सैनिक यहाँ आये हैं ॥ २४ ॥

एतादृशाः स्युः कथमार्तसेवारक्ता विरक्ता कलहादिकृत्यात्।
मयानुवाच्याः प्रतियात यूयमस्मादिति स्वात्मनिभा इमेद्य ॥२५॥

जो दुःखियोंकी सेवामें लगे हुए हैं, झगड़ा लड़ाईसे जो अलग हैं, जो मेरे आत्माके ही समान हैं ऐसे इनको मैं कैसे कहूँ कि तुम लोग यहाँसे चले जावो ? ॥ २५ ॥

इमे जगद्वञ्चयितुं प्रवृत्ता आडम्बराद्याश्रयणेन नैव।
सेवां पुरस्कृत्य महार्चनीयं साहाय्यमत्रादधते ममापि ॥२६॥

यह लोग कोई आडम्बर आदि करके जगतको ठगनेकेलिए तो प्रवृत्त नहीं हुए हैं। सेवाको आगे रखकर मुझे भी अमूल्य सहायता देते हैं ॥ २६ ॥

सेवाममीषामिह चेत्त्यजामि लोकापवादाद्भयतोन्यतोपि।
लघुत्वमात्मन्युररीकृतं स्याद्भीरुर्भवेयं च जगत्समक्षम् ॥२७॥

यदि लोकापवादके कारण अथवा किसी अन्यभयसे मैं इनकी सेवा—

इनके द्वारा की जानेवाली सेवाका त्याग करता हूँ तो मुझे मेरे मनमें लघुता मालूम होती है और जगत्के आगे मुझे भीरु बनना पड़ता है ॥ २७ ॥

**ततोर्थये वो गतशङ्कचित्ता यूयं समे विश्वसितेषु सम्यक् ।**
**भवेत्क्षतिः कापि कथंचनापि नाद्धा वचो मे हृदये कुरुध्वम् ॥२८॥**

अतः मैं आपसे विनय करता हूँ कि आप चित्तसे शङ्का दूर कर दें। इनमें सम्पूर्ण विश्वास रखें। कभी किसी प्रकारकी क्षति नहीं हो सकेगी। मेरी बातको अच्छी तरहसे हृदयमें स्थान दें ॥ २८ ॥

**चित्तेन चैतान्मलिनेन सिक्खांत्रक्षामि चेत्स्यान्मम नाश एव ।**
**एते भवेयुर्यदि हन्त मिथ्याचारा व्रजेयुर्विवशा भुवोस्याः ॥२९॥**

यदि मैं मलिनमनसे इन सिक्खभाइयोंको रखता होऊँ तो मेरा नाश ही होगा। यदि यह लोग मिथ्या आचारविचारवाले होंगे तो इस भूमिसे लाचार होकर चले जायँगे ॥ २९ ॥

**एवं समाश्वास्य महर्षिवर्यो नोवाखलीयान्यवनान्कथञ्चित् ।**
**तैर्नाशितान्प्रज्वलितान्गृहादीन्स्थलात्स्थलं वीक्षितुमाट पद्भ्यः ॥३०॥**

महात्माजी इस प्रकारसे नोवाखालीके मुसलमानोंको किसी-किसी प्रकार समझाकर उन्होंने जिन घरोंको जलाया था और नष्ट किया था उन्हें देखनेके लिये पैदल ही एक स्थानसे दूसरे स्थानमें घूमते थे ॥३०॥

**श्रीरामपूरात्प्रथमं स चण्डीपुरं ततो मासिमपूरमापत् ।**
**फतेहपुराद्दासपडां ततोगाज्जगत्पुरं लामचरं करप्पम् ॥३१॥**

यात्राके क्रमका निर्देश किया जाता है। श्रीरामपुरसे चलकर, चण्डीपुर गये। वहाँसे मासिमपुर, वहाँसे फतहपुर, वहाँसे दासपाड़ा, वहाँसे जगत्पुर, वहाँसे लामचर और वहाँसे करपाड़ा ॥ ३१ ॥

**शाहापुरं प्राप्य गतो भटीयाल्पुरं च नारायणपूरमस्मात् ।**
**असौ यतिर्दश्घरियां प्रपेदे तत्पारकोटं स इतारखोराम् ॥३२॥**

फिर शाहपुर, भटियालपुर, नारायणपुर, दशघरिया, पारकोट, होकर पश्चात् इतरखोरा गये ॥ ३२ ॥

शिरण्डिकेथूडिपनीयलानि गत्वा शनैर्दालतमाप तस्मात् ।
मुरायिमं चैत्य ततः स हस्नाबादं मुहम्मदूपुरमीयिवान्सः ॥३३॥

वहाँसे शिरण्डी, वहाँसे कथूड़ी, वहाँसे पनियाला जाकर डाल्टा गये। वहाँसे मुराइम जाकर हसनाबाद और पश्चात् मुहम्मदपुर गये ॥ ३३ ॥

पाल्लां ततो बादलकोटचाटाखिले भओरं गतवान्महर्षिः ।
ततो जयागं ह्यमकीं नचोरीमेवं क्रमाद्ग्रामचयान्ददर्श ॥३४॥

वहाँसे पाल्ला, तब फिर बादलकोट, चाटाखिल, भजोर, इसके बाद जयाग, अमकी, चोरिन इत्यादि ग्रामोंको महात्माजीने क्रमसे देखा ॥ ३४ ॥

ग्रामेषु वा ग्रामटिकासु वह्निस्नातानि धामानि शतानि देवः ।
ददर्श तस्माच्चिखिदे परं स दैवप्रकोपं यवनेषु मेने ॥३५॥

छोटे बड़े गाँवोंमें श्रीमहात्माजीने सैकड़ों जले हुए घरोंको देखा। इससे वह बहुत खिन्न हुए। तथा यह मान लिया कि मुसलमानोंपर ईश्वरका कोप है। अन्यथा वह इतना बड़ा पाप कैसे कर सकते ॥ ३५ ॥

वृन्दं शतानां निहताहतानां हिन्दूजनानां मुसलीमलोकैः ।
गृध्रैः शृगालैश्च निकृत्यमानं क्षितौ तनूनां स ददर्श तत्र ॥३६॥

वहाँ सर्वत्र महात्माजीने देखा कि मुसलमानोंके द्वारा मारे और घायल किये सैकड़ों हिन्दुओंके शरीरोंके वृन्दको पृथिवीपर गिद्ध और सियार नोंच रहे हैं ॥ ३६ ॥

केचिच्च तत्राहतिभग्नदोषश्छिन्नाङ्घ्रियुग्माश्च विभिन्नशीर्षाः ।
केचिच्च विघ्रा विगतैकहस्ता गतैकपादा अपि केचिदासन् ॥३७॥

वहाँ किन्हींके दोनों हाथ कटे पड़े थे, किन्हींके पैर काट डाले गये थे, किन्हींके सिर कटे थे, किन्हींकी नाक कटी थी, किन्हींका एक हाथ कटा था और किन्हींका एक पैर कटा था ॥ ३७ ॥

स्रवच्छिरोभेदमहास्रधारा चञ्च्वाक्षिणी कापि च निष्कुषन्तः ।
शवेभ्य आच्छिद्य च मांसखण्डानश्नन्त आशासु च विष्किरौघाः ॥३८॥

कहीं तो देखा कि सिर फट जानेसे उसमेंसे रक्तकी धारा निकल रही है और पक्षी = कौए-गिद्ध आदि उसे चोंचसे नोच रहे थे, कहीं देखा कि शव = लाशमेंसे मांसको नोच नोचकर पक्षी चारों दिशाओंमें बैठकर खा रहे हैं ॥ ३८ ॥

क्वचिद्धतानां च कराः शिशूनामङ्गुल्य आसन्भुवि संनिरीक्ष्याः ।
क्वचिद्भुजौ कापि च पञ्चशाखान्क्वचित्कफोणींश्च यतिर्ददर्श ॥३९॥

कहीं मारे गये हुए छोटे-छोटे बच्चोंके हाथ और कहीं-कहीं अङ्गुलियाँ पृथिवीपर जहाँ तहाँ पड़ी हुई हैं । कहीं भुजा, कहीं हथेली और कहीं केहुनी पड़ी हुई हैं । यह सब महात्माजीने देखा ॥ ३९ ॥

हा हेति कृत्वा रुदतां तदोरस्ताडं जनानां हतबान्धवानाम् ।
विलुण्ठितागारधनप्रजानां ददर्श वृन्दानि स तत्र तत्र ॥४०॥

उन्होंने देखाकि जिनके सगा-सम्बन्धी मारे गये हैं, जिनके घर, धन, प्रजा सब कुछ लूट लिये गये हैं उनका समूह का समूह जहाँ तहाँ छाती कूट कूटकर रो रहा है ॥ ४० ॥

माता हता मे हत एव तातोखिला हता मे बत बन्धवोद्य ।
गच्छामि कं कुत्र दशा च का मे स्याद्धन्त दैवेन कृतं किमद्य ॥४१॥

मेरी माँ मारी गयी, पिता भी मारे गये, सब भाई मार डाले गये । मैं कहाँ किसके पास जाऊँ ! मेरी क्या दशा होगी ? हा दैवने आज क्या किया ! ॥ ४१ ॥

हा नाथ हा प्राणपते विहाय मामद्य यातोसि कथं च कुत्र ।
तत्प्रेम नैसर्गिकमेव तत्ते सौहार्दमद्यैकपदे क्व यातम् ॥४२॥

हे नाथ, हे प्राणनाथ, आज मुझे छोड़कर आप क्यों और कहाँ चले

गये? आपका वह स्वाभाविक प्रेम और सौहार्द क्षणभरमें ही कहाँ चला गया? ॥ ४२ ॥

हे पुत्र कुत्रासि गतस्त्वमद्य मामक्षिहीनां जरठां विपन्नाम्।
विहाय मां त्वज्जनकेन सार्धं गच्छन्कथं मामनयो न साकम् ॥४३॥

हे पुत्र! तू कहाँ है? आज मुझ अंधी, बुड्ढी और दुखियारीको छोड़कर तू कहाँ चला गया? अपने बापके साथ जाता हुआ तू मुझे भी साथ क्यों न ले गया? ॥ ४३ ॥

अन्धौ कथं त्वं पितरौ विहाय प्राया अपृष्ट्वैव सुत क कस्मात्।
हा वत्स कोद्य प्रभृति त्वया नौ हीनौ जलं जीवित पाययेत ॥४४॥

हे पुत्र! तू अपने मातापिताको छोड़कर, पूछे विना ही कहाँ और क्यों चला गया? हे वत्स, हे मेरे प्राण! तेरे बिना आज हमलोगोंको जल कौन पिलावेगा? ॥ ४४ ॥

एतत्त्वदर्थं सुत मत्स्यखण्डान्नवौदनं क्षुद्व्यथितातिशीघ्रम्।
आसं प्रयासान्ननु पाचयन्ती क्षुत्क्षामकण्ठोसि गतः क तात ॥४५॥

हे भूखसे पीड़ित पुत्र! तेरे लिये ही तो यह मछलियाँ और भात मैं पकवा रही थी; तू भूखा ही कहाँ चला गया? ॥ ४५ ॥

एवं बहूनां प्रवयःपितॄणां गताक्षिकाणां च सचक्षुषां च।
हा हा तदोरःप्रतिपेषमारोदतां स शुश्राव वचोतिदीनम् ॥४६॥

इस प्रकारसे बूढ़े, अंधे अथवा आँखवाले छाती कूटकर रोनेवाले मातापिताके अति दीनवचन उन्होंने सुने ॥ ४६ ॥

तदस्ति पात्रं लवणस्य तत्र स्थितं मदीयं च तमाखुपात्रम्।
तत्रास्ति मृत्पात्रमिदं च भिक्षापात्रं समाकर्षय शीघ्रमेव ॥४७॥

वह नमक रखनेका पात्र है, वह मेरा तमाखूका डब्बा है, वहाँ मिट्टीका बर्तन है और यह भिक्षा मांगनेका पात्र है। शीघ्र ही सबको बाहर करावो ॥ ४७ ॥

तत्रास्ति धौतं वसनं च तत्र शाटी च तत्रास्ति कटश्च कन्था ।
एतांश्च शब्दान्बहु दुर्विधानां दहद्गृहेषु श्रुतवान्महात्मा ॥४८॥

वहाँ धोती है, वहाँ साड़ी है, वहाँ चटाई है और वहाँ गूदड़ी है, इन शब्दोंको बहुतसे गरीबोंके जलते हुए घरोंमें उन्होंने सुना ॥ ४८ ॥

भृत्या इमाः सन्ति च रत्नपेटा इमाश्च वस्त्रैर्विविधैर्भृतास्ताः ।
इमा अलङ्कारभृताश्च मञ्जूषास्ताः सपद्येव बहिर्नयध्वम् ॥४९॥

नौकरो, यह रत्नकी पेटी है, यह तरह-तरहके कपड़ोंकी पेटी है, इनमें गहने हैं, सबको जल्दी बाहर निकालो ॥ ४९ ॥

इमे च वेदाः स्मृतयश्च शिष्या एताः पुराणानि कियन्ति तावत् ।
शास्त्रार्थपत्त्राणि गुरोः श्रुतानि सर्वाणि शीघ्रं बहिरानयेत ॥५०॥

यह वेद हैं, यह शास्त्र हैं, यह कितने श्रीगुरुजीके पाससे सीखे और लिखे हुए पुराने शास्त्रार्थादिके खर्रे हैं, सबको हे शिष्यो ! शीघ्र बाहर ले आवो ॥ ५० ॥

इमानि भस्मानि महार्घ्यकाणि तथौषधानां निचयं महार्घ्यम् ।
एतं च तं सुश्रुतमाधवीयग्रन्थादि शिष्या बहिरानयध्वम् ॥५१॥

यह बहुमूल्य भस्म हैं, यह बहुमूल्य औषधियाँ हैं, इनको, उनको और सुश्रुत, माधवनिदान आदि ग्रन्थोंको हे शिष्यो बाहर निकालो ॥५१॥

धगद्धगत्प्रज्वलितेषु गेहेष्वेवं निशम्यैव वचःप्रवाहम् ।
उत्तिष्ठमानस्य महात्मनोस्य हिताय सर्वस्य मनो दुदाव ॥५२॥

धक् धक् जलते हुए घरोंमें ऊपर कहे गये शब्दोंको सुनकर सबके कल्याणके लिये प्रयत्न करनेवाले महात्माजीका मन दुःखी हो गया ॥५२॥

गेहे गेहे सर्वदेहीव विष्टः श्रावं श्रावं सर्वलोकव्यथास्ताः ।
पातं पातं चक्षुषोर्वारिधाराः स्मारं स्मारं रामदेवं स तस्थौ ॥५३॥

घर-घरमें आत्माके समान जा जाकर, सबकी उन व्यथाओंको सुन

सुनकर, आँखोंसे अश्रुधारा गिरा गिराकर, रामका स्मरण कर कर महात्माजी वहाँ ठहरे ॥ ५३ ॥

शैत्यात्कम्पः सर्वदेहेऽपि साधोः पादातेः सद्धर्मनिष्ठस्य तस्य ।
पादस्फोटो नग्नपादस्य जातो नो वा जातु क्वापि कम्पाय मार्गात् ॥५४॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
अष्टमः सर्गः

महात्माजीके शरीरमें जाड़ेके कारण कम्प हो रहा था, धर्मनिष्ठ वह पैदल और बिना चप्पल या जूतेके चल रहे थे अतः पैर फट गये थे, परन्तु वह कम्प और वह पैरकी बेवाई उन्हें कभी अपने मार्गसे कम्पित करनेमें सफल नहीं हो सकीं ॥ ५४ ॥

इति परमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायाम्
अष्टमः सर्गः



# नवमः सर्गः

उद्दिश्य कस्मिन्नपि शान्तिकाले मनुं कुमारीं निजगाद दिव्याम् ।
वाचं वसंस्ताणकुटारकेसौ विचारचेता गतदेहबोधः ॥ १ ॥

किसी शान्तिके समयमें विचारपरायण और विदेह बने हुए महात्माजी श्रीकुमारी मनुगांधीको उद्देश्य बनाकर यह दिव्य वचन कहने लगे ॥ १ ॥

स्याच्चेत्स्थिरत्वं मम योग्यरीत्या भवेयुरेवात्र मयोपयोज्याः ।
अन्ये युवानोपि पवित्रयज्ञे ह्यस्मिन्धरादूषणसंलवित्रे ॥ २ ॥

यदि मेरी स्थिति यहाँ योग्यरीतिसे हो तो पृथ्वीके दोषोंको दूर करनेवाले इस पवित्र यज्ञमें दूसरे नवयुवक भी मेरे उपयोगमें आ सकते हैं ॥२॥

क्रूरापराधिष्विह संचरत्सु मुक्तेषु नो निर्भयतावकाशः ।
परन्तु निर्भीकतयात्र शिक्ष्यं स्थातुं भयाक्रान्तदिनेषु सर्वैः ॥ ३ ॥

यदि यहाँ क्रूर और अपराधी मुक्तरूपसे फिरते हों तो निर्भयताकेलिये कोई अवकाश ही नहीं है । परन्तु भयके दिनोंमें सबको निर्भीक होकर रहना सीखना चाहिये ॥ ३ ॥

यावत्सुशिक्षेयमुदारभावैर्न स्याद्गृहीताचरिता च तावत् ।
पङ्गुत्वमस्मान्न कदापि जह्यात्परावलम्बित्वमुपासितं स्यात् ॥ ४ ॥

जबतक इस सुन्दर शिक्षाका उदारभावसे न ग्रहण किया जाय और न आचरण किया जाय तबतक हम सदा पङ्गु ही बने रहेंगे । परायेकी सहायता लेनी ही पड़ेगी ॥ ४ ॥

ये विश्वसन्ति प्रतिहिंस्रवृत्तौ शिक्ष्या च तैर्वीरजनोपभोग्या ।
हिंसा न बालेष्वबलेषु वृद्धेष्वथाबलास्वप्युपशोभते नो ॥ ५ ॥

जो लोग प्रतिहिंसामें विश्वास रखते हैं उन्हें वीरजनोचित हिंसा सीखनी चाहिए । बाल, वृद्ध, निर्बल और अबलाओं पर हिंसा शोभा नहीं देती है ॥ ५ ॥

येषामहिंसाव्रतमेव धर्मः प्रभाव एतादृश एव काले ।
तस्यास्तु विज्ञेय उदात्तचित्तैस्तैर्धर्मशोभापहृतान्तराक्षैः ॥ ६ ॥

जिनका अहिंसाका व्रत ही धर्म है उन उदार चित्तवालों और धर्मकी शोभासे मोहित मनवालोंको उस धर्मका प्रभाव ऐसे ही विषम कालमें जानना चाहिए ॥ ६ ॥

भवेदहिंसा न बलं कदाचिन्निर्बल्यभाजां च भयान्वितानाम् ।
वीरैकभोग्या नितरां यथा सा स्यात्तद्विधानीयमिहाखिलेन ॥७॥

निर्बलों और डरपोकोंका बल अहिंसा कभी नहीं है। वह तो केवल जिस प्रकारसे वीरभोग्य बने वैसा सबको करना चाहिये ॥ ७ ॥

लोकानहिंसा विमलाब्जपादसंसेवनासक्तिभुजोपि भीतान् ।
वीक्ष्याद्य भीतोस्मि भवेन्न मय्यप्याबल्यशोभेव विराजमाना ॥८॥

जो लोग अहिंसाके ही पुजारी हैं उन्हें भी भयभीत देखकर मुझे भय लगता है कि कहीं मुझमें अहिंसा कमजोरोंकी ही न हो ॥ ८ ॥

यथायथं सास्ति मया गृहीता न वेति दातुं हि परीक्षणं मे ।
कर्त्तुं निरीक्षामपि मामकस्य चित्तस्य दार्ढ्यस्य समागतोत्र ॥९॥

मैंने उस अहिंसाका उचित रीतिसे ग्रहण किया है या नहीं, इस परीक्षाको देनेकेलिये तथा अपने चित्तकी दृढ़ताका निरीक्षण करनेके-लिये यहाँ आया हूँ ॥ ९ ॥

सन्तीह मद्रक्षणकार्ययुक्ताः सशस्त्रराजन्यजना अनेके ।
आयुश्च सिक्खा अपि पर्शुरामः श्रीनिर्मलः श्रीमनुरेषिकापि ॥१०॥

मेरी रक्षा करनेकेलिये यहाँ सशस्त्र अनेक पुलिस मौजूद हैं। श्रीपरशुराम, श्रीनिर्मलबाबू और यह मनुगांधी भी हैं ही। सिक्ख भी आ गये हैं ॥ १० ॥

एतैः समस्तैः परिवारितोहं स्यां निर्भयत्वेन ततस्ततो वा ।
गच्छन्निति स्वात्मपरीक्षयैव स्थितिर्मदीयेह विभावनीया ॥११॥

इन सब लोगोंसे घिरा हुआ मैं इधर-उधर निर्भयरूपसे जाता हूँ। आत्मपरीक्षाकेलिये ही मेरी यहाँ स्थिति है, ऐसा जानना चाहिये ॥ ११ ॥

उपद्रुतोद्यास्ति विहारदेशो दाहो गृहाणां धनधान्यलुण्ठः।
बालाबलानामपहार एष क्रयः सदा वर्तत एव देशे ॥१२॥

बिहारमें आज उपद्रव है। घर जलाये जाते हैं। धन-धान्य लूटे जाते हैं। बालकों और स्त्रियोंका अपहरण हो रहा है। देशमें रोज यही क्रम चल रहा है ॥ १२ ॥

होरेस् एलेग्ज़ेन्डर आगतस्तत्प्रोवाच तं योगिशिरोमणीन्द्रः।
अध्यात्मविद्यामधिकृत्य वाचा मृद्व्या सदाचारमहागुरुः सः ॥१३॥

श्री० होरेस् एलेग्जेंडर वहाँ आये। उनको योगिशिरोमणि श्रीमहात्माजी अध्यात्मविद्याके सम्बन्धमें मधुरवाणी से बोले ॥ १३ ॥

जानामि दोषान्प्रसृताञ्जनेषु परं न तान्प्रेक्षितुमस्ति कामः।
गुणानवालम्बत एव चेतो नित्यं मदीयं स्वहिताभिलाषि ॥१४॥

लोगोंमें दोष आ गये हैं, इसे मैं जानता हूँ। परन्तु दोष देखनेकी मेरी इच्छा नहीं है। मेरा चित्त स्वहितकी भी तो इच्छा रखता है। परदोष देखने और विचारनेसे अपना मन भी मलिन होता है। उसके मलिन होने से अपना अहित होता है। अतः मेरा चित्त नित्य गुणोंका ही अवलम्बन करता है ॥ १४ ॥

दोषानदोषाञ्जगदीश्वरोस्ति द्रष्टुं जनानां परमः समर्थः।
त्रिकालवस्तुप्रविदः पदं नो स्पृशामि तत्तत्र न मेधिकारः ॥१५॥

मनुष्योंके दोष और गुणको जाननेमें तो भगवान् ही परम समर्थ है क्योंकि वह त्रिकालदर्शी है। त्रिकालदर्शीके पदपर मैं नहीं पहुँचा हूँ अतः उस निरीक्षणमें मेरा अधिकार नहीं है ॥ १५ ॥

अयं परीक्षानिकषोस्ति काल उपस्थितोद्धा तव भाग्यकान्तेः।
बहूनि वस्तूनि च शिक्षितुं चेदीहा तव स्यात्कुशलं तव स्यात् ॥१६॥

तुम्हारे भाग्यके प्रतापकी परीक्षाकेलिये यह समय कसौटी समान है। यदि तुम्हारे हृदयमें बहुत वस्तुओंको जाननेकी इच्छा हो तो तुम्हारा भला ही होगा ॥ १६ ॥

शिक्षां ग्रहीष्यस्यथ चेदमुष्मात्कालात्सदा स्यात्सहयायिनी ते।
महाविपद्वारिधरो विकीर्णो भवेदिति स्युर्बहुलाशिषो मे ॥१७॥

यदि इस कालसे तुम उपदेश ग्रहण करोगी तो वह सदा तुम्हारा साथी रहेगा। उससे महाविपत्तिरूप बादल बिखर जायँगे, यह मेरा बहुत बड़ा आशीर्वाद है ॥ १७ ॥

अयं महायज्ञ उपस्थितोद्यानुष्ठानमस्यानुदिनं मनो त्वाम्।
उच्चैरवश्यं पदवीं नयेत न निष्फलं तद्भविता कदाचित् ॥१८॥

आज यह महायज्ञ उपस्थित है। इसका अनुष्ठान, हे मनु, तुमको अवश्य ही ऊँचे पदपर ले जायगा। यह कभी निष्फल नहीं होगा ॥१८॥

प्रार्थ्यः परेशः सततं त्वयेदं यच्छेन्मनःशुद्धिमनुग्रहेण।
सत्ये मनोवृत्तिरथाभयत्वं दास्यत्यवश्यं सदयः सदा ते ॥१९॥

भगवान्से तुम्हें रोज प्रार्थना करनी चाहिये कि कृपा करके मानसिक शुद्धि—प्रदान करे, एवं सत्यमें ही मनोवृत्ति और निर्भयता अर्पण करे। वह बहुत दयालु है अवश्य ही इष्टवस्तु देगा ॥ १९ ॥

उपस्थिताश्चेत्सकलाः सहाया दैवादितः क्वापि गता भवेयुः।
अस्मिन्महासंकटकण्टकाढ्ये तदा त्वयाहं ससुखो व्रजामि ॥२०॥

इस समय जितने सहायक उपस्थित हैं, दैववश यदि यह सब चले जायँ तो इस संकटरूप कण्टकोंसे भरे हुए समयमें हम दोनों सुखसे चल सकेंगे ॥ २० ॥

यदा समस्तै रहितौ भवेव मित्त्रैः सहायैः परिचारकैश्च।
तदा मनो नत्स्यति मामकीनं परं परेशानुसहायमत्र ॥२१॥

जब सारे मित्र, सहायक और सेवा-रक्षा आदि करनेवालोंसे हम

दोनों छूट जायँगे तब केवल ईश्वरकी सहायता प्राप्त करनेवाला मेरा मन नाच उठेगा ।। २१ ।।

नैराश्यमेत्याखिलसंगिनश्चेदावां परित्यज्य प्रतिव्रजेयुः ।
तदा समग्रं जगदत्र किञ्चिन्नवं नवं हन्त निदर्शयामि ।।२२।।

जब मेरे सभी साथी निराश होकर हम दोनोंको छोड़कर चले जायँगे तब मैं समस्त जगत्को कुछ नयी-नयी वस्तु दिखाऊँगा ।। २२ ।।

त्वत्प्रार्थनादीनरवं महेशः श्रुत्वा प्रसद्यापि च सर्वलोकान् ।
हिन्दूमुसलमानजनान्सुमत्या संभूषयेत्सर्वजगत्पितासौ ।।२३।।

तुम्हारी प्रार्थनाके दीन शब्दको सुनकर और प्रसन्न होकर भगवान् हिन्दु और मुसलमान् सब लोगोंको सुमति प्रदान करेगा; क्योंकि वह सारे जगत्का पिता है ।। २३ ।।

निरन्तरं चेत्तवपादकञ्जसेवापदे मां नियुनक्षि देव ।
त्यक्ष्यामि यावत्तनु नान्तिकं ते मनुर्मुदा वाचमुदाजहार ।।२४।।

श्रीमनुगांधी प्रसन्न होकर बोलीं कि यदि आप मुझे सदा अपने चरण-कमलकी सेवामें रखेंगे तो मैं जबतक शरीर रहेगा आपका सांनिध्य नहीं छोडूँगी ।। २४ ।।

पदा व्रजञ्श्रीयतिराज एकं ग्रामं जगामामकिनामधेयम् ।
सायं न तत्राप्तमजापयस्तत्तृणद्रुमक्षीरमपाययत्तम् ।।२५।।

महात्माजी पैदल ही चलते हुए एक आमकी-नामक गाँवमें पहुँचे । वहाँ सायङ्काल बकरीका दूध नहीं मिला अतः श्रीमनुगांधीने उन्हें नारियल-का पानी पिलाया ।। २५ ।।

नेदं पयस्तज्जठरे गतं सज्जातं कदाचित्सुपचं ततस्तत् ।
बभूव तद्रेचकमेव तेन वृद्धं शरीरं गतशक्ति जातम् ।।२६।।

वह नारियलका पानी उनके पेटमें जाकर पचा नहीं अत एव वह महात्माजीको रेचक हो गया । उससे उनका वृद्ध शरीर अशक्त बन गया ।।२६।।

नैर्बल्यपीडाव्यथितो महात्मा मूर्छामवाप्यैकपदे पपात सः।
भूमौ ततो व्यग्रमनाः कुमारी मनुः सचिन्ता व्यथिता बभूव ॥२७॥

निर्बलताकी पीड़ासे पीड़ित होकर महात्माजी एक दम मूर्छित होकर भूमिपर गिर गये। तब व्याकुल मनवाली कुमारी मनुगांधी चिन्तित और व्यथित हो गयीं॥ २७॥

श्रीनिर्मलं सा पुनराह्वयन्ती जाता सुशीलां मनसा क्षणेन।
परं तदानीं यतिराजमूर्छाभङ्गोभवद्भद्रतरं ततोभूत् ॥२८॥

श्रीमनुगांधी निर्मल बाबूको बारबार बुलाने लगीं और डाक्टर श्रीसुशीलाका स्मरण करने लगीं। परन्तु उसी समय महात्माजीकी मूर्छा गयी और कुशल हो गया॥ २८॥

उवाच सद्यः स मनुं कुमारीं किमर्थमाहूतवती त्वमन्यम्।
कथं न रामस्मरणे त्वदीयं लीनं मनो मां व्यथितं निरीक्ष्य ॥२९॥

उन्होंने तत्काल ही मनुकुमारीसे कहा कि तुमने मुझे पीड़ित देखकर अन्यको क्यों बुलाया? तुम्हारा मन रामस्मरणमें क्यों नहीं लीन हुआ?॥ २९॥

श्रीरामनामास्ति महौषधं मे स आश्रयः सर्वनिराश्रयाणाम्।
वाच्यं सुशीलां प्रति नैव किञ्चिद्भवेन्न तस्या हृदये विषादः ॥३०॥

रामनाम ही मेरेलिये परम औषध है। निराश्रितोंका वही एक आश्रय है। सुशीलाको भी कुछ नहीं कहना जिससे उनके मनमें विषाद न हो॥ ३०॥

स्यात्प्रत्ययो मे यदि रामनाम्नि सत्यं भवेत्प्रेम परं च तस्मिन्।
रुग्णो मरिष्यामि कदापि नैव पुत्रि प्रतीहीति वचो मदीयम् ॥३१॥

हे पुत्रि, तुम यह विश्वास रखो कि यदि रामनाममें मेरा विश्वास होगा और पूर्ण प्रेम होगा तो मैं रोगी होकर कभी नहीं मरूँगा ॥३१॥

यः कोपि तन्नामनि संरतः स्यात्सोपि प्रपद्येत मृतिं तथैव ।
तस्मिन्परस्मिन्ननुरागभाजां स्यादात्मशुद्धिस्तत एव शान्तिः ॥३२॥

जो कोई भी रामनाममें तल्लीन रहेगा वह वैसा ही शान्त मृत्यु प्राप्त करेगा। परमेश्वरमें जिसका प्रेम होता है उसकी आत्मशुद्धि होती है और उसीसे शान्ति मिलती है ॥ ३२ ॥

केपि स्मरेयुर्यदि रामनाम श्रद्धा समग्रा न भवेच्च तत्र ।
शुका इवाज्ञानहता भवेयुः फलं किमप्यत्र परत्र नो वा ॥३३॥

कोई रामनामका स्मरण तो करते हों परन्तु उसमें पूर्ण श्रद्धा न हो तो जैसे रामनाम बोलनेवाले सुग्गोंको कोई फल नहीं मिलता वैसे ही उन्हें भी न यहाँ और न परलोकमें कोई फल मिलता है ॥ ३३ ॥

यादृग्भवेद्वृत्तिरिहान्तकाले तादृक् फलं प्रेत्य जना लभन्ते ।
तस्मात्प्रयत्येत विलोकितुं तैः समैर्जगद्राममयं सदैव ॥३४॥

अन्तकालमें जैसी वृत्ति रहेगी, मरनेके पश्चात् वैसा ही फल मनुष्य प्राप्त करता है। अतः मनुष्योंको चाहिये कि सदा जगत्को राममय देखनेका प्रयत्न करे ॥ ३४ ॥

रोगात्स्वनिन्दाश्रवणात्स्वकीयानिष्टश्रवाद्वापि मनोतिखिन्नम् ।
श्रीरामनामाभिजपेन शान्तिं नयेत मन्त्रोयमनुत्तमोस्ति ॥३५॥

रोगसे, अपनी निन्दा सुननेसे और स्वजनोंके अनिष्ट श्रवणसे मन अत्यन्त खिन्न हो जाता है। रामनामके जपसे उसे शान्त करना चाहिये। रामनाम सर्वश्रेष्ठ मन्त्र है ॥ ३५ ॥

प्रत्येकसंवत्सरजान्युआरीमासस्य षड्विंशतिथौ चिरेण ।
स्वतन्त्रताप्राप्तिकृते प्रतिज्ञास्मृत्युत्सवः स्वीकृत एव देशे ॥३६॥

प्रतिवर्ष २६ वीं जनवरीको बहुत दिनोंसे स्वतन्त्रताप्राप्तिकेलिये प्रतिज्ञास्मरणका उत्सव देशने स्वीकार कर लिया है ॥ ३६ ॥

तस्मिन्दिने केनचनापि पृष्टः प्रोवाच दुःखार्दितमानसः सः।
हिन्दूमुसल्मानसुहृत्त्वलाभाद्यज्ञोयमारब्ध इह प्रदेशे ॥३७॥

उस दिन किसीसे पूछनेपर दुःखित मनवाले यह कहने लगे कि इस बंगाल प्रान्तमें हिन्दू-मुसलमानमें प्रेम प्राप्त हो इसके लिये मैंने यह यज्ञ शुरू किया है ॥ ३७ ॥

यतः प्रभृत्यत्र महासभाया जन्माभवद्भारतजन्म तच्च।
नवं ततो ग्रामगणेषु नाम स्वतन्त्रतायाः समवारनुतात्र ॥३८॥

जबसे महासभाका भारतमें जन्म हुआ है तभीसे भारतका भी नया जन्म हुआ है। तभीसे भिन्न-भिन्न ग्रामसमूहोंमें स्वतन्त्रताका नाम फैल गया ॥ ३८ ॥

तस्मिन्पवित्रे समये न कोपि हिन्दूमुसल्मानगतं विभेदम्।
एकोप्यजानादिह मानवस्तद्बन्धुत्वदाम्ना निखिलाः सितास्ते ॥३९॥

उस पवित्र समयमें कोई एक मनुष्य भी हिन्दू मुसलमानके भेदको जानता नहीं था और इसीलिये सभी बन्धुताकी डोरीसे बँधे हुए थे ॥३९॥

द्वेषानलोद्यः प्रबलः प्रबुद्धो जनं जनं प्रत्युभयत्र तेन।
नाहं त्रिरङ्गां विवृतां पताकां शक्नोमि कर्तुं ज्वरजर्जराङ्गः ॥४०॥

आज दोनों जातियोंमें मनुष्य मनुष्यके प्रति प्रबल द्वेषाग्नि जल उठा है। अतः तापसे मेरा शरीर जर्जर हो गया है अतः मैं तिरङ्गे झण्डेको नहीं उड़ाऊँगा ॥ ४० ॥

नकार एषोस्ति निजेच्छयैव बलान्न केनापि नियोजितोस्मि।
उड्डाययेयं प्रतिषेधितोपि सिताङ्गशिष्ट्या त्रिकलां पताकाम् ॥४१॥

झंडा चढ़ानेको मैं जो इन्कार कर रहा हूँ उसमें मेरी स्वेच्छा कारण है। ऐसा करनेको मुझे किसीने कहा नहीं है। यदि अंग्रेजी सर्कार झंडा उड़ानेसे मुझे मना करे तो मैं उस तिरंगे झंडे को अवश्य उड़ाऊँ ॥४१॥

पूर्वं यदासीदुभयोरभेदो हिन्दुर्न कश्चिन्न मुहम्मदीयः ।
सुहृत्त्वमासीदुभयोरतीव कालभोवत्स स्मरणीय एव ॥४२॥

पहिले जब दोनों जातियोंमें एकता थी तब न कोई हिन्दू था और न कोई मुसलमान । दोनोंमें अत्यन्त सौहार्द था । वह समय तो अब केवल याद करनेको रह गया है ॥ ४२ ॥

तदा पताकेयमुदग्रतेजा आसीत्समेषां परिरक्षणीया ।
देहैरपि प्राणपणेन चापि धन्याः स्तुतास्ते दिवसा प्रयाताः ॥४३॥

उस समय इस झंडेकी रक्षाका भार सबके ही ऊपर था । शरीर और प्राणसे भी यह रक्षणीय था । वह धन्य और प्रशंसनीय दिन चले गये ॥ ४३ ॥

परस्परस्मिन्नरितोद्गतास्ति त्वन्तामहन्तां परिपालयन्तः ।
देशस्य दौर्भाग्यमुदीरयन्तो व्रजन्त्यमी अद्य विपत्तिवर्त्मे ॥४४॥

परस्पर शत्रुता पैदा हो चुकी है । तू तू और मैं मैं करते हुए देशके दुर्भाग्यको बढ़ाते हुए आज लोग विपत्तिके मार्गमें चले जा रहे हैं ॥४४॥

कस्मै कथंकारमहं मदीयां प्रदर्शयाम्यद्य मनोर्तिमालाम् ।
कस्मै पुनस्तां कथयामि कुत्र व्रजान्यधन्यो ननु कान्दिशीकः ॥४५॥

आज मैं मेरे हृदयके दुःखोंको किसे और कैसे दिखाऊँ ? उन दुःखोंको किससे कहूँ ? कहाँ जाऊँ ? आज मुझ अभागेके लिये कोई दिशा नहीं है ॥ ४५ ॥

देशे दशेयं यदि वर्ततेद्य सर्वत्र विश्वासलयो विभाति ।
महाप्रभावा भगवत्यनिन्द्या स्वतन्त्रता कं शरणं करोतु ॥४६॥

यदि देशमें आज यही दशा है, सर्वत्र विश्वासका नाश हो चुका है तो महाप्रभावशालिनी भगवती स्वतन्त्रता आज किसकी शरण ढूँढ़े ? ॥ ४६ ॥

सितत्वचामत्र न जातु भूयः स्थितिः कथंचिद्भुजगस्फटेव ।
रश्यामरीकावसरं शुभंयुं प्रतीक्षते हन्त वयं हताः स्मः ॥४७॥

जैसे सर्पका फण स्थिर नहीं रहता वैसे ही अब अंग्रेज यहाँ किसी तरह भी रह नहीं सकते। रशिया और अमेरिका एक अच्छे अवसरकी प्रतीक्षामें हैं। दुःख है कि हमारा सर्वनाश होगा ॥ ४७ ॥

भवेम चेन्नैव विधूतपापाः परस्परं विश्वसिमो न वापि।
संभूय कल्याणरता न वा तद्देशस्य नाशो नियतो विभाति ॥४८॥

यदि हम सब पापोंको खंखेरकर परस्पर विश्वास नहीं करते और मिलकर कल्याणमें नहीं लग जाते तो मालूम होता है कि देशका नाश अवश्यंभावी है ॥ ४८ ॥

यतः प्रभृत्येव वयं स्वदोषवीक्षाप्रवीणा नितरां भवेम।
ततः प्रभृत्येवमनर्थकारि कल्यादिकं स्यान्न मनःप्रसत्त्यै ॥४९॥

जभीसे हम अपने दोषोंको देखने लग जायँगे तभीसे यह अनर्थकारी झगड़ा वगैरहसे मन प्रसन्न नहीं होगा ॥ ४९ ॥

तदा कथं दीनजनस्य सेवा श्रेयश्च लोकस्य भवेदितीह।
विचारयिष्याम उदारमत्या न विस्मरिष्याम इदं गतं न ॥५०॥

तब तो उदार बुद्धिसे हम यही विचार करेंगे कि दीनोंकी सेवा और कल्याण हमसे कैसे हो। क्या उस समय इस भूतकालकी घटनाको हम भूल नहीं जायँगे? अवश्य भूलेंगे ॥ ५० ॥

अजायतेदं यदनिष्टमद्य जनिष्यते श्वोपि मनोव्यथायै।
न ज्ञानतस्तन्मनुजा अकुर्वन्नैसर्गिकं तन्निखिलं हि वेद्यम् ॥५१॥

आज जो अनिष्ट पैदा हुआ है और जो कलह पैदा होगा उसे मनुष्योंने ज्ञानपूर्वक पैदा नहीं किया है। वह तो स्वाभाविक ही समझना चाहिए ॥ ५१ ॥

कृत्वैव पापं हृदये वितप्ता पश्चात्तपेच्चेज्जनता कथंचित्।
मनुष्यता तर्हि विकासमार्गे प्रयास्यति क्रौर्यमपास्य दूरे ॥५२॥

जनता यदि आप पाप करके संतप्त होकर किसी प्रकार भी पश्चात्ताप करे तो मनुष्यता क्रूरताको हटाकर विकासमार्गमें प्रयाण करेगी ॥ ५२ ॥

मुहम्मदीया न तदा निहन्युर्निरागसोल्पानबलांश्च हिन्दून् ।
न हिन्दवो मोहमदीयलोकरक्तप्रवाहान्परिवाहयेयुः ॥५३॥

तब न तो मुसलमान अल्पसंख्यक, निर्बल और निरपराधी हिन्दुओं-को मारेंगे और न हिन्दू मुसलमानोंके खूनको बहावेंगे ॥ ५३ ॥

द्वेषो महादोष इति प्रसिद्धः शास्त्रेषु लोकेषु च सर्वदैव ।
दोषान्निराकृत्य मनुष्यजातिर्देवत्वमायास्यति नान्यथेति ॥५४॥

शास्त्रों और लोकमें भी हमेशा यह कहा जाता है कि किसीसे द्वेष करना बहुत बड़ा दोष है । मनुष्यजाति दोषोंको दूर करके ही देवता बन सकती है, अन्यथा नहीं ॥ ५४ ॥

इच्छन्ति यद्यपि जनाः सकलाः पृथिव्यां,
शान्तिं सुखं निरवधि प्रलयं समन्तात् ।
आधेस्तथा व्यथितमानसवृत्तयस्ते,
व्याधेरपि प्रतिदिनं न परं कृतार्थाः ॥५५॥

यद्यपि सभी लोग शान्ति और निरवधिक सुखकी इच्छा करते हैं । जब उनकी मनोवृत्तियाँ थक जाती हैं तब वह आधि और व्याधिके नाशकी भी इच्छा करते हैं परन्तु वह कृतार्थ नहीं हैं ॥ ५५ ॥

कातार्थ्यमाश्लेष्टुमपीह तेषामिच्छा भवेच्चेत्परिहाय सर्वान् ।
कामादिदोषान् मनसः प्रसादे युक्ता भवेयुर्न परोस्ति पन्थाः ॥५६॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
नवमः सर्गः

यदि वह अपनी कृतार्थता चाहते हों तो उन्हें चाहिये कि कामादि दोषोंको छोड़कर मनकी निर्मलतामें लग जायँ । दूसरा मार्ग नहीं है ॥५६॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
नवमः सर्गः

# दशमः सर्गः

श्रुत्वा विहारधरणिप्रसरेतिभीमं,
हिंसादुरन्ततटिनीजवसंप्रचारम्।
हिंसासुरीहृदयदारणदक्ष एष,
श्रीमान्यतिर्गलदशेषसुखो बभूव ॥१॥

बिहारकी भूमिपर अत्यन्त भयङ्कर हिंसारूप नदीके वेगवान् प्रवाहको सुनकर हिंसा-राक्षसीके हृदयको फाड़नेमें कुशल श्री महात्माजी अत्यन्त दुःखी हुए ॥ १ ॥

स्वस्य प्रियं प्रियतरं च विहारमेव,
शान्तं विधातुमचिरं नवखालिदेशात्।
महमूदसैयदविदत्तसमस्तवार्त-
स्तीव्रं ज्वलन्स हृदये प्रययौ विहारम् ॥२॥

अपने प्रिय और प्रियतर विहारको शान्त करनेके लिये महात्माजी हृदयमें दुःखी होकर नोवाखालीसे बिहार गये। डा० महमूदसैयदने उन्हें सब वृत्तान्त भेज दिये थे ॥ २ ॥

उत्कम्पकं शमयितुं स दवं दयालु-
रुन्मत्तभूतमथ पाटलिपुत्रमीड्यम्।
मार्चस्य पञ्चमतिथौ हयवेदरन्ध्र-
ब्रह्मेतिवत्सर इयाय महामनीषी ॥३॥

हृदयको कँपानेवाले उस दावानलको शान्त करनेके लिये महात्माजी ता० ५-३-१९४७ ई० को उन्मत्त बने हुए पटनामें गये ॥ ३ ॥

सायं स मोटररथेन वितप्तचित्तो,
लोकञ्जितावनिमियाय महीमहेन्द्रः।

गांधिर्जयत्विति रवेण महादरेण,
सञ्चक्रिरे प्रमुदिताः समुपस्थितास्तम् ॥४॥

दुःखी मनवाले महात्माजी सायङ्काल मोटरसे वहाँ गये जहाँ सबलोग इकट्ठे हुए थे। "गाँधीजी का जय" इस महान् आदर पूर्ण आवाजसे उपस्थित लोगोंने उनका सत्कार किया ॥ ४ ॥

वक्तुं समारभत भारतपारिजातो,
लोकानुतापशमनं वचनं शनैः सः।
लोकांश्च मौनमभजन्निजनेतृवर्य-
वाणीसुधाधयनलोभपरीतचित्ताः ॥५॥

भारतपारिजात श्रीमहात्माजी लोगोंके दुःख अथवा क्रोधको शान्त करनेवाला वचन धीरे-धीरे बोलने लगे। लोग भी अपने महान् नेताके वचनामृतका पान करनेके लोभसे चुप हो गये ॥ ५ ॥

मन्ये मदीय इति यं हि विहारदेशं,
दूरस्थितोपि यदि तं न वशं करोमि।
आगत्य तत्र सशरीर उदस्तहर्षो,
लज्जे परं हि समजायत मानभङ्गः ॥६॥

जिस बिहारको मैं वस्तुतः अपना मानता हूँ उसे मैं दूर रहकर अपने वशमें नहीं कर सकता हूँ। मैं साक्षात् यहाँ आकर अत्यन्त लज्जित होता हूँ। मेरा हर्ष चला गया। क्योंकि मेरा मानभङ्ग हो गया ॥६॥

प्राप्तं पुनः पुनरहं महमूदपत्त्रं,
ध्यानेन वारिनयनः सकलं पठित्वा।
युष्माकमद्य पुरतः समुपस्थितोस्मि,
किञ्चिन्मनः शमयितुं मम वोपि सभ्याः ॥७॥

सभामें उपस्थित जनों, डाक्टरमहमूदका बार बार मेरे पास पत्र आता था। ध्यानसे मैं उसे पढ़ता था और रोता था। आज मैं अपने

और आपके भी मनको कुछ शान्त करनेकेलिये आपके सामने उपस्थित हूँ ॥ ७ ॥

यूयं स्थ येन जनिताः परमात्मनैषां,
कूरानिनां जनयितापि स एव भव्यः ।
यूयं मुहम्मदपदानुगताश्च नूनं,
तस्मात्सपितृतनुजाः सकला भवेत ॥८॥

जिस भव्य परमात्माने तुमको पैदा किया है, मुसलमानोंका भी पैदा करनेवाला वही है । अतः अवश्य ही तुम हिन्दू और मुसलमान एक ही सगे पिताके पुत्र होते हो ॥८॥

अत्रत्यहिन्दुजनता यदि नाकरिष्य-
त्क्रौर्यं कथंचिदुचितं न महाघदायी ।
न क्वाप्यनार्यजनतासविधेस्मदीयं,
हन्ताभविष्यदधिकं प्रणतं शिरो नः ॥९॥

यदि यहाँकी हिन्दू जनताने किसी प्रकार भी उचित न मानी जा सके ऐसी पापप्रद क्रूरता न की होती तो कहीं भी अहिन्दूजनता के सामने हमारा सिर अधिक नीचा न होता ॥ ९ ॥

नोवाखलीयजनवासगृहेषु यादृक्,
संमर्द आदरि मुहम्मदधर्मजातैः ।
अत्यक्रमीत्तमतिदूरमनार्यजुष्टं,
युष्माभिरेव परितश्चरितं यदत्र ॥१०॥

मुसलमानोंने नोवाखलीके घरोंमें जिस प्रकारका अत्याचार किया है, आपका यहाँ किया गया अत्याचार उससे बढ़ गया ॥ १० ॥

कृत्वातिपापमपि यः परमात्मभक्तः,
पश्चात्तपत्यनुदिनं स महानुभावः ।
आशाभवन्मम विहारजहिन्दवोपि,
पश्चात्तपेयुरखिला दुरितं विधाय ॥११॥

जो अतिपापकरके भी सदा पश्चात्ताप करता है वह महानुभाव ईश्वरका भक्त है। मुझे आशा थी कि बिहारके सब हिन्दू पाप करके पश्चात्ताप करेंगे ॥ ११ ॥

चिह्नं तु नैकमपि तस्य विलोक्यतेऽत्र,
नो दृश्यते दुरितजन्यमनःखिदापि।
दत्तं न किञ्चिदभवत्क्षतिपूर्तिरूपं,
तेभ्यः क्षतिं कृतवती जनतात्र येषाम् ॥१२॥

यहाँ तो पश्चात्ताप का एक भी चिह्न दिखायी नहीं पड़ रहा है। पापसे पैदा हुआ मानसिक खेद नहीं दीख रहा है। यहाँकी जनताने जिनकी हानिकी है उन्हें उसके बदलेमें कुछ भी नहीं दिया है ॥१२॥

यैर्हिन्दुभिः कृतमिदं वचनीयपापं,
दग्ध्वा गृहाणि वधमप्यथवा चरित्वा।
मोहम्मदीयतरुणीतरुणातिवृद्ध—
बालादिकस्य कथमत्र न ते विनिन्द्याः ॥ १३ ॥

जिन हिन्दुओंने घरोंको जलाकर निन्दनीय पाप किया है, एवं जिन्होंने मुसलमानोंके बालबच्चों और वृद्धोंका कतल किया है वह क्यों न निन्दाके पात्र माने जायँ ? ॥ १३ ॥

वाच्यं न ते प्रथितदुष्टजना इहत्या,
आसन्कुकृत्यकरणे निरता इतीह।
नो सन्ति दूषणभुजोखिलराष्ट्रसंस—
त्सभ्याः कथंचिदपि तत्र न वेति वाच्यम् ॥ १४ ॥

आप यह नहीं कह सकते कि दुष्कर्मके करनेमें प्रख्यात यहाँके गुण्डे लगे हुए थे; तथा आप यह भी नहीं कह सकते कि यहाँके कांग्रेसी लोग अपराधी नहीं हैं ॥ १४ ॥

गत्वाहमब्रवमशङ्कमनास्तदानीं,
लन्दन्पुरीं मिलितवर्तुलगोष्ठिकायाम् ।

राष्ट्रस्य संसदियमस्ति समस्तदेश—
स्त्रीपुंसबालतरुणस्य निपालयित्री ॥ १५ ॥

मैं उस समय जब लन्दन गया था तब गोलमेजी कान्फ्रेन्समें मैंने कहा था कि यह कांग्रेस समस्तभारतके स्त्री पुरुष, बाल और जवानकी रक्षा करनेवाली है ॥ १५ ॥

स्यात्तत्स्थलं वरमपीह च पोर्टुगीजा—
यत्तं भवेद्भरतभूमिजभूपभूस्थम् ।
फ्रेञ्चाधिकारगतमस्तु तथापि सर्वान्,
सा राष्ट्रसंसदभिरक्षति भारतीयान् ॥ १६ ॥

मैंने वहाँ कहा था कि भारतमें चाहे कोई स्थल पोर्टुगीजके अधीन हो, चाहे फ्रेंच प्रजाके अधीन हो परन्तु कांग्रेस सब भारतीयमात्रकी रक्षा करती है ॥ १६ ॥

प्रीणाति नेयमभिसंसदमून्कदापि,
विद्वेष्टि तानथ कदाचिदिमान्न चेति ।
सर्वत्र साम्यमभिवर्षयतीयमास्ते,
सर्वत्र सर्वजनतापरिपूजिताद्य ॥ १७ ॥

मैंने कहा था; कांग्रेस कभी उन लोगोंसे प्रेम नहीं करती है और इन लोगोंके साथ कभी द्वेष नहीं करती है। कांग्रेसकी दृष्टिमें पोर्टुगीज और फ्रेञ्च संस्थानमें जो रहते हैं, इस भारतीयराज्यके प्रदेशमें जो रहते हैं, अपने सगे सम्बन्धी जो हैं सब पर कांग्रेस समान दृष्टि रखती है और अतः वह सर्वत्र सर्वजनतासे पूजित है ॥ १७ ॥

नो कंचिदीक्षत इयं द्विषदित्यभीक्ष्णं,
ताटस्थ्यमप्यवहिता न दधात्यभद्रम् ।
कुत्रापि कैश्चिदपि हेतुभिरत्र तस्मात्,
सा राष्ट्रसंसदभितोस्ति समस्तभोग्या ॥ १८ ॥

मैंने कहा था; कांग्रेस किसीको शत्रु नहीं मानती और किसीको उदासीन दृष्टिसे भी नहीं देखती। वह किसी भी कारणसे ऐसा नहीं करती अत एव वह सबके कामकी चीज है ॥ १८ ॥

तस्मात्खलैः कृतमितीदमनुत्तरं स्या--
द्भारः सभानुगजनेषु वितिष्ठते हि।
आत्मानमत्र न हि वारयितुं समर्था,
अस्मादनुष्ठितमहाकलुषात्तु केपि ॥ १९ ॥

अतः यह कार्य दुष्टोंने किया है, यह जवाब नहीं दिया जा सकता। महासभावादियोंपर भार तो है ही। इस किये गये महान् पापसे अपनेको बचानेमें कोई महासभावादी समर्थ नहीं है ॥ १९ ॥

यो जन्मनः प्रभृति संसद आग्रहोस्ति,
त्याज्यो न सोद्य सदसोनुगमान्यलोकैः।
बिभ्रश्य गौरवपदादतिलाघवं स्या--
त्प्राप्तं सदैव सभया ननु वैपरीत्ये ॥ २० ॥

महासभाका अपने जन्मसे ही जो आग्रह रहा है उसका त्याग महासभाके अनुयायियोंको नहीं करना चाहिये। प्रतिष्ठित पदसे भ्रष्ट होकर अत्यन्त लघुताको सभा प्राप्त होगी यदि सभाके मूलभूत आग्रहका त्याग हुआ तो ॥ २० ॥

स्यात्कोपि हिन्दुरथवापि मुहम्मदीयः,
स्यात्पारसीक इह कोप्यपरो विधर्मा।
सर्वस्य लाभमभिलष्य भवेत्कृतार्था,
राष्ट्रस्य संसदिति वोस्तु महाप्रतीतिः ॥२१॥

कोई हिन्दू हो अथवा मुसलमान हो अथवा पारसी हो अथवा कोई अन्य धर्मवाला हो, सबके लाभको चाहकर ही महासभा कृतार्थ हो सकती है इतना महाविश्वास आपको होना ही चाहिये ॥ २१ ॥

प्राणार्पणैर्विपदुपेतमुहम्मदीय-
लोकाभिरक्षणविधौ बहवोत्र वः स्युः।
नैतत्परं भवति राष्ट्रसभानुगानां,
मानाभिरक्षणकृतावलमित्यहेतुः ॥ २२ ॥

विपत्तिमें फँसे हुए मुसलमानोंको बचानेमें जिन्होंने अपना प्राण भी अर्पण कर दिया होगा, ऐसे आपमेंसे बहुतसे होंगे। परन्तु महासभावादियोंकी प्रतिष्ठाकी रक्षाके लिये इतना ही पर्याप्त नहीं है। अतः इतना ही आपकी प्रतिष्ठारक्षामें हेतु भी नहीं है ॥ २२ ॥

अत्रत्यहिन्दुजनता कृतवत्यघं य-
त्तस्मात्परं परतरं ह्यपरेपि पूर्वम्।
सम्पाद्य निन्दिततमा अभवन्परन्तु,
सिद्धं भवेत्किमपि तेन न किञ्चिदत्र ॥२३॥

यहाँके हिन्दुओंने जो पाप किया है उससे बड़ेसे बड़ा पाप पहले दूसरोंने भी किया है और उसके कारण वह अत्यंत निन्दित भी हुए हैं। परन्तु इस कहने और विचारनेसे कुछ भी सिद्ध न होगा ॥ २३ ॥

न्यूनोस्मि नूनमहमत्र महाघभाजा,
तेनेति चिन्तयति यः स महत्पदं नो।
आप्तुं कदापि भविता त्वम इत्यजस्रं,
त्याज्या सभेति मतिरार्यवरेण्यलोकैः ॥२४॥

उसने बड़ा पाप किया है, उसकी अपेक्षा मैंने बहुत थोड़ा पाप किया है, इस प्रकारसे जो विचार करता है वह कभी महत् पदको नहीं पाता। अतः आर्य लोगोंको यह विचार छोड़ देना चाहिये ॥ २४ ॥

यैर्मन्यते कृतमिदं महदेव शौर्यं,
नोवाखलीखलगणाहितकर्म रोद्धुम्।
क्रोधादिदोषपरिपोषमहान्धकारै—
र्नूनं भवन्ति मनुजाः परिवञ्चितास्ते ॥ २५ ॥

जो यह मानते हैं कि नोवाखलीके गुण्डोंके गुण्डापनको रोकनेके-लिये यह बहुत शूरता हुई है तो वह अवश्य ही क्रोधादि दोषरूप अन्धकार-से ठगे गये हैं ॥ २५ ॥

मायावशादिति च येत्र विचारयन्ति,
श्रेयो विहाय त इतोवगतिं प्रयान्ति।
सत्कार्यतः सकल एव जिगीषितव्यो,
धर्मोस्त्ययं सकलधर्मधराधुरीणः ॥२६॥

अज्ञानवश होकर जो उपर्युक्त विचार करते हैं वह श्रेयको छोड़कर अधोगतिको प्राप्त करते हैं। सत्कर्मसे सबको जीतनेकी इच्छा करनी चाहिये, यह सर्वधर्मोंसे श्रेष्ठ धर्म है ॥ २६ ॥

पूर्वं कृतानि सुकृतानि महान्ति यानि,
तान्यप्यतीत्य गमनं परिकामयध्वम्।
स्वातन्त्र्यधर्मपरिरक्षणमेतयैव,
रीत्या भवेत्सकलपूर्वजसंस्कृतेश्च ॥ २७ ॥

आपने पहले जो कुछ अच्छे कर्म किए हों उनसे भी आगे बढ़नेकी आपको इच्छा करनी चाहिये। इसी रीतिसे स्वतन्त्रतारूप धर्मका रक्षण होगा और पूर्वजोंकी संस्कृतिकी ( भी रक्षा होगी ) ॥ २७ ॥

नोवाखलीयजनता कृतवत्यनर्थं,
यं हिन्दुषु प्रलयमेतु स्मृतेः स वोद्य।
तद्वन्यपाशवकृतीरनुकर्तुमत्र,
श्रेयोभुजो न मनसापि विचारयेरन् ॥ २८ ॥

नोवाखलीके लोगोंने हिन्दुओंपर जो अत्याचार किया है वह आपके स्मरणमेंसे आज चला जाना चाहिए। उस जङ्गली और पशुकर्मका अनुकरण करनेकेलिये धर्मात्मा पुरुष कभी मनसे विचार भी नहीं कर सकता ॥२८॥

हिंसास्ति पापमिति शास्त्रकृतो वदन्ते,
पापानि सन्ति न सुसाधुफलान्वितानि।

तस्मात्ततो विरहमेत्य परेशपाद—
माश्रित्य धर्मचरणे मन आदधध्वम् ॥ २९ ॥

भासमान तेजस्वी शास्त्रकार कहते हैं कि हिंसा पाप है और पाप कभी अच्छे फल नहीं देते। अतः पापसे अलग रहकर ईश्वरका आश्रय लेकर आपको धर्माचरणमें मन लगाना चाहिये ॥ २९ ॥

नो गौरवं चिरतरार्जितमेतु नाशं,
न ख्यातकीर्तिकलिका मलिनास्तु सद्यः।
देशस्य तद्धि सकलैः सुविचार्य कार्यं,
पन्था अयं सुकृतिनां च यशोधनानाम् ॥ ३० ॥

चिरकालसे पैदा किया गया हुआ देशका गौरव और प्रख्यात यशकी कलियाँ नष्ट न हो जायँ इसे अवश्य ही विचार कर सबको कार्य करना चाहिये। सुकृतियों और यशस्वियोंका यह मार्ग है ॥ ३० ॥

हत्वा द्विषद्गणमिहास्ति जिजीविषा चे—
च्छक्नोति जीवितुमपापमयं न कोपि।
मृत्वा प्रसन्नमनसारिहितानुबन्धी,
लोकं समर्जयति पुण्यतमं नितान्तम् ॥ ३१ ॥

यदि शत्रुओंको मारकर ही यहाँ जीनेकी इच्छा हो तो कोई भी निर्दोष जीवन नहीं व्यतीत कर सकता। जो प्रसन्न मनसे मरकर शत्रुओंके भी हितकी इच्छा रखता है वह महापुण्यलोकको प्राप्त करता है ॥३१॥

द्वारं विधाय विमलं गतरोषदोषा—
न्युष्मानथो निखिलभारतभूमिवासान्।
सन्देष्टुमेतदभिलष्यति मानसं मे,
हिंसामुदस्य मनसो हि जिजीविषेत ॥ ३२ ॥

'आपको और समस्त भारतवासियोंको यह सन्देश देनेको मेरा मन चाहता है कि सब क्रोधको छोड़ दें। पवित्र साधन बनाकर, मनसे हिंसाका त्याग करके जीनेकी इच्छा रखें ॥ ३२ ॥

उज्जासनैव यदि सर्वगदारिहारि,
प्राप्तं महौषधमिति प्रियबन्धवो मे।
संस्थापयन्ति हृदये नियतं विनष्टं,
स्वातन्त्र्यमत्र परिवित्त न संशयोत्र ॥ ३३ ॥

हिंसा ही सर्वरोगरूप शत्रुको नष्ट करनेकी महौषधि प्राप्त हुई है, ऐसा यदि हमारे भाई हृदयमें धारण करते हों तो अवश्य ही स्वतन्त्रता नष्ट हो चुकी है, ऐसा आप समझें। इसमें संदेह नहीं ॥ ३३ ॥

श्वो होलिकोत्सवशुभावसरोस्ति देशे,
हिन्दुप्रजाहृदयपङ्कजरञ्जनोयम्।
गालिप्रदानमथ रङ्गजलप्रवाहो,
वन्यां दशामहह सूचयतीह नोद्य ॥ ३४ ॥

कल्ह देशमें होलीका पवित्र उत्सव है। हिन्दूप्रजाका हृदयकमल कल्ह खिलेगा। इस उत्सवमें गाली देना और रंग डालना यह जंगली दशाका सूचक है ॥ ३४ ॥

प्रह्लादरक्षणकृते नरसिंहरूपः,
प्रादुर्बभूव भगवान्दिवसे च तस्मिन्।
तस्माच्च तस्य भजनं स्मरणं विहाय,
किञ्चिद्विधातुमपि नार्हति कोपि हिन्दुः ॥३५॥

उस दिन प्रह्लादभक्तकी रक्षाकेलिये भगवान् नरसिंहरूपसे प्रकट हुए थे। अतः उनका भजन और स्मरण छोड़कर कुछ भी करनेकेलिये हिन्दुओं को योग्य नहीं है ॥ ३५ ॥

संबाधते भयमुपस्थितमेव सम्यङ्,
मोहस्मदीयजनतामतिमात्रभीताम्
श्वो होलिकामिषमुपेत्य कदापि यूयं,
बाधां करिष्यथ निरर्गलितां च तस्याः ॥ ३६ ॥

अत्यन्त भयभीत मुसलमान् जनताको उपस्थित यह भय बहुत हैरान कर रहा है कि कलह होलीका बहाना लेकर किसी समय भी आप उन्हें बुरी तरह हैरान करेंगे ॥ ३६ ॥

ज्ञात्वेति चेतसि ममोद्गतदुःखदाव—
ज्वालावलीढविकले न हि शान्तिरस्ति ।
नोवाखलीयति ममापि विहार एष,
इत्येव तान्तहृदयं किल मां तनोति ॥ ३७ ॥

मेरा हृदय पहलेसे ही दुःखरूप अग्निसे व्याकुल है । यह मेरा बिहार भी नोवाखाली बन जायगा, यह विचार मेरे हृदयको व्याकुल बना रहा है ॥ ३७ ॥

तत्रापि हिन्दुजनता समखौदलोक—
भीत्यैवमेव गिरमाहरदार्तचेताः ।
अत्रापि खौदजनता भयविह्वलाङ्गा,
तामेव वाचमतिदीनमना वदन्ती ॥ ३८ ॥

नोवाखालीमें भी सब मुसलमानोंके डरसे हिन्दू जनता यही शब्द अत्यन्त आर्त होकर बोल रही थी । यहाँ मुसलमानजनता भयसे व्याकुल होकर उसी वाणीको बोलती हुई दीख रही है ॥ ३८ ॥

तत्राप्युपादिशमहं मम हिन्दुबन्धून्,
यत्तत्कुरानिजनतामपि बोधयामि ।
भीतिं जहीत मनुजस्य परेश्वरेस्मिन्,
यूयं च विश्वसित पूर्णतया सदेति ॥ ३९ ॥

मैंने नोवाखालीमें मेरे हिन्दु भाइयोंको जो उपदेश दिया था वही मेरे मुसलमान् भाइयोंको भी कहता हूँ । मनुष्यके भयको आप छोड़ दें । और इस परमेश्वरमें सदा पूर्णतया विश्वास करें ॥ ३९ ॥

श्रुत्वापि भारतजयध्वनिमस्ति कम्पो,
यद्यद्य खौदजनताहृदयेष्वसह्यः
काष्ठा पराद्य पतनस्य समीपगास्ते,
जात्योर्द्वयोरिति विचार्य मनो ममार्द्रम् ॥ ४० ॥

"भारतका जय हो" इस शब्दको भी सुनकर यदि मुसलमानोंके हृदयमें असह्य कम्प होता है तो आज दोनों जातियोंके पतनकी पराकाष्ठा पासमें ही है, यह विचार कर मेरा मन दुःखी हो रहा है ॥ ४० ॥

पृच्छन्ति मुस्लिमलिगीयजना उपेत्य,
त्रस्ता नितान्तमिह मां किमु हिन्दवो नः ।
वस्तुं विहारधरणीतल उत्तमाङ्गाः,
सोढार एव न बलोनहतानिहेति ॥ ४१ ॥

मुस्लिम लीगके लोग हमेशा आकर मुझसे पूछते हैं कि क्या हिन्दू लोग अल्पसंख्यक मुसलमानोंका बिहारमें रहना नहीं सहन करेंगे ? ॥४१॥

ये सन्ति मुस्लिमजनाः किल राष्ट्रसंस-
त्सभ्या भवन्ति विकलाः परिवीक्ष्य तेपि ।
एतादृशीमिह परिस्थितिमभ्यमित्र्यां,
हा हन्त कीदृश उपस्थित एष कालः ॥ ४२ ॥

जो मुसलमान् हैं वह ऐसी शत्रुताका बदला लेनेवाली परिस्थितिको देखकर कांग्रेसके सभ्य बन रहे हैं। दुःखकी बात है। यह कैसा समय उपस्थित हुआ है ॥ ४२ ॥

बन्धुः स्वबन्धुमपि चेदिह भापयेत,
क्रोधान्मलीमसमनाः प्रणयैकपात्रम् ।
उन्माद उज्झति तदा सदनुप्रणीत-
सीमानमित्यहह किं भगवान्विधाता ॥ ४३ ॥

क्रोधसे मलिन मनवाला होकर एक भाई अपने दूसरे प्रेमपात्र

भाईको ही यदि डरावे, तब तो उन्माद सज्जनों द्वारा बनायी हुई सीमाका त्याग कर रहा है ! न जाने भगवान् क्या करेंगे ? ॥ ४३ ॥

अद्य प्रभृत्यभिभवो भयभारभाजा-
मस्मन्न सेत्स्यति कदाचिदिति प्रतिज्ञा ।
निश्चित्य चेद्भवतु हिन्दुजनैर्गृहीता,
योग्यं भवेत्सुयशसे महतेद्य तेषाम् ॥ ४४ ॥

जो डरे हुए हैं उनका हमसे कभी भी अपमान नहीं होगा, ऐसी प्रतिज्ञा निश्चय करके यदि हिन्दू लोग ग्रहण करें तो वह उनके महान् और सुन्दर यशके अनुकूल होगा ॥ ४४ ॥

अत्रत्यहिन्दुललना यदि कामयेरन्,
हिंसामपास्य नितरामिह तामहिंसाम् ।
संस्थाप्य नैजबलतः प्रतिबद्धमूलां,
शक्ष्यन्ति कर्तुमचिरेण शमस्वरूपाः ॥ ४५ ॥

यहाँकी यदि हिन्दू बहिनें चाहें तो अपनी शक्तिसे हिंसाको दूर करके अहिंसाकी स्थापना करके शीघ्र ही उसे बद्धमूल कर सकेंगी क्योंकि वह शान्तिस्वरूप हैं ॥ ४५ ॥

अल्लाखुदेतिजपतां परधर्मिणां चे-
दाश्वासनं भवतु तप्तमनस्सु पूर्णम् ।
ते विश्वसन्तु यदि हिन्दुजनेषु चाद्य,
स्यादेष उत्सव इरम्मदशक्तियुक्तः ॥ ४६ ॥

अल्ला, खुदा जपनेवाले परधर्मियों के दुःखी मनमें यदि पूर्ण आश्वासन प्राप्त हो और वह हिन्दुओंपर विश्वास कर सकें तो यह एक अपूर्व उत्सव होगा ॥ ४६ ॥

महाशम्भोरेतद्धृदयतलतो निस्सरदमी,
वचःपीयूषं तत्सदसि समवेता मनुसुताः ।

मुहुः पायं पायं गलितगुरुकोपाः समभवन् ,
प्रसन्नं सन्नं तन्मुसलिमकुलं सक्षणमभूत् ॥४७॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
दशमः सर्गः

परमकल्याणकारी महात्माजीके हृदयसे निकलते हुए इस वचनामृतका, उस सभामें बैठे हुए सभी मनुष्योंने पान कर करके अपने क्रोधको शान्त कर दिया। मुसलमान् भी जो पहले दुःखी और चिन्तित थे अब प्रसन्न और आनन्दयुक्त हो गये ॥ ४७ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
दशमः सर्गः



# एकादशः सर्गः

भूयः स तस्मिन्नगरे महात्मा वारे द्वितीये समवेतलोकान् ।
प्रोवाच सायं हृदयेन हृद्यां वाचं गिरां नाथ इवाद्वितीयाम् ॥ १ ॥

उसी शहरमें—पटनेमें फिर दूसरे दिन इकट्ठे हुए लोगोंको महात्माजी बृहस्पतिके समान अद्वितीय वचन बोले ॥ १ ॥

एको मुसल्मानिह मामुपेत्य साश्रुप्रपातो न्यगदद्यदद्य ।
तस्यालयात्कान्यपि भाण्डकानि नीत्वा गतः कुत्रचिदेव कोपि ॥ २ ॥

आज एक मुसलमान् मेरे पास रोता हुआ आया और कहने लगा कि आज उसके घरमेंसे कुछ बासन = पात्र किसीने चुरा लिये हैं ॥ २ ॥

यावद्भवेदीदृशकृत्यजातं तावन्न शुद्धिर्मनसः कदाचित् ।
जायेत तस्मादखिला कलङ्काधायिप्रवृत्तिर्निखिलैः प्रहेया ॥ ३ ॥

जबतक ऐसे कार्य होते रहेंगे तबतक मानसिक पवित्रता कभी भी नहीं आ सकती । अतः यह सब कलङ्क देनेवाली प्रवृत्ति छोड़ देनी चाहिये ॥ ३ ॥

नानेन मार्गेण कदापि यौष्माकीणार्यतां व्यञ्जयितुं समर्थाः ।
यूयं भवेतेति विहाय शीघ्रं तं धर्ममार्गे मन आदधीध्वम् ॥ ४ ॥

इस मार्गसे चलकर आप अपने आर्यत्वको कभी भी व्यक्त करनेमें समर्थ नहीं होंगे । अतः इसे छोड़कर धर्म मार्गमें मन लगावें ॥ ४ ॥

यावन्न पश्चात्तपतीह चेतो युष्माकमेतैरपकृत्यजालैः ।
तावत्प्रतिष्ठा विषमस्थितैवेत्येतद्विजानीत च हिन्दुजातेः ॥ ५ ॥

जबतक आपका चित्त पश्चात्ताप नहीं करता तबतक हिन्दु जातिकी प्रतिष्टा संकटमें है यह आपको समझ लेना चाहिये ॥ ५ ॥

अन्याय्यमार्यैर्न कदापि कर्तुं शक्यं विरोधेन हि पूर्वजानाम् ।
स्वार्थस्य सिद्धौ रघुनन्दनीयपादाब्जयुग्मं सततं स्मरद्भिः ॥ ६ ॥

जो हिन्दू हैं और सतत भगवान्‌की भक्ति करते हैं उन्हें अपने पूर्वजोंके मार्गका विरोध करके न कभी अन्याय करना चाहिये और स्वार्थकी सिद्धि करनी चाहिये ॥ ६ ॥

आर्यत्वमेवेदमुदारभावैर्मित्त्रायितं चेद्द्विषतां कुलेषु ।
दुष्टेषु दुष्टत्वमुदाहरद्भिर्महर्षिमार्गादपहीयते हि ॥ ७ ॥

शत्रुओंके साथ भी मित्रताका व्यवहार करना, और उदारभाव रखना यही तो आर्यत्व है। दुष्टोंके साथ दुष्टता करनेवाला तो महर्षियोंके मार्गसे भ्रष्ट होता है ॥ ७ ॥

कस्यापि हिन्दोर्मम संनिधाने विद्युत्समाचार उपागतोद्य ।
नो भर्त्सनीया न च निन्दनीया नेया उपालम्भपदं न केचित् ॥ ८ ॥

एक किसी हिन्दुभाईका आज मेरे पास तार आया है और उसमें लिखा है कि किसी भी हिन्दुकी न भर्त्सना करनी चाहिये, न निन्दा करनी चाहिये और न किसीको उलाहना देना चाहिये ॥ ८ ॥

मन्ये न मामेवमुपादिशद्यः कस्यापि किञ्चित्स उपाकृताद्य ।
नो हिन्दुधर्मस्य न भारतस्य नो हिन्दुजातेर्न च वा परेषाम् ॥ ९ ॥

मैं समझता हूँ कि जिसने मुझे यह उपदेश दिया है उसने न तो हिन्दूधर्मका, न हिन्दूजातिका, न भारतका और न किसी अन्यका भी कुछ उपकार किया है ॥ ९ ॥

अद्धा मदीया मम हिन्दुधर्मे श्रद्धा च देशेविचलो मदीया ।
तस्माद्ब्रवीम्येतदुदारभावस्तेनापि शान्त्यैव विचारणीयम् ॥१०॥

हिन्दुधर्ममें और अपने देशमें मेरी बहुत बड़ी अविचल श्रद्धा है इसीलिये मैं उदार होकर यह कह रहा हूँ। उस भाईको भी शान्तिसे विचार करना चाहिये ॥ १० ॥

हिन्दुर्भवन्सुष्ठुतरः परस्मै धर्माय नेर्ष्यामि विदन्समस्तम् ।
कोपापरीतोपि कदापि नासूयामीह शुद्धा निखिला हि धर्माः ॥११॥

मैं एक अच्छा हिन्दु हूँ, सब धर्मोंको जानता हूँ परन्तु किसी धर्मसे ईर्ष्या नहीं करता । क्रोधवश होकर भी कभी किसी धर्मकी असूया नहीं करता । क्योंकि सभी धर्म पवित्र हैं ॥ ११ ॥

यद्धिन्दुभिर्घोरतमं कुकर्म सम्पादितं तत्सुतरां विगोप्य ।
हिन्दुत्वतः प्रच्युतिरेव मे स्याद्धर्मच्युतः स्यां तत इत्यसह्यम् ॥१२॥

हिन्दुओंने जो महापाप किया है यदि मैं उसे छिपाऊँ तो मैं हिन्दुत्वसे भ्रष्ट हो जाऊँ। ऐसा होनेसे मैं धर्मभ्रष्ट हो जाऊँगा । ऐसा होना मेरेलिये असह्य है ॥ १२ ॥

युष्माकमक्षम्यमहापराधान्विज्ञाप्य युष्मभ्यमहं तनोमि ।
सेवां परं वो महतीं महार्थामित्येव चित्ते मम संप्रतीतिः ॥१३॥

मेरे मनमें तो यह विश्वास है कि मैं आपके अक्षम्य महान् अपराधोंको आपको बताकर आपकी केवल एक बड़ी और उत्तम परिणामवाली सेवा करता हूँ ॥ १३ ॥

पञ्जापदेशे नयनाशवर्त्म दृष्ट्वा न वस्तत्प्रतिकर्तुमद्य ।
रीत्या तयैवोपदिशामि तस्मादौचित्यनुद्विग्नधियो ममैव ॥१४॥

पंजाबमें जो नीतिनाशका मार्ग ग्रहण किया गया है उसे देखकर मैं उसी रीतिसे उसका प्रतिकार करनेका उपदेश आपको नहीं देता हूँ। और वह मेरेलिये योग्य ही है ॥ १४ ॥

स्वातन्त्र्यभूमिं समवाप्य ये ये शस्ता गुणाःसन्ति जनिष्यमाणाः ।
युष्माभिरध्यक्ष उपासनीयास्ते मे मनीषेति ममास्ति हार्दम् ॥१५॥

स्वतन्त्रताको प्राप्त करके जो जो अच्छे गुण पैदा करने हैं उनकी आप अधिक उपासना करें यह मेरी इच्छा है। यही मेरे हृदयका तात्पर्य है ॥ १५ ॥

**कर्तव्यमास्ते किमिहाद्य युष्मल्लाभाय किं मुस्लिमभूतये स्यात् ।**
**वाच्यं मया तत्प्रणिधानदानाच्छ्रव्यं भवद्भिः कृपयेति भिक्षे ॥१६॥**

आपके लाभकेलिए क्या करना है और मुसलमानोंके लाभकेलिये क्या करना है, यह मुझे बताना है। आप कृपाकर ध्यान देकर सुनें, यही भिक्षा माँगता हूँ ॥ १६ ॥

**ये ये विपन्ना विगृहाश्च जाता अस्मिन्कलौ तेभ्य उदात्तचित्तः ।**
**साहाय्यमाधातुमवश्यमद्य किञ्चित्प्रदेयं करुणास्वतन्त्रैः ॥१७॥**

इस झगड़ेमें जो लोग विपद्ग्रस्त बने हैं, जो लोग बिना घरके हो गये हैं उन सबको उदात्तचित्त वाले तथा करुणाके अधीन रहनेवाले आप लोगोंको कुछ अवश्य सहायता देनी ही चाहिए ॥ १७ ॥

**शत्रुष्वपि प्राणपरायणेषु कार्या दयेत्येव मनुष्यधर्मः ।**
**सर्वे हि तस्यैव महेश्वरस्य पुत्रास्ततः सन्ति न ते स्वभिन्नाः ॥१८॥**

शत्रु भी कोई हो और वह अपना प्राण बचाना चाहे तो उसपर दया करना, यही मानवधर्म है। सभी तो उसी परमेश्वरके पुत्र हैं अतः सब ही स्व = अपनेसे भिन्न नहीं हैं। हम सब एक ही हैं ॥ १८ ॥

**तेदुर्न वातन्मुस्लिमधनाढ्या नोवाखलीस्था विपदन्वितेभ्यः ।**
**हिन्दुभ्य इत्यस्तु विचारणा चेद्धर्माच्च्युताः स्याम सनातनाद्धि ॥१९॥**

नोवाखलीमें विपद्ग्रस्त हिन्दुओंको वहाँके धनिक मुसलमानोंने सहायता की या नहीं, यदि हम यह विचार करेंगे तो सनातन धर्मसे हम च्युत हो जायँगे ॥ १९ ॥

**धर्माय धर्मोऽत्र निषेवणीयो नान्येन केनापि च कारणेन ।**
**एषा प्रणाली श्रुतिशास्त्रसिद्धा महार्यवर्यैरुपसेविता च ॥२०॥**

धर्मकेलिये ही धर्म करना चाहिये। बदला या ख्याति आदि अन्य कारणोंसे धर्म नहीं करना चाहिये। यही प्रणाली वेदों-शास्त्रोंमें बतायी गयी है और इसीको हमारे पूर्वज आर्योंने स्वीकार किया है ॥ २० ॥

धर्मः पृथक्त्वं भजते न राजनीतेस्ततो भ्राम्यतु नैव कोपि।
एष प्रचारो मम राजनीतिसंबद्ध इत्यस्तु न वा विवेकः ॥२१॥

धर्म राजनीतिसे कभी अलग वस्तु नहीं है। मेरा यह प्रचार राजनीतिसे सम्बन्ध रखता है ऐसा किसीको न तो भ्रम होना चाहिये और न विचार ही होना चाहिये ॥ २१ ॥

एवं च नेयं व्यवहारनीतिराध्यात्मिकाज्जीवनवर्त्मनो वः।
दूरात्पृथक्तेन विवेकवन्तः सम्यग्विचार्यैव समाचरन्तु ॥२२॥

इस रीतिसे यह व्यवहारनीति आपके आध्यात्मिक जीवनसे बहुत पृथक् नहीं है। अतः विवेकियोंको अच्छी तरहसे विचार करके आचरण करना चाहिये ॥ २२ ॥

नो विद्यते किंचन भिन्नमत्र लोकश्च तस्याधिपतिश्च तन्त्रम्।
एतत्त्रयं चापि न भिन्नभिन्नं बद्धं समस्तं हि परस्परेण ॥२३॥

इस जगत्में अलग अलग कोई वस्तु ही नहीं है। जगत्, जगत्का स्वामी और उसका तन्त्र यह तीनों ही भिन्न भिन्न नहीं हैं। सभी परस्पर बँधे हुए हैं ॥ २३ ॥

तस्मान्न वक्तव्यमहं स्वराजनीतिं विहारीयजनेष्वपीह।
संचारयामीति यतो न धर्मो नीतिं कदाचिद्विरुणद्धि शुद्धः ॥२४॥

इसलिये आप यह न कहें कि मैं अपनी राजनीति यहाँ बिहारी भाइयों और बहिनोंमें फैला रहा हूँ। क्योकि विशुद्ध धर्म राजनीतिसे कभी विरोध करता ही नहीं ॥ २४ ॥

दानं प्रदातव्यमिति श्रुतीनां श्रेयस्करं सत्यवचः प्रमाणम्।
नो तेन दत्तं तत एव तस्मै देयं न हीत्येतदनीतिवर्त्म ॥२५॥

श्रुतियोंने कहा है कि श्रद्धासे भी दान करना चाहिये और अश्रद्धासे भी करना चाहिये। शर्मसे भी और भयसे भी दान करना चाहिये। तात्पर्य दान करने में है। श्रुतिका यह कल्याणकारी वचन प्रमाणभूत

है। उसने नहीं दिया अतः मुझे भी नहीं देना चाहिये, ऐसा विचार करना अनीति है ॥ २५ ॥

**कलिः कलिं वृद्धिपथं नयेत स्तन्नोत्तमः क्वापि न वार्चनीयः ।**
**गालिर्न गालिं शमयेत्सहस्रैः स्वीयैः सहायैः सहितापि तन्वी ॥२६॥**

झगड़ा झगड़ाको बढ़ाता है। अतः वह न उत्तम है और न सत्कारार्ह है। अपने सहस्रों साथियों और सहायकोंके साथ भी गाली गालीको शान्त नहीं कर सकती ॥ २६ ॥

**नासावुपायः कलिरोधनार्थं हिंसा कलेर्वृद्धिकरी मतास्ति ।**
**दोषेण दोषो न भवेदुदस्यः पङ्केन पङ्कं व्यपनीयते नो ॥२७॥**

झगड़ा रोकनेकेलिये झगड़ा उपाय नहीं है। हिंसा झगड़ेको बढ़ाती है। बुराईसे बुराई हटायी नहीं जा सकती। कीचड़से कीचड़ नहीं साफ किया जाता है ॥ २७ ॥

**स्यादेव सर्वत्र विचारभेदो दृष्टः स नो मानवतापहारी ।**
**स्त्रीपुंसबालादिवधं विहाय शोध्यान्यपद्या मतभेदहान्यै ॥२८॥**

विचारभेद तो सर्वत्र होता है परन्तु वह मानवताका नाश करनेवाला अन्यत्र नहीं देखा गया है। अतः स्त्री, पुरुष, बाल, वृद्धका वध छोड़कर मतभेद दूर करनेके लिये अन्य मार्ग ढूँढ़ना चाहिये ॥ २८ ॥

**हिंसा प्रतीकारविचारणाया हानादहिंसाख्यमहास्त्रतो वा ।**
**नश्येन्न दृष्टोस्त्यपरोभ्युपायो नाशाय तस्या दुरिताश्रयायाः ॥२९॥**

हिंसाके नाशके दो ही उपाय हैं। एक तो यह कि प्रतीकार करनेका विचार ही नहीं होना चाहिये और दूसरा अहिंसारूप महान् अस्त्र। उसके नाशकेलिये अन्य उपाय नहीं है ॥ २९ ॥

**हिंसावतोग्रे नमनं विधाय स्वाधीनतात्यागमपेक्षते नो ।**
**कस्याप्यहिंसा परमस्त्वहिंसो देहप्रणाशावधिकः स्वतन्त्रः ॥३०॥**

हिंसकके सामने झुककर स्वतन्त्रताका त्याग अहिंसामें नहीं है। अहिंसक तो जबतक उसका शरीर नष्ट न हो तब तक स्वतन्त्र ही रहता है ॥ ३० ॥

**अन्याययुक्तेन पथा च कोपि हिंसाबलेनैव कमप्यहिंसम्।**
**स्वाधीनमाधातुमपेक्षते चेत्तस्याभिलाषोत्खननं विधेयम् ॥३१॥**

यदि कोई अन्याययुक्त मार्गसे हिंसा बलके द्वारा ही किसी अहिंसकको स्वाधीन बनाना चाहता हो तो उसकी इच्छाको खोदकर फेंक देना चाहिये। अर्थात् अन्यायी किसीपर कितना भी अन्याय स्वाधीन बनानेके लिये करे तो भी उसके अधीन नहीं बनना चाहिये ॥ ३१ ॥

**आगत्य कश्चिद्यदि याचते मां संतर्ज्य वा शस्त्रबलं प्रदर्श्य।**
**स्वीयाभिलाषोपनतं हि पाकिस्तानं न वा तं प्रति शस्त्रयोगः ॥३२॥**

एक आदमी मेरे पास आकर डाटकर, धमकाकर, शस्त्रबल दिखाकर अपनी इच्छाके अनुसार पाकिस्तान मेरे पाससे मांगे तो उसके प्रति शस्त्रप्रयोग नहीं होना चाहिये ॥ ३२ ॥

**आकर्ण्य सर्वं गतरोषरेषो धैर्येण बुद्ध्या च विवेचयानि।**
**युक्तं यदि स्यात्प्रतिदेयमेवायुक्तं यदि त्याज्यतरं मया स्यात् ॥३३॥**

सब कुछ सुनकर रोषकी एक एक रेखा मिटाकर धैर्यसे बुद्धिद्वारा मुझे विचार करना चाहिये। यदि पाकिस्तान देना उचित होगा तो मैं दूँगा ही। और यदि अयुक्त होगा तो त्याग कर दूँगा ॥ ३३ ॥

**तेनास्य चेतो यदि संजिहीर्षेन्मां तत्र दाढर्येन मृतिं कुसित्वा।**
**ज्ञानेन सत्याग्रहियोग्यरीत्या तस्याभिलाषं विफलं विदध्याम् ॥३४॥**

इस कारणसे यदि उसका मन मुझे मार डालना चाहे तो उस समय दृढ़तापूर्वक मृत्युका आलिंगन करके ज्ञानद्वारा सत्याग्रहीकी योग्य रीतिसे उसकी इच्छाको निष्फल बना देना चाहिये ॥ ३४ ॥

संहर्तुलोके प्रतिसंप्रहारश्चिह्नं न शौर्यस्य न वा बलस्य ।
स्पृष्ट्वा न शस्त्रादि किमप्यकम्पस्तिष्ठेदशत्रुत्वमुपास्य चित्ते ॥३५॥

अपनेको कोई मार डालनेके लिये आवे तो उसपर प्रहार करना न तो शूरताका चिह्न है और न बलका ही । उस समय शस्त्रादि किसी वस्तुका स्पर्श किये विना ही चित्तमेंसे शत्रुभावको निकालकर स्थिर रहना चाहिये ॥ ३५ ॥

शस्त्राद्युपघ्नत्वमुदस्य चित्ते संस्मृत्य रामं निजमानसः सन् ।
क्रोधादि वैषम्यमपास्य दूरे प्रेमायुधेनैव जयेदमित्रम् ॥३६॥

शस्त्रादिका आश्रय छोड़कर, क्रोधादिका त्याग करके, चित्तमें रामका स्मरण करके समान मनवाला बनकर प्रेमरूप हथियारसे शत्रुको जीतना चाहिये ॥ ३६ ॥

हिंसाबलेनैव शमप्रवृत्तिर्वाञ्छ्या वितिष्ठेत न सा चिराय ।
कालेन हिंसा प्रकटीभवन्ती सर्वं जगन्नाशभुवं नयेत ॥३७॥

यदि हिंसाके बलसे शान्ति इष्ट हो तो वह दीर्घकाल तक स्थिर नहीं रह सकेगी । समय पर हिंसा प्रकट होकर सम्पूर्णजगत्को नाशकी ओर ले जायगी ॥ ३७ ॥

क्षान्तिर्विभूषा बलिनामपूर्वा नो निर्बलानां शरणं कदाचित् ।
क्षान्तिः सदैव द्रढयत्यहिंसां तस्मात्तयोरस्ति सहत्रजित्वम् ॥३८॥

क्षमा बलवानोंका अपूर्वश्रृङ्गार है । निर्बलोंका वह शरण नहीं है । क्षमा सदा अहिंसाको दृढ़ बनाती है । अतः क्षमा और अहिंसा साथ-साथ चलनेवाली चीजें हैं ॥ ३८ ॥

राज्ञो विराटस्य पुरे वसत्सु पाण्डोः सुतेष्वेकदिने कदाचित् ।
मूर्धन्यभूद्दीर्घतरं व्रणं तज्ज्येष्ठस्य सन्तापकमुद्बभूव ॥३९॥

जब पाँचो पाण्डव विराट राजाके नगरमें निवास कर रहे थे उसी

समय कभी एक दिन युधिष्ठिरके सिरमें एक बहुत बड़ा फोड़ा हो गया। उससे सबको बहुत दुःख हुआ ॥ ३९ ॥

**एकोपि बिन्दुः क्षतजस्य भूमौ ज्येष्ठस्य शीर्ष्णः पतितो यदि स्यात् ।**
**अस्माकमापातरि दुःखराशिर्नूनं पतेत्तच्च भवेदभद्रम् ॥४०॥**

दुःखका कारण कहते हैं। यदि युधिष्ठिरके सिरसे एक भी रक्त-का बिन्दु पृथिवीपर पड़ेगा तो हमारे रक्षक विराटपर अवश्य ही आपत्तिका पहाड़ टूट पड़ेगा, जो बहुत खराब होगा ॥ ४० ॥

**तद्गोपनार्थं व्रणतः सरन्ति सौवर्णपात्रे रुधिराण्यचिन्वन् ।**
**अस्मास्वपीत्थं स्खलगोपनाय भावानतिः स्याद्धि परस्परस्य ॥४१॥**

तब अन्य पाण्डवोंने उसे छिपानेकेलिये उस फोड़ेमेंसे बहते हुए रक्तका सोनाके पात्रमें संग्रह कर लिया। हम लोगोंमें भी परस्पर अपराध छिपानेकेलिए ऐसा ही भाव होना चाहिये ॥ ४१ ॥

**यद्यप्यहिंसा निखिलेषु धर्मेष्वापत्पदं सार्वदिकं प्रशस्तम् ।**
**मन्ये परं त्वाचरणाय शास्त्रं लेभे जनिं भारत एव भव्याम् ॥४२॥**

यद्यपि अहिंसाको सभी धर्मोंमें सदाकेलिये उत्तम पद प्राप्त है तथापि मैं मानता हूँ कि उसके आचरणके शास्त्रने तो भारतमें ही भव्य जन्म धारण किया है ॥ ४२ ॥

**ब्रह्मर्षयोनेकपुराणमान्याः संघा मुनीनामपि भारतेस्मिन् ।**
**तप्त्वा तपांस्युग्रतराण्यहिंसां मूर्धाभिषिक्तां रचयाम्बभूवुः ॥४३॥**

पुराणोंमें प्रसिद्ध अनेक ब्रह्मर्षियों और अनेक मुनियोंने भी इसी भारतमें अतिकठोर तपश्चर्या करके अहिंसाको सर्वश्रेष्ठ बनाया है ॥ ४३ ॥

**अत्युत्तमं त्यागतपः प्रसूते ज्योतिष्मतीयं सुरजा अहिंसा ।**
**अद्रीश्वरः शुभ्रतमो विभाति त्यागेन दोषानखिलान्विधूय ॥४४॥**

सुन्दर बलवाली और सुन्दर प्रकाशवाली यह अहिंसा सर्वोत्तम

त्यागरूप तपको जन्म देती है। हिमालय भी त्यागके द्वारा सब दोषोंको दूर करके निर्मल होकर शोभा देता है॥ ४४॥

**अद्यास्त्यहिंसान्तरदोषगाढध्वान्ते विलीनेव चिरेण तेन।**
**दीनाननापेक्षत एव सद्यः सोद्धारकारिं जगतो हिताय॥४५॥**

आज वह अहिंसा आन्तरिक दोषरूप गाढ़ अन्धकारमें बहुत कालसे छिप गयी है। वह दीनमुखसे जगत्के कल्याणकेलिये शीघ्र ही अपने उद्धारकी अपेक्षा रखती है॥ ४५॥

**श्वेता यियासन्ति विहाय नैजीं शिष्टिं समग्रामथ भारतोऽर्याः।**
**काले किमस्मिन्करणीयमास्ते सर्वैस्तदेवाद्य विचारणीयम्॥४६॥**

अंग्रेज लोग अपना शासन छोड़कर अब भारतसे जानेवाले हैं। ऐसे समयमें हमारा क्या कर्तव्य है, इसीका सबको विचार करना चाहिये॥४६॥

**यस्यां धरायां कमनीयकीर्तिर्जज्ञे स बुद्धो भगवान्सुरार्च्यः।**
**तस्यामहिंसा गतिमीदृशीं चेत्प्राप्ता भवेदद्भुतमेव तत्स्यात्॥४७॥**

जिस पृथ्वीपर प्रशस्तकीर्तिवाले, देवोंके भी पूज्य भगवान् बुद्ध उत्पन्न हुए उसमें अहिंसाकी यदि ऐसी दशा हो तो आश्चर्य ही है॥४७॥

**कश्चिन्मयाराधितदेवमूर्तिं भङ्क्तुं प्रयस्येद्बलतो यदीह।**
**आलिङ्ग्य तां गाढतरं निपार्यां तस्मादसूनां व्ययतो ममैव॥४८॥**

मैं जिस देवकी मूर्तिकी पूजा करता होऊँ उसे कोई बलसे यदि तोड़ना चाहे तो मैं उस मूर्तिको गाढ़ आलिङ्गन देकर, अपने प्राण गँवाकर भी उस आदमीसे उस मूर्तिकी रक्षा करूँगा॥ ४८॥

**त्याज्या भवेत्सा न कदापि मूर्तिर्यावद्व्यसुः स्यां विवशोर्तियोगात्।**
**तस्याङ्गतो नैकतमोपि बिन्दुः श्च्योतेत तच्चापि मयेक्षणीयम्॥४९॥**

जबतक मैं दुःख–पीड़ाके सम्बन्धसे विवश होकर मर न जाऊँ तबतक मैं उस मूर्तिको नहीं छोड़ूँ। मुझे यह भी देखना होगा कि उस घातकके शरीरसे एक भी रक्तका बिन्दु न टपके॥ ४९॥

आश्रित्य हिंसामपि शान्तिरत्र स्थाप्या भवेत्तत्र न संशयोस्ति ।
न स्यात्परं शान्तिरसौ चिराय द्वेषानलः प्रज्वलयेन्मनोहृत् ॥५०॥

इसमें सन्देह नहीं कि हिंसाका आश्रय लेकर भी शान्तिकी स्थापना हो सकती है। परन्तु वह शान्ति चिरकालतक नहीं रह सकती। द्वेषकी आग हृदय और मनको जलाती रहेगी ॥ ५० ॥

कालेन दावानलतामुपेत्य स ज्वालयेदेव समस्तदेशम् ।
हा हा तदा स्त्रीशिशुवृद्धबालाः सर्वे व्रजेयुर्हि हविष्ट्वमारात् ॥५१॥

समय पाकर वह द्वेषानल दावानलका रूप धारण करके समस्त देशको जला देगा। हाँ, उस समय स्त्री, छोटे-छोटे बच्चे, बड़े बच्चे और वृद्ध सभी ही शीघ्र ही उस अग्निके हविष् = बलि बन जायँगे ॥ ५१ ॥

श्रीविक्रमाब्दे मुनिभूतनागसर्वेश्वरे शस्त्रबलेनशान्तिः ।
संस्थापिताः श्वेतजनैः परं तु तन्मानसान्तर्ज्वलनः प्रदीप्तः ॥५२॥

विक्रमीय संवत् १८५७ में अंग्रेजोंने शस्त्रके बलसे शान्ति स्थापित तो की थी परन्तु उनके मनकी आग तो जल ही रही थी ॥ ५२ ॥

नेत्रैः समेषामपि वीक्षितैव सर्वत्र बाह्या प्रसृताति शान्तिः ।
राज्यं विदेशीयमसह्यमेव लोकेषु सर्वेषु तु शश्वदासीत् ॥५३॥

सबकी आँखोंने यह तो देखा ही कि बाहरकी शान्ति सर्वत्र फैली हुई थी। परन्तु लोगोंके मनमें विदेशीय राज्य सर्वदा असह्य ही बना रहा ॥ ५३ ॥

तस्यैव दुष्टं परिणाममद्य श्वेता वयं चाप्यतमिस्रनेत्रैः ।
ईक्षामहे दुर्गमपारमत्र वैवश्यमासाद्य शमापसादम् ॥५४॥

उसीका दुष्ट परिणाम आज हम भी और अंग्रेज भी खुली आँखोंसे देख रहे हैं। लाचार होकर शान्तिभङ्ग भी देख रहे हैं ॥ ५४ ॥

ईस्ट् इण्डिया कम्पनितो विकृष्य राज्यस्य भारः सितशासनेन ।
आदायि बुद्ध्या दृढया प्रजानां कर्तुं वशे प्रायति बुद्धियन्त्रम् ॥५५॥

अंग्रेजी राज्यने ईस्ट इण्डिया कम्पनीसे राज्यका भार खींचकर ले लिया तथा दृढ़ बुद्धिसे प्रजाकी बुद्धिको—विचारको वशमें करनेका यत्न किया ॥५५॥

विद्यालयान्न्यायगृहाणि सम्यक् संस्कारसांकर्यमतिष्ठिपन्त ।
श्वेताः परं नापमितिं कदाचिद्व्यस्मार्षुरार्यावनिजा मनुष्याः ॥५६॥

अंग्रेजोंने यहाँ न्यायालयों और विद्यालयोंकी, संस्कारोंका मिश्रण करनेकी दृष्टिसे स्थापना तो की। परन्तु इस देशके लोग उस अपमानको कभी भूले नहीं ॥ ५६ ॥

एवं हि हिन्दूमुसलिम्प्रजानां जातो विरोधो न शमं गतश्चेत् ।
शस्त्रप्रयोगेण शमं गतोपि भस्मावृतो वह्निरिवाशु जीवेत् ॥५७॥

इसी प्रकारसे-प्रेम पूर्वक यदि हिन्दुओं और मुसलमानोंका विरोध शान्त न होगा तो शस्त्रप्रयोगसे शान्त होकर भी जैसे राखसे ढँकी हुई आग फिर जी जाती है वैसा ही यह विरोध फिर जी उठेगा ॥५७॥

तस्मात्पुनर्हिन्दुमुहम्मदीयस्नेहानुवृद्धिं सुदृढां समीहे ।
आसीद्यथा पूर्वमकम्पमैत्री जीवेत्तथैवाद्य मृतिं गतापि ॥५८॥

अतः हिन्दू-मुसलमानोंका प्रेम पुनः सुदृढ़ बने, ऐसी मेरी इच्छा है। जैसी पहले स्थिर और दृढ़ मैत्री थी वैसी ही फिर भी—मरी हुई है तो भी हो ॥ ५८ ॥

तत्प्रेम सौहार्दमपीह तत्तद्भ्रातृत्वमद्यापि यदीह जीवेत् ।
निःश्रेयसं हिन्दुजनोपि मुस्लिम्लोकोपि सम्यङ् ननु निर्विशेताम् ॥५९॥

वही प्रेम, वही सौहार्द, वही भ्रातृभाव यदि आज भी जीवित बने तो हिन्दू और मुसलमान दोनों ही परम शान्तिका अनुभव करें ॥५९॥

मुन्येकरन्ध्रैकमितेब्दके यत्प्रान्तोयमालोकयदात्मशक्तिम् ।
शौर्यं नहिंसाजनितं तदेव भाग्यात्पुनश्चाद्य नवीकरोमि ॥६०॥

१९१७ ई० में इस प्रान्तने अहिंसाजन्य जो शूरता दिखायी थी भाग्यसे मैं पुनः आज उसीको नया करता हूँ ॥ ६० ॥

**नीलीप्रभुश्वेतजनेषु चम्पारण्ये विहारीयजनास्तदानीम् ।**
**हिंसाप्रयोगं न समाचरन्सा हिंसेतरा शुद्धतराभवन्नो ॥६१॥**

बिहारी बन्धुओंने उस समय चम्पारनमें नीलके स्वामी अंग्रेजोंपर हिंसाका प्रयोग नहीं किया था अहिंसाका पालन किया था, वह अहिंसा अतिशुद्ध नहीं थी ॥ ६१ ॥

**नैर्बल्यहेतोर्यदि हिंसनाढ्या वृत्तिः परास्या न समर्थिका सा ।**
**कस्यापि कार्यस्य ततो बलिष्ठाहिंसैव सेव्या जगतः शिवाय ॥६२॥**

निर्बलताके कारण त्याज्य हिंसावृत्ति यदि किसी कार्यकी समर्थिका-साधिका नहीं है तो उसे छोड़कर सबसे अधिक बलवती अहिंसाकी ही सेवा जगत्‌के कल्याणके लिये की जानी चाहिये ॥ ६२ ॥

**अत्रत्यहिन्दूजनता न हेयाद्धिंसां यदि स्वीयमतिप्रभावात् ।**
**विस्पष्टमेतत्प्रतिवक्तुमर्हेन्नाहं तया क्वापि हि वञ्चनीयः ॥६३॥**

यदि यहाँकी हिन्दूजनता अपने विचारके प्रभावसे हिंसाको नहीं छोड़ सकती तो उसे चाहिये कि वह स्पष्ट उत्तर मुझे सुना दे। मैं चाहता हूँ कि वह मेरी वञ्चना न करे ॥ ६३ ॥

**सत्येन न स्यान्मनसो व्यथा मे सत्यं व्यथायाः परमौषधं मे ।**
**सत्येन संगत्य जिजीविषामि सत्येन हीनो मृतिमाश्रयामि ॥६४॥**

सत्यसे मेरे हृदयको पीड़ा न होगी। सत्य मेरी पीड़ाकी परम औषधि है। सत्यके साथ मिलकर ही मैं जीना चाहता हूँ। सत्यसे अलग रहकर मैं मृत्युका आश्रय चाहता हूँ ॥ ६४ ॥

**हिंस्या भवेच्चेदिह हिंसयैवाहिंसा तदानीं मम जीवनेन ।**
**लाभो न कश्चित्प्रतिभाति मेद्य भारो धराया इह केवलोस्मि ॥६५॥**

यदि हिंसा अहिंसाको यहाँ मार डालना चाहती हो तो मुझे मेरे

जीनेसे कोई लाभ मालूम नहीं होता है। तब तो मैं केवल भूमिका भार ही हूँ ॥ ६५ ॥

**यन्निश्चितं मे मनसा तपोभिः संशेरते धीप्रसरा न यत्र।**
**तद्रक्षणार्थं यदि देहपातः स्यान्मे मनो ग्लास्यति कर्हिचिन्नो ॥६६॥**

जिसका निश्चय मैंने तपोंके द्वारा मनसे कर लिया और जहाँ बुद्धिको संशय नहीं होता उसकी रक्षाकेलिये यदि मेरा देह चला जाय तो कभी मेरे मनको ग्लानि नहीं होगी ॥ ६६ ॥

**अस्थीनि देहस्य ममेह युष्मद्भूमौ पतेयुर्यदि वान्यतोपि।**
**चिन्तां न मे चुम्बति चित्तवृत्तिः सर्वत्र मे भारतमृत्तिकैव ॥६७॥**

मेरी यह हड्डियाँ चाहे आपके बिहार प्रान्तमें पड़ें अथवा कहीं अन्यत्र; इसकी मुझे कोई चिन्ता नहीं है। सर्वत्र ही मेरे भारतकी ही मिट्टी है ॥ ६७ ॥

**असुलभपदपद्मकान्तश्रिया विविधवचनसंचयैर्हिन्दवः।**
**यतिकुलधरणीसुधासिन्धुना प्रशममुपनता रुषा दूषिताः ॥६८॥**

**इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते**
**पारिजातसौरभे**
**एकादशः सर्गः**

जिनके चरणकमलकी मनोहर श्री सुलभ नहीं है उन यतियोंमें सुधासिन्धु समान महात्माजीने विविध वचनोंसे क्रोधसे दूषित हिन्दुओंको शान्त कर दिया ॥ ६८ ॥

**इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते**
**पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायाम्**
**एकादशः सर्गः**



# द्वादशः सर्गः

समीक्ष्य देशे निखिले महानलं प्रदीपितं मोहमदीयपादगैः ।
भृशं तदाभूदतिदुःखविह्वलो जराकरापीडितपीडितो यतिः ॥ १ ॥

समस्त भारतमें मुसलमानोंका अनुकरण करनेवालोंने महानल सुलगा रखा था उसे देखकर महात्माजी वृद्धावस्थासे पीड़ित तो थे ही, इस दुःखसे अत्यन्त व्याकुल हो गये ॥ १ ॥

महाप्रयासेन महातपस्यया कथंकथंचित्प्रशमय्य पावकम् ।
नवाखलीप्रान्तगतं दवोपमं विहारमाश्वासयितुं प्रयत्नवान् ॥ २ ॥

बड़े भारी प्रयास और बड़ी भारी तपस्यासे किसी प्रकार दावानलके समान नोवाखलीके अग्निको शान्त करके महात्माजी बिहारको शान्त करनेमें प्रयत्नशील बने ॥ २ ॥

पुनः पुनः पाटलिपुत्रके यतिर्महीमहीन्द्रोपम ईश्वरोपमः ।
सभासमेतान्निखिलाञ्जनान्प्रभुर्गिरां समृद्ध्या कृपया ह्युपादिशत् ॥ ३ ॥

महान् पर्वतके समान धैर्यवाले और ईश्वरके समान सामर्थ्यवाले महात्माजीने पुनः पुनः पटनाकी सभामें इकट्ठे हुए लोगोंको समृद्ध वाणीसे उपदेश दिया ॥ ३ ॥

अयं च हिन्दूप्रभृतो दयाकरः प्रतीतशौर्यो विबुधोदयाकरः ।
प्रदेश उत्कर्षजुषां पुरस्सरः सदा प्रणम्यो विबुधैरुनुद्धतैः ॥ ४ ॥

यहाँसे उपदेशका आरम्भ होता है । हिन्दुओंसे भरा हुआ यह बहुत दयालु प्रदेश है । इसकी शूरता प्रख्यात है । यह विद्वानोंका आकर है । प्रगतिशील प्रान्तोंमें श्रेष्ठ है तथा शान्त विद्वान् इसके समक्ष सिर झुकाते हैं ॥ ४ ॥

इहैव बुद्धः समजायत क्षमामहीमहीपालशिरोमणिः पुरा।
तथा महावीर इह स्वजन्मनाकृतार्थयत्सर्वजनुष्मतो महान् ॥ ५ ॥

यहाँ ही महती क्षमावाले बुद्ध भगवान् पहले प्रकट हुए। यहाँ ही महावीरस्वामीने भी अपने जन्मसे सब जीवोंको कृतार्थ किया ॥ ५ ॥

अयं प्रदेशो जनकैश्च शिक्षितः पुरा परब्रह्मविदां प्रपूजितैः।
इहैव सीता जगदेकपावनीं मृदोर्भुवः प्राप तनुं मनोहराम् ॥ ६ ॥

इस प्रदेशको जनकविदेहने शिक्षित बनाया है जिसे बड़े बड़े ब्रह्मज्ञानी भी पूजते थे। इसी प्रदेशमें कोमल माटीमेंसे जगत्को पवित्र करनेवाला मनोहर शरीर श्री सीताको मिला था ॥ ६ ॥

ततः समस्तैर्भुवि राजितैर्जनैः सरस्वतीपादकृपाकटाक्षितैः।
महोन्नतैरिद्धयशोभिलाषुकैः सदा प्रणम्या इह जन्मिनो जनाः ॥ ७ ॥

सीता यहाँ उत्पन्न हुई थीं इसीलिये पृथिवीपर रहनेवाले समस्त विद्वान्, महान् तथा यशस्वी पुरुष भी, यहाँ पैदा हुए लोगोंके सामने सिर झुकाते हैं ॥ ७ ॥

मयापि युष्मान्सततं समादरान्निरीक्षमाणेन नतेन वोग्रतः।
प्रणामपूर्वं विकलान्तरात्मना प्रवक्तुकामेन समागमीह भोः ॥ ८ ॥

मैं भी आपको सदा आदरकी दृष्टिसे देखता हूँ। आपके सामने नत होकर प्रणाम करके व्याकुलमनसे कुछ कहनेकेलिये मैं यहाँ आया हूँ ॥८॥

विहाय नोवाखलिसंज्वलन्महाकुपीटयोनिं च कुपीटशोषणम्।
उपागमं व्यग्रमना महेश्वरप्रणोदितः किञ्चिदुपार्जितुं महत् ॥ ९ ॥

नोवाखलीमें जो आग सुलग रही है वह अपने कारणको भी = जिसमेंसे वह पैदा हुई है उसे भी जलानेवाली है। उसे छोड़कर मैं दुःखी हो कर ईश्वरीय प्रेरणासे यहाँ कुछ महद्वस्तु प्राप्त करनेके लिये आया हूँ ॥ ९ ॥

विलोक्यते भारतभूतले ज्वलन्महाबलः सर्वगिलो विभावसुः।
समासु दिक्ष्वत्यतितापतापितो विहारमागां शरणाय दुःखितः ॥१०॥



जहानाबाद (बिहार) कीसभामें बाल-विनोद।

 [फोटोग्राफर श्री जगन बी. महेता

भारतमें चारो दिशाओं में सबको निगल जानेवाली भयङ्कर आग दिखायी पड़ रही है। अतः अतितापसे तपाया गया हुआ मैं शरणकेलिये बिहारमें आया हूँ ॥ १० ॥

विहारदेशे पठिता निरक्षरा स्तनन्धया वा शिशवो वयोतिगाः ।
उपासकाः सन्ति कृपामहोदधे रघूत्तमस्यावनिजाप्रियस्य च ॥११॥

बिहारमें पढ़े हुए और अनपढ़, दूधमुँहें बालक, कुछ बड़े बालक और वृद्ध भी सभी, जानकी नाथ, कृपासागर श्री रामके उपासक हैं ॥ ११ ॥

न रामभक्तः क्वचिदप्यनीतिमान्भवेन्न रागादिकदोषसंगतः ।
भवस्य सर्वान्परमात्मरूपिणो नरान्सदेक्षेत जगच्च कृत्स्नशः ॥१२॥

श्रीरामभक्त कभी अनीतिवाला नहीं हो सकता। उसमें राग-द्वेष आदि दोष भी नहीं रह सकते। वह संसारके सभी मनुष्यों और समस्त जगत्को परमात्माका ही रूप मानता है ॥ १२ ॥

अमङ्गलानामसतां च दृश्यते क्वचित्क्वचिद्राज्यमितस्ततः परम् ।
अमङ्गलं किन्तु न रोचतेप्यसत्कदापि कस्मा अपि सर्वदाशिवम् ॥१३॥

इधर-उधर आज असत्य और अमङ्गलका राज्य दीख पड़ रहा है। परन्तु असत्-अमङ्गल सर्वदा अशिवरूप-दुःखरूप होनेसे कभी किसीको रुचता नहीं है ॥ १३ ॥

भवे भवेदेकजनोपि सत्यभाग्भवेद्भवे तावदजस्ररक्षणम् ।
विहार एष प्रतिपाल्य सद्बलं निजस्य देशस्य च शं करिष्यति ॥१४॥

जगत्में यदि एक मनुष्य भी सत्यवादी रहे तो जगत्में नित्यरक्षणकी संपूर्ण संभावना हो सकती है। यह बिहार सत्यरूप बलका पालन करके अपनी और समस्त देशकी रक्षा कर सकता है ॥ १४ ॥

इहाखिला यूयमपास्य मत्सरं विधाय चित्ते परमेश्वरस्मृतिम् ।
भवेत चेच्छान्ततमा नवाखलीजना भजेरन्नियतं मनुष्यताम् ॥१५॥

यदि यहाँ पर तुम सब लोग मत्सरको छोड़कर हृदयमें ईश्वरका स्मरण करके शान्त रहोगे तो नोवाखलीके लोग मनुष्य बन जायँगे ॥१५॥

**समस्तदेशेद्य निहिंसनं नृणां संमर्दनं सव्यथनं निबर्हणम् ।**
**प्रचारमापन्नपया ततो वयं नृशंसतानिन्दनतत्परायणाः ॥१६॥**

सारे देशमें मनुष्योंका वध पीड़ा, मारना, काटना प्रचरित हो गया है । इससे मैं लज्जावश इस घातुकताका निन्दन कर रहा हूँ ॥ १६ ॥

**निकार एषोस्ति हि भारतक्षितेर्निपिञ्जनं कस्यचनापि देहिनः ।**
**समानदेशस्थितिशालिनस्तु तन्न शोभते क्वापि जनस्य बन्धवः ॥१७॥**

किसी भी प्राणिका वध यह तो भारतका अपमान है । और भाइयो ! अपने ही देशके मनुष्यका वध तो मनुष्यको कभी शोभा नहीं देता है ॥१७॥

**भवन्तु ते हिन्दुजना भवन्तु वा कुरानिनो नात्र भवेद्विचारणा ।**
**न कोपि केनापि भवेद्विहिंसितः क्वचित्कदाचिद्रिपुताग्रहग्रहात् ॥१८॥**

चाहे कोई हिन्दू हो अथवा मुसलमान् हो, इसका तो विचार ही कैसे हो सकता है ? शत्रुताके कारण कभी किसीको मार डालना नहीं चाहिये ॥ १८ ॥

**कलङ्कितः स्याद्यदि देश आत्मनः कयापि कृत्या जगताभिवन्दितः ।**
**कलङ्क एवास्ति स नो निवासिनामिहेति नित्यं मनसा प्रतीयताम् ॥१९॥**

जगत्‌भरसे वन्दित यह देश यदि हमारे किसी कर्मसे कलंकित होगा तो वह यहाँके रहनेवाले हम लोगोंका ही कलंक माना जायगा, इसे आप मनसे निश्चय कर लें ॥ १९ ॥

**न राजकीयान्स्वमनीषितान्क्वचिद्विधाय लक्ष्यं निजबन्धुजासनम्**
**भजेत केनापि पथा तदौचितीमिति स्वकीये हृदयेवधार्यताम् ॥२०॥**

किसी राजनीतिक इष्ट वस्तुको लक्ष्य बनाकर अपने भाइयोंका वध करना तो किसी प्रकारसे भी उचित नहीं कहा जा सकता, इसे आप हृदयमें निश्चय कर लें ॥ २० ॥

न कोपि शत्रुः सुहृदस्ति कोपि नो स्वभावतः कस्यचनावनीतले ।
स्वदोषतो वा गुणतो निजस्य वा समर्जितौ द्वौ भवतो जनैरिह ॥२१॥

इस संसारमें स्वभावसे न कोई किसीका शत्रु है और न कोई किसीका मित्र है । अपने दोष या अपने गुणसे यह दोनों शत्रु और मित्र बनाये जाते हैं ॥ २१ ॥

अयं च धर्मो गुरुतां गतः परामयं च धत्ते लघुतां निरन्तरम् ।
अयं विवेको न विवेकिनां क्वचिद्विशोभते तेन निकार्य एषकः ॥२२॥

यह धर्म श्रेष्ठ है और यह धर्म ( मजहब ) निकृष्ट है, इस प्रकारका विचार विवेकी पुरुषको कभी भी शोभा नहीं देता । अतः इस विचारका सर्वदा तिरस्कार ही करना चाहिये ॥ २२ ॥

विहाय रागादिकमीक्ष्यते यदि प्रमातृदृष्ट्या च तटस्थया दृशा
अवश्यमेवैतदुपाश्रितं भवेत्समत्वमास्ते निखिलेषु तेष्विति ॥२३॥

राग द्वेषको छोड़कर प्रमाताकी दृष्टिसे और तटस्थ बुद्धिसे जब आप विचार करेंगे तो अवश्य इसे मान लेंगे कि सब धर्मोंमें समानता ही है ॥२३॥

न वेत्ति वेदान्न स ईश्वरः परं कुरानभाषावगतिर्न तस्य न ।
स वेत्ति ज़न्दं च ज़बूरमप्यलं स बुद्धिमान् बाइबिलं च बोधति ॥२४॥

वह ईश्वर वेद नहीं जानता है, यह बात नहीं है । वह कुरान नहीं समझता है, यह बात भी नहीं है । वह सब वेद भी जानता है, कुरान, जन्दावस्ता, जबूर और बाइबिलको भी जानता ही है ॥ २४ ॥

न तस्य दृष्टौ मलिनाः श्रुतिप्रभाः कुरानवाचोपि तथा न सन्ति वा ॥
किमर्थमस्माभिरनर्थशालिनी विधीयते तर्हि मुधैव कल्पना ॥२५॥

ईश्वरकी दृष्टिमें न तो वेद गन्दे हैं और न कुरानकी वाणी गन्दी है । तब आप लोग व्यर्थमें अनर्थ पैदा करनेवाली कल्पना क्यों करते हैं ॥२५॥

विहारपुर्यां वसतां कुरानिनां तथा मुँगेरं परितः स्थितिश्रिताम् ।
मनो न हिन्दूभयतोस्ति वर्जितं ततो न ते यान्ति निजं निजं गृहम्॥२६॥

बिहार नगरमें और मुंगेरके आस पास रहनेवाले मुसलमानोंके मनमेंसे हिन्दुओंका भय गया नहीं है अतः वह अपने अपने घर नहीं जाते हैं ॥ २६ ॥

न चेदुदेत्यात्मकृतेषु हृद्व्यथा मनो न वा चेत्त्रपतेत्रपं तदा ।
क्व हिन्दुता स्थास्यति भव्यकीर्तिसत्प्रभाप्रभाता निहतैव साधुना ॥२७॥

यदि अपने कियेपर हृदयमें दुःख न होता हो और निर्लज्ज मन लज्जित न होता हो तो भव्य कीर्तिवाली हिन्दुता कहाँ रहेगी ? वह तो तब नष्ट ही हो चुकी है ॥ २७ ॥

भवन्तु केप्येव न शस्त्रपाणयः स्पृशन्तु केप्येव न शत्रुभावनाम् ।
समं स्थिते सर्वजनेषु सर्वदा महेश्वरे विश्वसनं विधीयताम् ॥२८॥

न तो कोई किसीके साथ शत्रुता रखें और न कोई हथियार धारण करें । भगवान् सबमें समानरूपसे स्थित है, उसमें विश्वास करें ॥ २८ ॥

उपद्रुता ये यवनाः पलायिता गृहं परित्यज्य निजं परं प्रियम् ।
उपेत्य तान्हिन्दुजनाः शुभेच्छया नयन्तु तेषां भवनं पुनः स्वयम् ॥२९॥

जो मुसलमान् घबड़ाकर अपने परम प्रिय घरको छोड़कर भाग गये हैं आप उनके पास जायँ और शुभेच्छासे उन्हें उनके घर आप स्वयं ले आवें ॥ २९ ॥

कृतापराधान्स्वजनानपीतरान्गृहाद्बहिष्कृत्य च शासनार्पितान् ।
कुरुध्वमेतेन भवेन्न शासनं वृथाश्रमं स्यान्न च संघदण्डनम् ॥३०॥

जो अपराधी हों वह चाहे आपके सम्बन्धी हों चाहे अन्य कोई भी हों, उन्हें घरसे बाहर निकालकर सर्कारको सौंप दें । इससे न तो सर्कारका श्रम व्यर्थ जायगा और न सामुदायिक दण्ड ही होगा ॥ ३० ॥

व्यथितहृदयतत्त्वो हिन्दुलोकापराधै-
र्यतिवर इति नैजीः संप्रयुज्यैव वाचः।
सदसि समुपयातान्क्रोधबोधानलाढ्या-
न्कथमपि सहसा ताञ्छान्तचित्तांश्चकार ॥ ३१ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
द्वादशः सर्गः

हिन्दुओंके अपराधसे दुःखितमनवाले महात्माजीने इस प्रकारसे अपनी वाणीका प्रयोगकरके सभामें उपस्थित क्रुद्धजनोंको किस तरहसे अकस्मात् शान्तचित्त बना दिया ॥ ३१ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
द्वादशः सर्गः



# त्रयोदशः सर्गः

यत्रातपद्धोरतमः प्रतापः पाण्डोस्तनूजस्य युधिष्ठिरस्य।
सत्याभिसन्धस्य जगत्प्रसिद्धा दिल्लीति पूः पूर्ववदेव सास्ति ॥१॥

जहाँ पाण्डुपुत्र सत्यवादी महाराज युधिष्ठिरका भयङ्कर प्रताप वर्तमान था वह जगत्प्रसिद्ध दिल्ली आज भी वैसी ही है ॥ १ ॥

तत्राश्ववेदग्रहदेहिसंख्ये यीश्वब्दके शुभ्रतिथौ चतुर्थ्याम्।
अग्र्ये हि मासे मिलितैशियीया सैका सभा सर्वहितानुबद्धा ॥२॥

उस दिल्लीमें १९४७ ई० सन्के जनवरी मासकी चौथी तारीखको वह प्रसिद्ध एशियावासियोंकी एक सभा सबके हितकेलिये हुई थी ॥ २ ॥

एज़रबिजन् देशत आगतः श्रीयूसोटफासीत्प्रमुखः सभायाः।
विद्वद्वरिष्ठं भवमोहनं तं श्रीमोहनं कश्चिदपृच्छदेवम् ॥३॥

एज़रबिजन् देशसे आये हुए श्री० यूसोटफ् उस सभाके प्रमुख थे। वहाँ किसीने जगत्को लुभानेवाले श्रीमोहनको—श्रीमहात्माजीको किसीने पूछा ॥ ३ ॥

एतत्समस्तं जगदापदायै प्रवर्ततेद्यापि पृथक्त्वमत्र।
भेदं विभिद्यैकमिदं भवेच्चेत्सर्वार्थसिद्धिर्भविता न वेति ॥४॥

कि, यहाँ = जगत्में आज भी अलगपना चल रहा है। वह तो विपत्तिका ही कारण है। यदि सारा संसार भेदभावको छोड़कर एक हो जाय तो सर्व इष्ट सिद्धि हो सकेगी या नहीं ! ॥ ४ ॥

सद्योवदच्छ्रीयतिराज एतदेतज्जगच्चेन्न भवेदभिन्नम्।
नो जीवितुं स्यान्मम कामनात्र दुःखानुविद्धे विभिदे भवेन्न ॥५॥

श्रीयतिराज महात्माजीने तुरन्त ही यह उत्तर दिया कि यदि यह जगत्

अभिन्न = एक न हो सके तो इस दुःखपूर्ण अनेक भेदवाले जगत्में मेरी जीनेकी इच्छा ही न हो ॥ ५ ॥

**पप्रच्छ चान्यो भवता मतं चेदैक्यं समस्तस्य भवस्य कामम् ।**
**तत्साधनानामुपदेशमद्य श्रोतुं समाकाङ्क्षति सर्वचेतः ॥ ६ ॥**

एक दूसरे भाईने पूछा : यदि आप जगत्की एकता चाहते हैं तो हम सब लोग उसके साधनोंका उपदेश सुनना चाहते हैं ॥ ६ ॥

**यदि प्रयत्नः क्रियतां दृढेन चित्तेन निःशङ्कमियं सदिच्छा ।**
**पूर्तिं समेष्यत्यचिरेण लोकमेकीभवन्तं वयमीक्ष्महेद्य ॥ ७ ॥**

यदि दृढ़ चित्तसे प्रयत्न किया जाय तो निस्सन्देह यह इच्छा पूरी होगी और जगत्को एक बनते हुए हम देखेंगे ॥ ७ ॥

**सर्वैशियामानसतन्तुयोक्त्री संस्था भवेत्काचिदिदं मतं नः ।**
**श्रोतुं समुत्का वयमत्र श्रीमत्स्पष्टं मतं कोप्यपरो ह्यपृच्छत् ॥ ८ ॥**

सम्पूर्ण एशियाको एक करनेवाली कोई एक संस्था होना चाहिये यह हम लोगों का विचार है । इस विषयमें आपका क्या स्पष्ट मत है, उसे हम लोग सुनना चाहते हैं ॥ ८ ॥

**स प्रत्युवाचायमवश्यमस्ति प्रश्नः समीचीन उदूढसत्त्वः ।**
**जाने परं स्पष्टतरं न किञ्चित्संस्थास्थितं वस्त्वसमीपगोहम् ॥ ९ ॥**

महात्माजीने कहा कि अवश्य ही यह प्रश्न उत्तम भी है और दृढ़ भी है । परन्तु मैं अभी तो दूर था अतः इस संस्थाके सम्बधमें कुछ जानता नहीं हूँ ॥ ९ ॥

**अस्याः सभायाः समयं विधातुं वंचित्स्थिरं श्रीलजवाहरेण ।**
**मामत्र योग्ये समये प्रयासादुपस्थितिं साधयितुं च पृष्टम् ॥१०॥**

इस सभाका कोई समय स्थिर करनेकेलिए तथा यहाँ मुझे योग्य समय पर अवश्य आनेकेलिये पण्डित जवाहरलालने पूछा था ॥ १० ॥

आदां तदाहं विवशो मदीयमेतत्प्रियायापि जवाहराय।
प्रत्युत्तरं रूक्षतरं न शक्यमस्त्यत्र तातागमनं ममेति ॥११॥

मैंने लाचार होकर पण्डित जवाहिरलाल मेरे प्रिय हैं तो भी मैंने सूखा सा जवाब दिया कि तात, मेरा यहाँ सभामें आना शक्य नहीं है ॥ ११ ॥

आसीन्ममेदं हृदयेतिदुःखं संमेलनेस्मिन्न भविष्यतो हि।
माउन्ट बेटन्परमाह्वयन्मामामन्त्रणेनात्र नवागतोसौ ॥१२॥

इस संमेलनमें सम्मिलित न होनेका मुझे भी दुःख था। परन्तु लार्ड माउन्ट बेटन जो अभी नये (वाइसराय) आये हैं उन्होंने मुझे आमन्त्रण देकर बुलाया है ॥ १२ ॥

यद्यप्यहं कार्यनिमग्न आसं नासीत्क्षणायाप्यवकाशकालः।
स्वीयस्वभावादवहेलनाय तस्याग्रहस्याचकमन्न चेतः ॥१३॥

यद्यपि मैं कार्यमें फँसा हुआ था। क्षण भरकेलिए भी अवकाश नहीं था। परन्तु अपने स्वभावके कारण चित्तने मुझे उनके आग्रहकी अवहेलना करनेकी इच्छा नहीं करने दी ॥ १३ ॥

अत्रागतं मां प्रहसन्नवादीन्माउन्टबेटन्नधिगोष्ठ्यहं चेत्।
स्थातुं समीहे मनसश्च तस्य नूनं भवेत्कोपि परः प्रसादः ॥१४॥

जब मैं यहाँ आया तो लार्ड माउन्टबेटनने हँसते हुए कहा कि यदि मैं इस सभामें रहनेकी इच्छा करूँ तो उनके मनमें कोई अपूर्व आनन्द होगा ॥ १४ ॥

तस्यापि चास्यापि जवाहरस्य बन्दित्वमापद्य सदा स्थितोहम्।
एतस्य हेतोरहमद्य शक्तो भूतोस्मि संसद्युपवेष्टुमत्र ॥१५॥

मैं तो वाइसरायका और श्रीजवाहरका भी कैदी हूँ। इसीलिए इस सभामें बैठनेके लिए मैं समर्थ हो सका हूँ ॥१५॥

जानामि देशान्निखिलान्कथंचित्पत्रादिभिः किन्तु न संस्तुतोस्मि।
साक्षाद्भवद्भिर्विविधान्वयैस्तच्चेतश्चिरं चुम्बति विह्वलत्वम् ॥१६॥

मैं पत्रादि द्वारा किसी प्रकार सब देशोंको जानता तो हूँ परन्तु आप लोगोंसे मेरा साक्षात् परिचय नहीं है। अतः चित्त विह्वल रहता है ॥१६॥

**एतत्सभाया जनये यदस्ति प्रस्तावपत्रे लिखितं तदूर्ध्वम्।**
**शक्तोधिकं वक्तुमहं न तस्मात्कालव्ययो नो करणीय इष्टः ॥१७॥**

इस सभाकी उत्पत्तिके लिए जो कुछ प्रस्तावपत्रमें लिखा गया है उसके आगे अधिक कहनेके लिये मैं समर्थ नहीं हूँ। अतः समय बिताना मैं नहीं चाहता ॥१७॥

**एतादृशी संसदभूतपूर्वा श्रीभारतस्याद्य वसुन्धरायाम्।**
**संगत्य सर्वाङ्गनवं चिरायाचिनोति सैतिह्यमुदारमूर्ति ॥१८॥**

अभूतपूर्व—कभी भी नहीं हुई थी ऐसी यह सभा भारतकी भूमिपर होकर चिरकालके लिये सर्वांग नवीन एक उदार इतिहास लिख रही है ॥ १८ ॥

**यूयं परं पश्यथ भारतीयानस्त्रैश्च शस्त्रैश्च नियुध्यमानान्।**
**निस्संशयं वो हृदये च तेन दुःखाकरिष्यत्यखिलं चरित्रम् ॥१९॥**

परन्तु आपने देखा कि यहाँ भारतवासी अस्त्र-शस्त्र लेकर परस्पर लड़ रहे हैं। यह चरित्र आपको अवश्य खिन्न बनावेगा ॥ १९ ॥

**जानीमहे नो प्रियबन्धुताया निर्वाहरीतिं हृदि संनतायाः।**
**तेनैव शान्तिं विरहय्य शत्रुत्वायैव सज्जा नितरां वयं स्मः ॥२०॥**

हृदयमें रही हुई जो बन्धुता है उसके निभानेकी रीति हम नहीं जानते; इसीलिये शान्तिका त्याग करके शत्रुता करनेके लिये ही हम तैयार हैं ॥२०॥

**किंचित्पुरः प्रार्थय आधिदूनो युष्माकमेतद्धृदये कुरुध्वम्।**
**एतत्कुकृत्यं मम देशबन्धुलोकानुविद्धं किल विस्मरेत ॥२१॥**

आपके समक्ष मैं कुछ प्रार्थना दुःखित हृदयसे करता हूँ उसे आप मनमें रखें। वह प्रार्थना यह है कि मेरे देशबन्धुओंके इस लड़ाई-झगड़ा रूप कुकृत्यको आप भूल जायँगे ॥ २१ ॥

वाच्या न दोषा मम युष्मदीये देशे हि युष्मानहमद्य भिक्षे ।
अत्रैव विस्मृत्य ममापराधान्गन्तव्यदेशान्प्रतियात शान्ताः ॥२२॥

मैं आप सबसे प्रार्थना करता हूँ कि मेरे इन दोषोंको आप अपने देशमें जाकर न कहें । मेरे अपराधोंको यहाँ ही भुलाकर आप अपने देशमें जायँगे ॥ २२ ॥

स्वातन्त्र्यसीमानमयं मदीयो देशोऽधुनैवोद्यतते प्रवेष्टुम् ।
अस्यां धरायामधिपत्वमाराद्यस्यापि कस्यापि न सह्यमास्ते ॥२३॥

यह मेरा देश आज स्वतन्त्रता प्राप्त करनेके लिये उद्यत है । इस पृथिवीपर किसीका स्वामित्व सहन करने योग्य नहीं है ॥२३॥

सा कामना नः परिवर्तनस्य राज्यस्य राज्ञोऽपि च भारतेऽस्मिन् ।
वस्तव्यमस्माभिरधीश्वरत्वभावेन भूमाविह सर्वथा नो ॥२४॥

इस भारतमें राज्य और राजाके परिवर्तनकी हमारी वह इच्छा है । हमारे साथ इस भूमिपर राजा बनकर किसीको रहना नहीं चाहिये ॥२४॥

किं स्यात्फलं तस्य तदप्यलं नो ध्यानाद्बहिर्नास्ति मनागपीह ।
भीतिर्न काचित्परिबाधते नः स्फीतिः सदा चेतसि चेतनायाः ॥२५॥

इस परिवर्तनका क्या परिणाम होगा वह भी हमारे ध्यानसे जरा भी बाहर नहीं है । हमें कोई भय नहीं लगता है । चित्तमें उत्साह बढ़ता ही रहता है ॥ २५ ॥

कर्तव्यमित्येव मनुष्यधर्मो लाभोऽप्यलाभोऽपि न नोऽधिकारे ।
ईष्टे सदैवेश्वर एव तत्र सर्वान्तरप्राणमयोऽस्त्यसौ हि ॥२६॥

कर्तव्य करना यह मनुष्यका धर्म है । हानि अथवा लाभ यह हमारे अधिकारकी बात नहीं है । उसपर तो ईश्वरका ही स्वामित्व है । क्योंकि वही सबका अन्तरप्राण है ॥ २६ ॥

नैजं स्वयं भाविनमर्थमत्रोत्पाद्येत मानुष्यक इत्यसत्यम् ।
ईशेन संप्रेरितमेव वस्तु लभ्येत कालेन जनोऽप्युपायात् ॥२७॥

मनुष्य अपने भावी पदार्थको स्वयं उत्पन्न करता है, यह कहना असत्य है। वस्तु सब ईश्वरप्रेरित ही होती है परन्तु मनुष्य उत्तम उपायके द्वारा समय पर उसे प्राप्त करता है ॥ २७ ॥

एतादृशी शक्तिरसौ न चाल्ला नायं महेशो न परोपि कश्चित् ।
सत्ये हि सर्वानतिचिन्तनीया शक्तिर्निगूढास्ति ततोस्ति सत्यम् ॥२८॥

ऊपर कही हुई ऐसी शक्ति न तो अल्ला है, न ईश्वर है और न अन्य कुछ। सत्यमें ही अचिन्त्य शक्ति छिपी हुई है। अतः वह शक्ति सत्य ही है—अन्य नहीं है ॥ २८ ॥

सत्यं परात्मेति मतं मदीयं कर्तव्यवस्तुष्वभिविश्य तच्च ।
तिष्ठत्सदा प्रेरयति प्रकामं कर्तुं मनुष्यानिह कर्मजातम् ॥२९॥

मेरे मतमें सत्य ही परमात्मा है। वह सभी कर्तव्यवस्तुमें प्रवेश करके रहा हुआ है। वही मनुष्योंको कर्म करनेकेलिये सदा प्रेरणा करता है ॥ २९ ॥

बाल्यात्प्रभृत्येव सुशिक्षितोस्मि प्राप्यं न कार्त्स्न्येन कथंचिदेतत् ।
तस्माददृश्यं तदनाप्यमेव गम्यं न कस्यापि परेशसत्यम् ॥३०॥

बाल्यावस्थासे ही मुझे सिखाया गया है कि वह सत्यरूप परमात्मा किसीसे सर्वांशमें प्राप्त नहीं किया जा सकता। वह अदृश्य है। अप्राप्य है और अगम्य है ॥ ३० ॥

यस्यास्ति यावद्बलमत्र लब्धुं तावत्स तत्पश्यति नान्यथेति ।
यावत्प्रयत्नं तदुपास्यमाप्यं सर्वैरनन्तं निखिलप्रविष्टम् ॥३१॥

जिसको जितनी शक्ति मिली है वह उतना ही उसे देखता है। वह सबमें प्रविष्ट है और प्रयत्नके अनुसार ही वह प्राप्य और व्यवहार्य है ॥३१॥

अत्र स्थ यूयं मिलिताः क्रमेण विभिन्नभागेभ्य इहैशियायाः ।
द्वैतीयकेब्देप्रतिकूलदेशे तार्तीयके वापि मिलेत चेत्थम् ॥३२॥

आप लोग एशियाके विभिन्नदेशोंमेंसे यहाँ आकर मिले हैं। इसी प्रकार प्रत्येक द्वितीयवर्ष अथवा तृतीयवर्ष किसी अनुकूल देशमें मिलते रहें ॥ ३२ ॥

**एतादृशां यूयमुपासितानामास्थानपुष्पाञ्चितवाटिकानाम् ।**
**सौगन्ध्यमीड्यं प्रतिदेशमात्मशक्त्या प्रवाता इव हारयध्वम् ॥३३॥**

अपने इस प्रकारकी सभारूप पुष्पवाटिकाओंके सुगन्धको अपनी शक्तिके अनुसार प्रत्येक देशमें फैलावें—ले जावें ॥ ३३ ॥

**यूयं समस्ताः समवेत्य शान्ता यूरोपदेशं ह्यथवाम्रिकां वा ।**
**अन्याः प्रजा वापि विजेतुकामा न स्थेति सत्यं परमित्यवैमि ॥३४॥**

आप सब लोग इकट्ठे होकर युरोपको अथवा अमेरिकाको अथवा किसी अन्यप्रजाको जीतनेकी इच्छा नहीं रखते हैं, इस परम सत्यको मैं जानता हूँ ॥ ३४ ॥

**नो भारतं वापि विदेशिदेशं जेतुं कदापीच्छति चेतसापि ।**
**एवं करिष्यत्तदतीव नूनं चेतो दविष्यत्यधिकं ममैव ॥३५॥**

भारत भी किसी विदेशी देशको मनसे भी जीतनेकी इच्छा नहीं करता है। यदि वह ऐसा करेगा तो अवश्य ही मेरे ही हृदयको अधिक दुःख देगा ॥ ३५ ॥

**निस्संशयं योरुपदेशजातं संगत्य भिन्नासु किल प्रजासु ।**
**एश्येतिखण्डस्य निजप्रभुत्वं संस्थाप्य संस्थाप्य विलुण्ठति स्म ॥३६॥**

इसमें सन्देह नहीं कि यूरोपवाले एशियाके भिन्न-भिन्न प्रजाओंमें जाकर अपना स्वामित्व स्थापन कर करके उसको लूटते थे ॥ ३६ ॥

**पाश्चात्यदेशीयजना इवैव स्वातन्त्र्यपूर्णं निजजीवनं चेत् ।**
**निर्मातुमत्रानवधार्य यूयं यायात तद्दुःखदमेव भूयः ॥३७॥**

जिस प्रकारसे पाश्चात्य लोग स्वतन्त्रतापूर्ण अपना जीवन बनाते हैं वैसा ही बनानेके लिये निश्चय किये विना ही यदि आप लोग चले जायँगे, तो यह दुःखकी ही बात होगी ॥३७॥

वाच्यं मयैतादृश एष देशो योग्यः सभाया उचितं स्थलं स्यात् ।
अत्रास्त्यहिंसा सुदृढा सुगम्या सत्यं परं राजत एव चात्र ॥३८॥

मुझे यह कहना चाहिये कि ऐसी सभाकेलिये यह देश योग्य है और यह स्थल उचित है। यहाँ अहिंसा अत्यन्त दृढ़ और सुगम भी है। एवं यहाँ सत्य भी अधिक मात्रामें है ॥३८॥

नो भारतं तत्प्रतिवीक्षितं यद्युष्माभिरद्यात्र महायशोभिः ।
तद्दर्शनाय प्रतिगच्छतार्या ग्रामेषु लक्षेषु च सप्तकेषु ॥३९॥

ऊपर कहा है कि यहाँ अहिंसा अधिक दृढ़ है, यह तो असत्य है, क्योंकि दिल्ली में तो हिंसा उस समय भी हो रही थी। नोआखलीमें हिंसा चल ही रही थी। बिहार की भी यही दशा थी। तब यह कहना कि भारतमें अहिंसा दृढ़ है, यह सत्य नहीं है। इसका उत्तर देते हैं। आपने जिसे देखा है वस्तुतः वह भारत ही नहीं है। यदि सच्चे भारत को देखना है तो आपको सात लाख गाँवों में जाना चाहिये ॥३९॥

तेष्वेव विध्वस्तमनुष्यतेषु ग्रामेषु तद्भारतमस्ति दृश्यम् ।
अद्यश्च तत्रोटजवासिवक्त्राज्ज्ञानस्य सारो ननु बोधुनापि ॥४०॥

जहाँ मनुष्यता नष्ट हो चुकी है उन्हीं गाँवोंमें ही भारतका आप दर्शन कर सकते हैं। वहाँ ही आप आज भी झोपड़ोंमें रहनेवालोंके मुखसे ज्ञानका सार सुन सकते हैं ॥४०॥

पर्णोटजेष्वेव निवासशीलं शीलान्वितं भारतमीक्ष्यतेद्य ।
प्रासादहीनेष्वपि हर्म्यहीनेष्वेष्वेव लीनं ननु भारतं नः ॥४१॥

पासके झोपड़ोंमें ही आज सर्वशीलसम्पन्न भारत देखा जा रहा है। जहाँ महल नहीं हैं, हवेलियाँ नहीं हैं उन्हीं गाँवोंमें भारत—हमारा भारत छिप गया है ॥४१॥

दिल्ली च मद्रासपुरं च कालीकाता च मुम्बापुरमेव दृष्टम् ।
श्रीमद्भिरेतानि न भारतं स्यात्पाश्चात्यसंस्कारविभूषितानि ॥४२॥

आप लोगोंने दिल्ली, मद्रास, कलकत्ता, बम्बई आदि शहर ही देखे हैं। परन्तु यह भारत नहीं हैं। वह तो पश्चिमीय सभ्यताके रंगसे रँगे हुए हैं ॥४२॥

आसं यदाहं किल दाक्षिणात्याफ्रीकाप्रदेशेषु कुलीवकीलः ।
फ्रांसो जनः कोपि विचारशीलो मां तत्र सख्येन हसन्नवापत् ॥४३॥

जब मैं दक्षिण अफ्रिकामें था और अंग्रेज लोग मुझे कुलियोंका वकील कहा करते थे उस समय एक विचारवान् फ्रांस-वासी भाई मित्रता करनेकी दृष्टिसे प्रसन्नतासे मेरे पास आये ॥४३॥

फ्रांसोद्भवा तज्जननी सुशीला श्वेताङ्गजस्तज्जनकः सुशीलः ।
तस्माच्च तद्देहजनाडिकासु फ्रासाङ्ग्लदेशक्षतजप्रवाहः ॥४४॥

उनकी माता तो फ्रेंच थीं और उनके पिता अंग्रेज थे। अतः उनके शरीरमें फ्रांस और इग्लैंड दोनों देशोंका खून उनकी नस-नाड़ियोंमें बह रहा था ॥४४॥

अशिश्रवन्मां स कथां तदैकां फ्रान्सीयभाषात उदारचेताः ।
स्वेच्छात एवातिनिगूढतत्त्वां तां श्रावयामीह बुधप्रकाण्डान् ॥४५॥

उस समय उन्होंने उदार मनसे, स्वेच्छासे ही फ्रेंच भाषासे उद्धृत करके एक वार्ता मुझे सुनायी थी उसे मैं आपको सुनाता हूँ ॥४५॥

सत्यं विजिज्ञासितुमाकुलाङ्गास्तत्त्वप्रियास्तत्त्वविदस्त्रयो हि ।
फ्रान्साद्विनिर्जग्मुरनुस्मरन्तः सर्वाभिसेव्यं परमाद्यदेवम् ॥४६॥

सत्य क्या पदार्थ है उसे जाननेकेलिये जिनका अङ्ग अङ्ग व्याकुल था ऐसे तीन आदमी भगवान्का स्मरण करते हुए फ्रांससे निकले ॥४६॥

भ्रान्ताश्च देशांस्त्रिभिरेशियाया लब्धं न सत्यं सुगुहाप्रविष्टम् ।
एको गतस्तेषु च भारतोर्वी बभ्राम मुख्यासु पुरीषु तावत् ॥४७॥

वह तीनों ही एशियाके सब देशोंमें फिरे परन्तु गुहाप्रविष्ट सत्य उन्हें प्राप्त नहीं हुआ। तब उन तीनोंमेंसे एक भारतमें गये और मुख्य मुख्य नगरोंमें पहिले घूमे ॥४७॥

प्रासादपुञ्जेषु कृताधिवासान्प्राप्तः स्त्रियो वा पुरुषाननेकान्।
जिज्ञासमानः स हि सत्यदेवं नैराश्यमेवान्वभवत्तदानीम् ॥४८॥

महलोंमें रहनेवाले बहुतसे पुरुषोंको और बहुत सी स्त्रियोंको वह सत्यकी शोधकेलिये मिले। परन्तु उस समय वह निराश ही हुए ॥४८॥

गतस्तदा ग्रामटिकासु सद्यः पस्त्येषु दारिद्र्यनिपीडितानाम्।
निष्ट्योटजे तत्र गतः स विद्वान्बभूव लब्धस्वमनीषितार्थः ॥४९॥

तब वह गाँवोंमें दरिद्रतासे पीड़ित लोगोंके घरोंमें गये। वहाँ वह एक हरिजन—अन्त्यजके झोपड़ेमें गये और वहाँ उन्हें सत्यदेवका साक्षात्कार हुआ ॥ ४९ ॥

तस्माद् ब्रुवे गच्छत वीक्षितुं चेद्ग्रामेषु यूयं निपुणं तदानीम्।
किं भारतं तद्भवितातिशीघ्रं ज्ञानं व्यतीतावयवं पुनर्वः ॥५०॥

इसीलिये मैं कहता हूँ कि यदि आप गाँवोंमें सावधानतापूर्वक भारतको देखनेकेलिये जाएँ तो वहाँ भारत क्या है? यह ज्ञान आपको अवश्य होगा ॥ ५० ॥

प्राच्याः प्रतीची प्रथमं हि लेभे ज्ञानप्रभापुञ्जपरावतारम्।
जर्थुष्टबुद्धौ प्रबभूवतुस्तावध्येशियाभूमि स यीशुरासीत् ॥५१॥

यह तो निश्चय है कि पश्चिमने पूर्वसे ही ज्ञानको प्राप्त किया है। एशियाकी भूमिमें ही जर्थुष्ट हुए, बुद्ध हुए और यीशु हुए ॥ ५१ ॥

यीशोश्च पूर्वं परिलब्धजन्मा मूसापि संजज्ञ इजिप्तदेशे।
प्राच्यां विजातः स मुहम्मदोपि प्राची ततोस्त्येव गुरुः प्रतीच्याः ॥५२।

यीशुसे पूर्व मूसा भी ईजिप्तमें पैदा हुए थे। मुहम्मद भी पूर्वमें ही पैदा हुए थे। अतः पूर्वदेश पश्चिमदेशोंके गुरु हैं ॥ ५२ ॥

रामस्य कृष्णस्य पवित्रनाम्नी नाजीगणं तेन न वेदितव्यम् ।
महात्म्यनूनं हि तयोः परन्तु ज्ञातौ न तौ पुस्तकवत्सुधीभिः ॥५३॥

मैंने राम और कृष्णके पवित्र नामोंकी गणना नहीं की है। इससे यह नहीं मानना चाहिये कि उनका माहात्म्य कम है। नाम न लेनेका कारण यह है, कि पुस्तकोंको पढ़कर ज्ञान प्राप्त करनेवाले विद्वानोंको इतिहासके पुस्तकमें यह नाम नहीं मिलेंगे ॥५३॥

यद्यत्समादिक्षदुदारचेता जगत्समग्रं कृपयैशियासौ ।
तत्तद्भवेत्सर्वमदभ्ररूपैर्यौष्माकचित्ते ग्रथितं सदेति ॥५४॥

उदार मनवाले एशियाने कृपा करके सारे जगत्को जो जो उपदेश किये हैं वह सब आपके मनमें निश्चित रूपसे स्थिर रहें ॥ ५४ ॥

सन्देष्टुमिच्छा यदि जागृयाद्विश्चित्ते प्रतीचीं प्रति तर्हि सत्यम् ।
प्रेमाप्यहिंसा निखिलेषु देशेष्वारात्समान्संदिशताद्य सम्यक् ॥५५॥

यदि आपके हृदयमें पश्चिमको कोई संदेश देनेकी इच्छा हो तो सत्य, प्रेम और अहिंसाको सब देशोंमें सबको संदेश दें ॥ ५५ ॥

यौष्माकबुद्धेर्न हि केवलायाः सम्यक्परीवर्त इहास्त्यभीष्टः ।
बुद्ध्या मनो वो हृदयं च गाढं सद्योधिकर्तुं मम चेतसीच्छा ॥५६॥

केवल आपकी बुद्धिमें परिवर्तन करना इतना ही मुझे इष्ट नहीं है। बुद्धिके साथ-साथ आपके मन और हृदयपर पूरा अधिकार करनेकी भी मेरे मनमें इच्छा है ॥ ५६ ॥

उपगत इह कालो लोकशिष्टेः समन्तात्,
पददलितजनौघो जागृतिं सेवतेद्य
अवसर इति शुभ्रः प्रेमसत्यादिकानां,
त्वरयत गतमोहाः संप्रचाराय लोके ॥५७॥

लोकशासनका यह समय उपस्थित है। चारों ओर पददलित समाज

आज जग गया है। इसलिये यह बहुत सुन्दर समय है। प्रेम, सत्य, अहिंसाका प्रचार लोकमें करनेके लिये सावधान होकर शीघ्रता करें ॥५७॥

गतदयहृदयेयं स्वार्थपूर्णा प्रतीची,
विविधरचितजालैः सर्वथा वः क्षितीनाम् ।
सकलरसमचूषत्तत्समं विस्मरन्तो,
लुलितहृदयवृत्तिं शिक्षयध्वं हि तत्त्वम् ॥५८॥

पश्चिम निर्दय और स्वार्थपूर्ण देश है। अनेक प्रकारके रचे हुए जालोंसे आपकी पृथिवीका रस उसने चूस लिया है। इन सब बातोंको भूलकर उस चपल वृत्तिवाले पश्चिम देशको तत्त्वकी शिक्षा आपलोग दें ॥ ५८ ॥

अतिविपदि निमग्ना संततं संविषण्णा,
रचयदणुकबॉम्बा साप्तनैराश्यबिम्बा ।
मुदुपनतिसयत्ना श्रान्तिपादाभिलग्ना,
श्वसनविरहखिन्ना वः प्रतीक्षां करोति ॥५९॥

अत्यन्त विपत्तिमें पड़ी हुई, उदास, अणुबॉम्ब बनाती हुई, निराशाका दर्शन करती हुई, प्रसन्नता प्राप्त करनेके यत्नमें लगी हुई, थकी हुई, अब जिसके श्वास भी अन्तिम दशामें पहुँच गये हैं वह पश्चिम दिशा आप लोगोंकी प्रतीक्षा कर रही है ॥ ५९ ॥

निखिलजगदिदानीं दुःखदावानलेस्मि-
न्निपतितमिति हाहाकारमारौति नित्यम् ।
समय इह विपक्वो वः कृपावारिधारा,
शमयतु नयनास्रां तां प्रतीचीमुदारात् ॥६०॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
त्रयोदशः सर्गः

आज सारा ही जगत् दुःखदावानलमें पड़ा है अतः नित्य हाहाकार कर रहा है। आज समय पक गया है अतः आपकी कृपारूप जलधारा प्रसन्नतासे शीघ्र ही रोती हुई पश्चिम दिशाको शांति प्रदान करे ॥६०॥

**इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां त्रयोदशः सर्गः ।**



# चतुर्दशः सर्गः

भारतक्ष्मा यथा हिन्दूँस्तथैव च कुरानिनः ।
सूते प्रासूत सततं सर्वभेदबहिष्कृता ॥ १ ॥

भारतभूमि जैसे हिन्दुओंको वैसे ही मुसलमानोंको भी पैदा करती है और भूतकालमें कर चुकी है । उसकी दृष्टिमें कोई भेद नहीं है ॥ १ ॥

भारतीयमुसल्माना बहवो म्लेच्छमानसाः ।
हिन्दून्हन्तुं निरचिन्वन्मुस्लिम्लीगप्रतारिताः ॥ २ ॥

भारतीय दुष्ट मुसलमानोंने मुस्लिमलीगके बहकानेसे हिन्दुओंको मार डालनेका निश्चय किया ॥ २ ॥

पाकिस्तानं मुसल्मानराज्यं स्थापयितुं समे ।
कुरानिनोत्र हिन्दूनां हनने कृतनिश्चयाः ॥ ३ ॥

पाकिस्ताननामक मुसल्मानी राज्य स्थापन करनेके लिये सब मुसलमानोंने निश्चय किया कि हिन्दुओंको मार डालो ॥ ३ ॥

जिन्ना जीनोप्यसत्कर्तुं हिन्दून्वा हिंसितुं तथा ।
भारतीयमुसल्मानान्प्रोदसाहयताखिलान् ॥ ४ ॥

मिस्टर जिन्ना बूढ़े हो गये थे तो भी उन्होंने हिन्दुओंका तिरस्कार और वधकर डालनेके लिये सभी भारतीय मुसलमानोंको उसकाया—उत्तेजित किया ॥ ४ ॥

अधिनोवाखलि व्यापत्प्रथमं हिन्दुहिंसनम् ।
हननं छेदनं लुण्ठा धर्मात्प्रच्यावनं तथा ॥ ५ ॥

नोवाखली ( बंगाल ) में सबसे पहले हिन्दुओंका काटा जाना शुरू हुआ । मारना, काटना, लूटना और धर्मभ्रष्ट करना, यह चारों ओर वहाँ फैल गये ॥ ५ ॥

निखिलेषु ततः पश्चाद्देशेष्वाश्नुत सर्वथा।
हिंसा प्रवृत्तिरेतेषां मुहम्मदमताश्रिताम् ॥ ६ ॥

उसके पश्चात् सारे देशमें इन मुसलमानोंकी हिंसाप्रवृत्ति फैल गयी ॥ ६ ॥

हाहाकारेण निखिलं भारतं व्याप्तवत्तदा।
सिताङ्गसहकारेण सर्वमेतदभूदिह ॥ ७ ॥

सम्पूर्ण भारत हाहाकारसे भर गया। अंग्रेजोंकी सहायतासे ही यह सब हुआ था ॥ ७ ॥

जहीति हिन्धि हिन्धीति दह कुन्त निमज्जय।
भिन्धि च्छिन्धीति संरावैर्हिन्दवो व्याकुलीकृताः ॥ ८ ॥

मारो, मारो, जलाओ, काटो, डुबाओ, फोड़ो, तोड़ो इत्यादि शब्दोंसे हिन्दु व्याकुल बना दिये गये ॥ ८ ॥

गेहेभ्यो दह्यमानेभ्यो मुसल्मानजनैः खलैः।
शय्योत्थायमधावन्त हिन्दवो नक्तमातुराः ॥ ९ ॥

दुष्ट मुसलमानोंने घर जला दिये। रात्रिमें हिन्दू लाचार होकर पथारीमेंसे उठकर भागे ॥ ९ ॥

पेशावराच्च पञ्जाबात्सिन्धुदेशाच्च हिन्दवः।
पलाय्य देहलीमायन्मुसल्मानभयातुराः ॥१०॥

पेशावर, पंजाब और सिन्धसे हिन्दू लोग मुसलमानोंके भयसे घबड़ाकर भागकर दिल्ली आ गये ॥ १० ॥

तेषु केषामपि भ्राता केषामपि पितामहः।
केषामपि च पितरावजनाशं विनाशिताः ॥११॥

उनमेंसे किसीके भाई; किसीके दादा, किसीके माता-पिता बकरेके समान काट डाले गए थे ॥११॥

कासांचन पतिर्भ्राता स्वसा माता पितुष्वसा ।
मातुष्वसा च कासांचित्केशग्राहं निपातिताः ॥१२॥

किन्हीं स्त्रियोंके पति, भाई, बहिन, मा, फूआ, मासी, बाल पकड़-पकड़ कर मार डाले गए थे ॥ १२ ॥

तस्मात्क्रोधानलज्वालालीढप्रत्यङ्गहिन्दवः ।
वैरशुद्धिमकाङ्क्षंस्ते द्वेषशत्रुपराहताः ॥१३॥

इससे हिन्दुओंमें भी क्रोधकी आग भड़क उठी । द्वेष भर गया । बदला लेनेकी इच्छा उनमें जाग उठी ॥ १३ ॥

हायं हायं गृहान्स्वीयान्देहलीतः कुरानिनः ।
त्वरापूर्वं पलायन्त हिन्दुक्रोधाग्निभर्जिताः ॥१४॥

हिन्दुओंकी क्रोधज्वालासे जले हुए मुसलमान अपने-अपने घर छोड़कर झट दिल्लीसे भाग गए ॥ १४ ॥

रुग्णाः प्रज्ञा महादुःखाः प्रवयसः कुरानिनः ।
महात्मपादपाथोजयुगलं शरणं ययुः ॥१५॥

कितने ही रोगी, दुःखी, बूढ़े तथा बुद्धिमान् मुसलमान महात्मा श्री गांधीजीके चरणोंकी शरणमें गये ॥१५॥

तेषां विपत्कथाः श्रुत्वाश्लिष्य दुःखं निजे हृदि ।
लोककल्याणकामोसौ चिन्तामापन्महामुनिः ॥१६॥

उनकी दुःखकथा सुनकर, मनमें दुःखी होकर, सबका कल्याण चाहनेवाले महात्माजी चिन्तित हो गए ॥ १६ ॥

प्रण्यगादीद्यतिश्रेष्ठः सर्वान्हिन्दून्समन्वितान् ।
भवतां शोभते नैतदुपाक्रंसत कर्म यत् ॥१७॥

इकट्ठे हुए सब हिन्दुओंको श्रीयतिराजने कहा कि आपने जिस कार्यका आरम्भ किया है वह आपको शोभा नहीं देता है ॥१७॥

लज्जते वोद्य कार्येण महत्यार्यपरम्परा ।
संस्कृतिर्नैयमार्याणां हिंसया वैरशोधनम् ॥१८॥

आपके कार्यसे आज आर्योंकी एक लम्बी परम्परा लज्जित हो रही है। हिंसासे बदला लेना आर्योंकी संस्कृति नहीं है ॥ १८ ॥

यद्यप्यनारतं हिंसा पाकिस्ताने प्रवर्तते ।
तिरस्क्रियन्ते हन्यन्ते निर्घृणं तत्र हिन्दवः ॥१९॥

यद्यपि पाकिस्तानमें हिंसा रातदिन हो रही है। हिन्दू निर्दयताके साथ अपमानित किये जाते हैं और मार डाले जाते हैं ॥ १९ ॥

शठाचारं निरीक्ष्यैवं शठाचारप्रवर्तनम् ।
आर्यानुमोदितो नायं धर्मो भवति कर्हिचित् ॥ २० ॥

इस प्रकारके दुराचारको देखकर दुराचार बढ़ाना यह आर्योंका कभी भी संमत धर्म नहीं है ॥ २० ॥

उपद्रुतैर्निरुपघ्नैर्निर्गच्छत्प्राणवृत्तिभिः ।
आर्यैस्तदेव कर्तव्यं यशो न मलिनीभवेत् ॥ २१ ॥

उपद्रवसे हैरान किये गये हों, निराश्रय बने हों और मृत्युके किनारे खड़े हों तो भी हिन्दुओंको वही करना चाहिये जिससे कि कीर्ति मलिन न हो ॥ २१ ॥

पाकिस्तानात्पलायन्ते निस्सार्यन्ते च हिन्दवः ।
न तथा कर्तुमत्रापि युष्माकं कीर्तये भवेत् ॥ २२ ॥

पाकिस्तानमेंसे हिन्दू भाग रहे हैं, निकाले जा रहे हैं; वैसा ही यहाँ भी करनेसे आपकी कीर्ति नहीं बढ़ेगी ॥ २२ ॥

अप्रचेतितधर्माणो दुर्धर्माणो न वा वयम् ।
सुमेधसः कथंकारं शक्ता हा दुर्जनायितुम् ॥ २३ ॥

हमको धर्मका भान नहीं है, ऐसे हम नहीं हैं। हमारा धर्म भी

दुष्ट धर्म नहीं है। हम बुद्धिमान् और समझदार हैं तब दुराचार हम कैसे कर सकते हैं ॥ २३ ॥

मुसल्मानान्कथं यूयं वक्तुं शक्नुथ निस्त्रपाः।
पाकिस्तानं प्रयातेति दारुणं दारणं वचः ॥ २४ ॥

आप निर्लज्ज होकर मुसलमानोंको कठोर और फाड़नेवाला यह वचन कैसे कह सकते हैं कि तुम लोग पाकिस्तान चले जावो ? ॥ २४ ॥

न मया शक्यते वक्तुमीदृगार्यविगर्हितम्।
अवाच्यं वचनं क्वापि भारतक्ष्मात्रपावहम् ॥ २५ ॥

आर्योंसे निन्दित, और भारतको लज्जित करनेवाला ऐसा अवाच्य वचन मैं तो नहीं कह सकता हूँ ॥ २५ ॥

निष्काशनेन सर्वेषां भारततः कुरानिनाम्।
न शौर्यं नैव मानुष्यं प्रख्यातं स्यात्कुतोपि वः ॥ २६ ॥

भारतसे मुसलमानोंको निकाल देनेसे न तो आपकी शूरताकी और न मनुष्यताकी ही प्रसिद्धि होगी ॥ २६ ॥

अनुकर्तुं महावीराः शक्नुवन्ति न पामरैः।
उक्तमाचरितं किंचिद्यद्वा तद्वाविचारितम् ॥ २७ ॥

नीच लोग कुछ बोलें, या विना विचारे कुछ करें उसका अनुकरण वीर लोग नहीं कर सकते ॥ २७ ॥

बहावलपुरान्मीरपुरादपि समागमन्।
बहवो हिन्दवोकथ्यकथा विगलदश्रवः ॥ २८ ॥

बहावलपुरसे और मीरपुरसे भी बहुतसे हिन्दू आये हैं। उनकी दशा कहने योग्य नहीं है। उनकी आँखोंसे आँसू बह रहे हैं ॥ २८ ॥

श्रीजवाहरलालोपि उपातिष्ठत तत्क्षणम्।
अशृणोद्रेकचित्तेन धार्मिकस्तद्व्यथाकथाः ॥ २९ ॥

धार्मिक श्रीजवाहिरलालजी भी उस समय यहाँ उपस्थित थे और एकचित्तसे उनकी दुःखकी कहानी सुनते रहे ॥ २९ ॥

हिन्दूनां रक्षणायासौ यावच्छक्यं प्रवर्तते ।
रक्षिताः सर्व एव स्युर्नाशा ह्येषास्ति कल्पिता ॥ ३० ॥

हिन्दुओंकी रक्षाकेलिये शक्तिके अनुसार वह प्रवृत्त हैं । परन्तु यह आशा नहीं रखी गयी है कि सब हिन्दू बचा लिये जायँगे ॥ ३० ॥

धूमयानानि तावन्ति नास्माकं सविधेऽधुना ।
अपेक्षितानि यावन्ति तानानेतुमिहाखिलान् ॥ ३१ ॥

उन सभी हिन्दुओंको यहाँ लानेकेलिये जितनी रेलगाड़ियाँ चाहिये उतनी हमारे पास इस समय नहीं हैं ॥ ३१ ॥

न काश्मीरपथं चास्ति पर्याप्तं निरुपद्रवम् ।
लक्षकक्षामतिक्रान्ताँल्लोकान्सोढुं न तत्क्षमम् ॥ ३२ ॥

काश्मीरका मार्ग भी सर्वथा सुरक्षित नहीं है । लाखों आदमियोंको वह नहीं सह सकेगा ॥ ३२ ॥

शक्याः सर्व उपायास्ते गृहीताः सन्ति सत्वरम् ।
पाकिस्तानस्य हिन्दूनां प्राणत्राणकृते ननु ॥ ३३ ॥

जितने उपाय बन सकते हैं वह सभी शीघ्र ही पाकिस्तानके हिन्दुओंकी जान बचानेकेलिये किये गये हैं ॥ ३३ ॥

अनुकार्या हि सर्वेषां सद्गुणाः सन्मनीषिभिः ।
दोषाः सर्वे परित्याज्या मनोमालिन्यहेतवः ॥३४॥

बुद्धिमानोंको चाहिये कि सबके अच्छे गुणोंका ही अनुकरण करें । दोषोंका त्यागकर देना चाहिए क्योंकि उससे मनका दोष बढ़ता है ॥३४॥

विभक्तं भारतं चाद्य प्रवर्तेते च शासने ।
गमनं तत्र निर्बाधं नास्ति दुस्समयो ह्ययम् ॥३५॥

आज भारत दो भागोंमें विभक्त है। अलग अलग दो सर्कारें हैं। वहाँ जाना बहुत कठिन है। वस्तुतः यह ख़राब समय आया है॥३५॥

गजश्रुतिग्रहब्रह्ममिते यैशाववत्सरे।
सितम्बरस्य नवमे दिवसेहमिहागमम्॥३६॥

ता० ९ सितम्बर १९४८ ई० को मैं यहाँ आया॥ ३६॥

कलिकाताात आगत्य तदानीं गन्तुमुत्सुकः।
पश्चिमीयं च पञ्जाबं परमिच्छास्ति विघ्निता॥३७॥

कलकत्तासे आकर उसी समय मैं पश्चिमीय पंजाब जाना चाहता था। परन्तु विघ्न उपस्थित हुआ॥ ३७॥

भव्याभाभात्पुरा दिल्ली या सा तस्मिन्दिने मया।
हताभा च हतप्राणा सव्यथं वीक्षिता क्षिता॥३८॥

जिस दिल्लीकी भव्य शोभा थी, जो दिल्ली प्रकाशमान थी उसदिन मैंने देखा कि उसकी शोभा चली गयी है, प्राण भी चले गये हैं और वह नष्ट हो चुकी है॥ ३८॥

सौवागतिकलोकानां सर्वेषां निष्प्रभं मुखम्।
न्यवेदयन्मनोदुःखं सर्वाङ्गपरितापनम्॥३९॥

मेरे स्वागतके लिये जो लोग आये थे सबका मुँख बता रहा था कि उनके मनमें दुःख और परिताप है॥ ३९॥

वल्लभोपि परित्यज्य जन्मजातां प्रसन्नताम्।
प्राचकाशत सन्नात्मा मनस्थां कामपि व्यथाम्॥४०॥

श्री सर्दारवल्लभभाई भी अपनी स्वाभाविक प्रसन्नताको छोड़कर मानसिक व्यथाको प्रकट कर रहे थे॥ ४०॥

राजधानीस्थलोकेषु कलहानल उत्थितः।
नवागताय मे तर्हि तेनैवात्र निवेदितम्॥४१॥

जब मैं यहाँ नया नया आया तब उन्होंने ही मुझे कहा था कि इस राजधानीमें झगड़ा हो गया है । ४१ ॥

चमूचरशरप्रासादथवा नगररक्षकात् ।
वस्तुतो नास्ति सा शान्तिर्या सर्वैरवलोक्यते ॥४२॥

सैनिकोंके बाणों और सिपाहियोंके कारण यह शान्ति नहीं है, जिसे सब लोग देख रहे हैं ॥ ४२ ॥

मृत्युमित्रमुपश्लिष्य प्रवृत्तां क्षोभवर्द्धिनीम् ।
अशान्तिमपनेष्यामि प्रतिज्ञां पालयामि च ॥४३॥

क्षोभ बढ़ानेवाली इस अशान्तिको मैं मृत्युका आलिङ्गन करके भी दूर करूँगा और मेरी प्रतिज्ञाका पालन करूँगा ॥ ४३ ॥

गतेषु दिवसेष्वासीद्या मैत्री यच्च सौहृदम् ।
स्पृहयामि सदा तस्यै तस्मै चाप्युन्मनीभवन् ॥४४॥

भूतकालमें जो यहाँ मित्रता और सौहार्द था उसके लिये आज भी मैं झंखता हूँ ॥ ४४ ॥

ये मां द्रष्टुं समायान्ति मुसल्माना विचेतसः ।
कर्तव्यं किं हि तैरद्येत्येवं पृच्छन्त्यनारतम् ॥४५॥

घबड़ाए हुए जो भी मुसलमान् मुझे मिलनेकेलिये यहाँ आते हैं, सभी पूछते हैं कि आज उन्हें क्या करना चाहिये ॥ ४५ ॥

तेषां सयुक्तिकः प्रश्नः सर्वथास्ति निरुत्तरः ।
तेन मे व्यथते चित्तं वैवश्यं च विभाति मे ॥४६॥

उनके इस युक्तियुक्त प्रश्नका मेरे पास कोई उत्तर नहीं है । अतः मेरा मन दुःखी होता है और लाचारी प्रतीत होती है ॥ ४६ ॥

आन्तरध्वनिरासीन्मे कर्तुं प्रायोपवेशिकाम् ।
निर्बल्यं स्वं च सन्दिह्य सदौदासीन्यमास्थितः ॥४७॥

मेरे अन्तर से शब्द निकलता था कि मैं उपवास करूँ। परन्तु अपनी निर्बलता का सन्देह करके मैं सदा उदासीन रहता आया हूँ ॥४७॥

उपवासमवालम्ब्य प्रश्नानां दुःखजन्मनाम्।
सर्वेषामेव लभ्येत योग्यमेव सदुत्तरम् ॥ ४८ ॥

उपवासका सहारा लेकर दुःखसे पैदा हुए सभी प्रश्नोंका योग्य उत्तर मिल सकता है ॥ ४८ ॥

रोचते मे न वैवश्यं सर्वस्मिन्विषयेन्वहम्।
उपवासमहौषध्या स रोगः स्यात्तिरस्कृतः ॥ ४९ ॥

मुझे हमेशा हर एक विषयमें पराधीनता अच्छी नहीं लगती। उपवास रूप महौषधिसे वह रोग दूर किया जा सकता है ॥ ४९ ॥

उपवासो महाशस्त्रममोघमसिसंनिभम्।
चरमं परमं दिव्यं ग्राह्यं तच्च मयाधुना ॥ ५० ॥

उसवास बड़ा भारी शस्त्र है। तलवारके समान अमोघ शस्त्र है। मेरा वह बड़ा परन्तु अन्तिम अस्त्र होनेसे मैं उसका ग्रहण करूँगा ॥ ५० ॥

निरणैषमहं सर्वं परिणाममवेक्ष्य च।
प्रायोपासनमेवाद्य सर्वव्याधिहरं परम् ॥ ५१ ॥

सब परिणामोंका विचार करके सर्वव्याधिका नाशकरनेवाले उपवास ग्रहणका मैंने निर्णय किया है ॥ ५१ ॥

आधिव्याधिव्यथाहारि सर्वेषामुपकारि च।
नास्ति ह्येतादृशं किञ्चिन्महौषधमनुत्तमम् ॥ ५२ ॥

मानसिक रोग और शारीरिक रोगकी पीड़ाको हरनेवाले तथा सबका उपकार करनेवाले उपवासके समान कोई उत्तम महौषधि नहीं है ॥ ५२ ॥

एशियाहृदयादद्य तद्द्वारा सर्वभूतलात्।
रामराज्यस्य माहात्म्यं तिरोधत्ते क्रमादथ ॥ ५३ ॥

एशियाके हृदयसे और उसके द्वारा सर्व पृथिवीपरसे रामराज्यका माहात्म्य धीमे धीमे अस्त होता जा रहा है ॥ ५३ ॥

विश्वसिम्यहमद्यात्मा भारतस्य यदि क्वचित् ।
निलीयेत तदा भव्यं भवाशाक्षि गतांशुकम् ॥ ५४ ॥

मुझे विश्वास है कि यदि कहीं भारतका आत्मा छिप गया तो संसारकी आशाकी आँखें प्रकाशरहित हो जायँगी ॥ ५४ ॥

अस्मिन्पवित्रकार्ये नो ग्रहीतव्यान्यसंमतिः ।
ईश्वरः केवलं मेस्ति सम्मतेः सन्मतेः प्रदः ॥ ५५ ॥

इस पवित्र कार्यमें किसी अन्यकी संमति नहीं लेनी है । केवल ईश्वर ही मुझे सम्मति और सन्मति देनेवाला है ॥ ५५ ॥

मया भ्रान्तिवशादेतत्कर्मानुष्ठीयते यदि ।
शीघ्रं समापयिष्यामि भ्रान्तिस्वीकारपूर्वकम् ॥ ५६ ॥

यदि मैं भ्रमवशात् यह कार्य कर रहा हूँ तो भ्रान्तिस्वीकार करके इसे समाप्त कर दूँगा ॥ ५६ ॥

इदानीं तु मया स्पष्टं श्रूयते स्वान्तरात्मनः ।
आदेशस्तद्भवेन्नैष कदाचिदवहेलितः ॥ ५७ ॥

इस समय तो मैं स्पष्ट ही अपने अन्तरात्माका आदेश सुन रहा हूँ । उसकी अवहेलना कभी नहीं हो सकती ॥ ५७ ॥

प्रार्थये निखिलान्बन्धून्विरन्तुं तर्कसंग्रहात् ।
साहाय्यं क्रियतामत्रापरिहार्ये च कर्मणि ॥ ५८ ॥

सब भाइयोंसे मैं प्रार्थना करता हूँ कि "उपवास क्यों" इत्यादि तर्कोंसे वह अलग रहें । और इस अनिवार्य कार्यमें मेरी सहायता करें ॥ ५८ ॥

उपवासो विशुद्धश्चेद्धर्मपालनमेव सः ।
स्वयमेव फलं यस्य कालेनोपनतं भवेत् ॥ ५९ ॥

विशुद्ध उपवास धर्मपालन करनेके समान ही है। उसका फल समयपर अपने आप ही प्राप्त होगा ॥ ५९ ॥

कर्तव्यमिति बुद्ध्वैव कुर्वे प्रायोपवेशनम्।
अस्मात्परिणतिः कापि वाञ्छिता न मया भवेत् ॥ ६० ॥

"यह कर्तव्य है" ऐसा समझकर ही मैं उपवास कर रहा हूँ। इसमेंसे एक भी परिणामकी मैं इच्छा नहीं रखता ॥ ६० ॥

एतेनैव निमित्तेन यदि मे निश्चिता मृतिः।
आलिङ्गितुं न तां कोपि प्रतिबध्नातु मामिह ॥ ६१ ॥

यदि इसी निमित्तसे मेरा मृत्यु निश्चित हो तो उसे भेंटनेमें मुझे कोई विघ्न न करें ॥ ६१ ॥

भारतस्येसलामस्य हिन्दूधर्मस्य वा पुनः।
सिक्खधर्मस्य नाशेक्षापेक्षया मृत्युरिष्टदः ॥६२॥

भारत, इसलाम, हिन्दूधर्म और सिक्खधर्मका नाश मैं देखूँ उसकी अपेक्षा मृत्यु अधिक इष्ट है ॥ ६२ ॥

पाकिस्ताने न चेत्सर्वे धर्माः संप्राप्नुयुः स्वयम्।
समाधिकारितां नैतदनुकुर्यात्तु भारतम् ॥६३॥

पाकिस्तानमें सर्वधर्मोंको समानाधिकार प्राप्त नहीं है अतः भारत भी वैसा ही करे, यह तो उचित नहीं है ॥ ६३ ॥

निश्चप्रचं कृते चैवं द्वे राज्ये एव नङ्क्ष्यतः।
तन्नाशप्रेक्षणायाहं नास्मि सज्जः कथंचन ॥६४॥

यदि ऐसा किया गया तो निश्चय ही दोनों राज्य नष्ट हो जायँगे। उनके नाशको देखनेकेलिये मेरी तैयारी नहीं है ॥ ६४ ॥

प्रतिकूलविचारस्था विनिन्दिष्यन्ति चेद्दृढम्।
एतत्कार्यं भवेत्तेषां गौरवं मे दृढं हृदि ॥६५॥

मुझसे प्रतिकूल विचार रखनेवाले लोग यदि मेरे इस कार्यका घोर विरोध करेंगे तो उनके प्रति मेरे हृदयमें गौरव दृढ़ होगा ॥६५॥

आत्मजागृतये ह्येषा समेषां विद्विषामपि ।
प्रायोपवेशिका तेन सिद्धः स्यान्मे मनोरथः ॥६६॥

सब लोगोंके और शत्रुओंके भी आत्माकी जागृतिकेलिये ही तो यह उपवास मैं करने जा रहा हूँ। इससे तो मेरा मनोरथ ही सिद्ध होगा ॥ ६६ ॥

प्रेष्ठे च भारते मेद्य मालिन्यं समवर्धत ।
अपनोदाय तस्यैष शुद्धो यत्नो विधीयते ॥६७॥

मेरे परमप्रिय भारतमें आज मलिनता बढ़ गयी है। उसे ही दूर करनेकेलिये मैं यह पवित्र उपाय कर रहा हूँ ॥ ६७ ॥

प्रसादावसरो ह्येष सर्वेषां भवतां बुधाम् ।
भारतस्य सुतः कोपि विधत्ते यत्नमीदृशम् ॥६८॥

आप सब बुद्धिमानोंकेलिये तो यह आनन्दका अवसर है कि भारतका ही एक पुत्र मलिनता दूर करनेका ऐसा यत्न कर रहा है ॥ ६८ ॥

यदि तस्मिन्न सा शक्तिर्नास्ति वापि विशुद्धता ।
भारतीयधराभारं वर्धयिष्यति केवलम् ॥६९॥

यदि उस भारतपुत्रमें शक्ति और पवित्रता नहीं है तो वह भारतीय वसुधाका केवल भार ही बढ़ावेगा ॥ ६९ ॥

तस्मादेतद्धराधाम परित्यज्य गतासुकः ।
सपद्येव भवेत्तेन हितं सर्वस्य सेत्स्यति ॥७०॥

अतः यदि वह इस पृथिवीको छोड़कर शीघ्र ही मर जावे तो सबका कल्याण हो जायगा ॥ ७० ॥

उपवासकथामेतां कर्णाकर्णि निशम्य तु ।
मामनागत्य स्वे केन्द्रे नैर्मल्यं संनिधीयताम् ॥७१॥

मेरे इस उपवासकी बात कर्णपरम्परासे सुनकर मेरे पास कोई न आवें और अपने केन्द्रमें निर्मलता-पवित्रताका प्रचार करें ॥ ७१ ॥

कस्यापराधमाराध्य विषमं विदधाम्यहम् ।
नास्य प्रश्नस्य वीक्षेहमुपयोगमनागपि ॥७२॥

किसकी भूलके कारण मैं यह कठिन कार्य कर रहा हूँ, इस प्रश्नकी मैं जरा भी आवश्यकता नहीं देखता हूँ ॥ ७२ ॥

अपराधोस्ति चेत्कोपि सर्वेषामेव नः स च ।
न प्रातिस्विकरूपेण कश्चिदत्रापराध्यति ॥७३॥

यदि कोई अपराध है तो वह हम सबका ही है। व्यक्तिगत किसीका अपराध नहीं है ॥ ७३ ॥

श्वेतराज्ये गते मुस्लिम्लीगे चापि गते समाः ।
मुसल्मानप्रजा अत्र गता एवासहायताम् ॥७४॥

अंग्रेजी राज्य गया, मुस्लिमलीग गयी। आज यहाँ मुसलमान् प्रजा असहाय बन गयी है ॥ ७४ ॥

मुस्लिम्लीगप्रयासेन विभक्ता भारतक्षितिः ।
तथापि मुस्लिमा अत्र निवसन्ति निजेच्छया ॥७५॥

मुसलिमलीगके प्रयाससे ही भारतके दो टुकड़े हुए हैं। तो भी मुसलमान् यहाँ स्वेच्छासे रह रहे हैं ॥ ७५ ॥

निस्सहायस्य हीनस्य कैरप्यद्याश्रयैर्बत ।
साहाय्यकरणं धर्मः परो मेभिमतः सदा ॥ ७६ ॥

जो निस्सहाय हो, जिसे कोई भी आश्रय न हो उसकी सहायता करना यह मुझे सदा ही परमधर्म प्रतीत होता है ॥ ७६ ॥

उपवासेन सर्वेषां शुद्धिरेतेन चेप्सिता ।
हिन्दवोपि मुसल्माना अपि वैशुद्ध्यमाप्नुयुः ॥ ७७ ॥

इस उपवाससे सबकी शुद्धि इष्ट है। हिन्दु भी और मुसलमान भी पवित्रता प्राप्त करें ॥ ७७ ॥

प्रसादयितुमत्रत्यमुसल्मानान्कदापि नो ।
अहं ब्रवीमि यत्किञ्चिन्निजात्मानं सुखायितुम् ॥ ७८ ॥

यहाँके मुसलमानोंको खुश करनेके लिये मै कुछ नहीं बोलता हूँ। जो कुछ बोलता हूँ वह मेरे आत्माको प्रसन्न करनेकेलिये ॥ ७८ ॥

सिक्खाश्च हिन्दवश्चापि मुस्लिमलीगमन्वगुः ।
द्विधाभवत्ततः पूर्वं हृदयं भारतं ततः ॥ ७९ ॥

सिक्ख और हिन्दू ( हिन्दूमहासभा ) मुसलीमलीगके अनुयायी बने थे। उससे पूर्व ही भारतका हृदय दो टुकड़े हो चुका था ॥ ७९ ॥

मुसल्माना अपीहासन्नपराधक्षितिस्थिताः ।
एवं त्रयोपि संहृत्य तेपराध्यन्ननेकशः ॥ ८० ॥

मुसलमान् भी अपराधकी ही मर्यादामें स्थित थे। इस प्रकार इन तीनोंने ही अनेकबार भूल की है ॥ ८० ॥

अद्येष्टं सौहृदं किन्तु त्रयाणामपराधिनाम् ।
शक्नुवन्त्येतदाधातुमीशमाराध्य केवलम् ॥ ८१ ॥

आज इन तीनों अपराधियोंको मित्रता इष्ट है। यह लोग इस कार्यको भगवान्‌की सहायतासे ही कर सकते हैं ॥ ८१ ॥

सन्त्यनेके मुसल्माना बहवः सन्ति हिन्दवः ।
परमेशं परित्यज्य सेवन्ते दानवं हि ये ॥ ८२ ॥

बहुतसे हिन्दू और बहुतसे मुसलमान् ऐसे हैं जो ईश्वरको छोड़कर शैतानकी सेवा करते हैं ॥ ८२ ॥

विहाय नानकं सिक्खास्त्यक्त्वा चान्यान्गुरूनपि ।
अविचारेण वर्तन्ते स्वेच्छाचरितया पुनः ॥ ८३ ॥

सिक्ख लोग श्रीगुरुनानक तथा अन्य गुरुओंको भी छोड़कर विना विचारे स्वेच्छानुसार बर्ताव कर रहे हैं ॥ ८३ ॥

हित्वा वास्तविकं धर्मं धर्माम्बरपरिच्छदाः ।
यदि भूयः स्वरूपे ते तिष्ठेयुः शमवाप्नुयुः ॥ ८४ ॥

सच्चे धर्मको छोड़कर धर्मकी पिछौड़ी ओढ़नेवाले यदि फिरसे स्वरूपमें आकर स्थित हो जायँ तो उन्हें कल्याण प्राप्त हो ॥ ८४ ॥

मुसल्मानशुभायासावुपवासः प्रवर्तितः ।
ततः सर्वाधिको भारस्तेषु सम्पतितोधुना ॥ ८५ ॥

मुसलमानोंके हितकेलिये इस उपवासको मैंने शुरू किया है। अतः सबसे अधिक भार अभी उन्हीं पर है ॥ ८५ ॥

बोद्धव्यं तैः स्वयं स्वीयं विधेयं प्राप्तकालिकम् ।
बन्धुवद्वर्तितव्यं तैर्भारतीयैरिवाखिलैः ॥ ८६ ॥

उनको स्वयं यह जान लेना चाहिए कि इस समय उन्हें क्या करना है। उन्हें सभी भारतीयोंके साथ भाई-समान ही बर्ताव करना चाहिए ॥८६॥

भारतं प्रति कार्तज्ञ्यं दर्शनीयं मनस्तलात् ।
वाचाचारेण तत्सर्वं वेदनीयं भविष्यति ॥ ८७ ॥

उन्हें अन्तःकरणसे भारतके प्रति अहसानमन्द रहना चाहिए। वह ऐसे हैं या नहीं इसका पता तो उनके वचन और आचरणसे लगेगा ॥ ८७ ॥

कथयन्ति मुसल्माना वल्लभो नास्ति वल्लभः ।
अपनेयस्ततो मन्त्रिमण्डलादेव स त्विति ॥ ८८ ॥

मुसलमान् कहते हैं कि सर्दार वल्लभभाई अच्छे—प्रिय नहीं हैं। अतः उन्हें मन्त्रि-मण्डलमेंसे पृथक् कर देना चाहिये ॥ ८८ ॥

अचोद्यं चोदयन्त्येते नैवं भवितुमर्हति ।
महता केन दोषेण बहिष्कार्यो भवेदसौ ॥ ८९ ॥

वह अनुचित कहते हैं। ऐसा कभी हो नहीं सकता। किस बड़े अपराधके कारण उन्हें मन्त्रिमण्डलसे अलग किया जाय ? ॥ ८९ ॥

शासने केवलो नास्ति वल्लभो न जवाहरः।
संभूय बहुभिः सुष्ठु शासनं परिचाल्यते ॥ ९० ॥

सर्कारमें तो न केवल वल्लभभाई हैं और न केवल जवाहिरलाल हैं। बहुत से लोग मिलकर अच्छी तरहसे हुकूमत चला रहे हैं ॥ ९० ॥

अपनेतुं महाप्रज्ञं वल्लभं सर्ववल्लभम् ।
जवाहरोद्य शक्नोति न परं स करोति तत् ॥ ९१ ॥

श्रीजवाहिरलालजी श्रीवल्लभभाईको निकाल तो सकते हैं परन्तु वह नहीं निकाल रहे हैं ॥ ९१ ॥

दोषं दोषौ च दोषांश्च कोनवेक्ष्य विदां मतः।
उत्सहेत निराकर्तुं कंचनापि पदे स्थितम् ॥ ९२ ॥

दो-चारकी बात तो अलग रही एक दोष भी अगर न देखा जाय तो किसीको किसी पदसे कौन बुद्धिमान् हटा सकता है ? ॥ ९२ ॥

मुसल्माना भवन्त्वद्य शूराः प्रामाणिकास्तथा।
स्वदेशो भारतमिति मत्त्वा वाञ्छन्तु तच्छिवम् ॥ ९३ ॥

मुसलमान् आज बहादुर और ईमानदार बन जायँ। भारत अपना देश है ऐसा मानकर उसकी भलाई चाहने लगें ॥ ९३ ॥

मुस्लिम्लीगो न नो गांधिर्जवाहरो न नो सभा।
कश्चित्सहायको वोद्य परमेश्वरमृतेऽमृतम् ॥ ९४ ॥

मुस्लिमलीग, गाँधी, जवाहिरलाल कोई भी तुम्हारा सहायक नहीं है। केवल अक्षय्य परमात्मा ही सहायक है ॥ ९४ ॥

छायामाश्रित्य निखिला जगदीशस्य केवलम्।
एतस्मिन्भारते देशे यूयमद्य स्थ संस्थिताः ॥ ९५ ॥

केवल परमात्माकी छायाके भरोसे आप सब मुसलमान् आज इस भारतमें टिके हुए हैं ॥ ९५ ॥

इति मत्वा भयं छित्वा बन्धुतामित हिन्दुभिः ।
नानकस्यानुगैः पारसीकैः ख्रिस्तानुयायिभिः ॥ ९६ ॥

ऐसा समझकर हिन्दू, सिक्ख, पारसी, ईसाई सबके साथ बन्धुत्व प्राप्त करें। भय छोड़ दें ॥ ९६ ॥

परमस्मि परं मित्रं युष्माकं सततं प्रियम् ।
प्राण्यां प्राणत्सु युष्मासु म्रियेयापगतासुषु ॥ ९७ ॥

परन्तु मैं आप लोगों का सदा परम प्रिय मित्र हूँ। आपके जीनेसे जीऊँगा और मरनेसे मरूँगा ॥ ९७ ॥

न चेद्वासयितुं शक्तो मुसल्मानानिहावनौ ।
तदावश्यमिह ज्ञेयं जीवितं मे निरर्थकम् ॥ ९८ ॥

यदि मैं भारतमें मुसल्मानोंको नहीं रख सकता तो अवश्य ही जान लेना चाहिये कि मेरा जीवन व्यर्थ है ॥ ९८ ॥

स्पष्टमेव सदा वक्ति सत्यप्रेमसुधाभृतः ।
वञ्चनाचर्चनाचुञ्चुर्नास्ति सर्दारवल्लभः ॥ ९९ ॥

सर्दार वल्लभभाई सदा स्पष्ट बोलते हैं। और प्रेमरूप अमृतसे भरे हुए हैं। वञ्चना करना वह नहीं जानते हैं ॥ ९९ ॥

सर्दारवल्लभमते मुस्लिमलीगानुयायिनः ।
विश्वासपात्रतां नैते यान्ति केनापि हेतुना ॥ १०० ॥

सर्दार वल्लभभाईके मतमें मुसलिमलीगके अनुयायी मुसलमान् किसी प्रकार भी विश्वासपात्र नहीं हैं ॥ १०० ॥

मध्यरात्रावधि क्रूरा घातुका ये भवन्कथम् ।
समभूवन् क्षणेनैव सभ्यसज्जनसाधवः ॥ १०१ ॥

वह कहते हैं कि आधीरात तक जो क्रूर और घातक थे वह क्षणभरमें ही सभ्य, सज्जन और साधु कैसे बन गये ? ॥ १०१ ॥

इत्येवं तस्य हृदयं युष्मान्संदेग्धि संततम् ।
नायुक्तं क्रियते तेन न वाकारणकक्रियाम् ॥ १०२ ॥

इस प्रकारसे उनके हृदयमें तुम्हारे प्रति सदा संदेह बना रहता है। वह अयुक्त कुछ भी नहीं करते। कारण बिना कोई भी काम नहीं करते ॥ १०२ ॥

भारतीयमुसल्मानाः स्वीयैराचरणैः प्रियैः ।
तत्सन्देहमपाकर्तुं प्रयतन्तामहर्निशम् ॥ १०३ ॥

भारतके मुसलमानोंको चाहिये कि अपने प्रिय आचरण द्वारा उनके संदेहको दूर करनेका सदा प्रयत्न करें ॥ १०३ ॥

हिन्दून्सिक्खानपि क्रौर्यं त्यक्तुमभ्यर्थये भृशम् ।
एतदेव महाशौर्यं महत्येषा वदान्यता ॥ १०४ ॥

हिन्दुओं और सिक्खोंसे भी मैं प्रार्थना करता हूँ कि वह क्रूरता छोड़ दें। यही बड़ी बहादुरी है और यही बहुत बड़ी उदारता है ॥१०४॥

पाकिस्ताने भवेद्धिन्दुरेकोपि न हि जीवितः ।
सिक्खा अपि यमद्वारं प्रापिताः स्युः कुरानिभिः ॥ १०५ ॥

पाकिस्तानमें एक भी हिन्दू जीता न रहे और मुसलमान् सिक्खोंको भी मार डालें —॥ १०५ ॥

भारतीया न हि क्वापि कर्तुमर्हन्ति तादृशम् ।
भारतं स्याद्भारहितं कृते कर्मणि तादृशि ॥ १०६ ॥

परन्तु भारतके लोग ऐसा नहीं कर सकते। ऐसा कर्म करनेपर भारत भा = शोभा रहित हो जायगा ॥ १०६ ॥

वसतामत्र हिन्दूनां सिक्खानां च खिरिस्तिनाम् ।
पारसीकमुसल्मानलोकानां न व्यथा भवेत् ॥ १०७ ॥

यहाँ रहनेवाले हिन्दू, सिक्ख, ईसाई, पारसी, मुसलमान् किसीको भी पीड़ा न हो—॥ १०७ ॥

एतादृग्भारतं नूनं लोककल्याणकारकम् ।
इष्टं मम समेषां च नातोन्यत्समुपास्महे ॥ १०८ ॥

ऐसा कल्याणकारी भारत मुझे और सबको इष्ट है। इससे अतिरिक्त हम नहीं चाहते ॥ १०८ ॥

बहूनि तारपत्राणि पत्त्राणि विविधानि च ।
मत्सविधे समायान्ति मम व्रतसमाप्तये ॥१०९॥

मेरे पास बहुतसे तार और बहुतसे पत्र इस व्रतको—उपवासको छोड़ देनेके लिये आ रहे हैं ॥१०९॥

उपवासः पवित्रोयं धवित्रः सर्वपापिनाम् ।
लवित्रः सर्वपापानामन्तं न सहसा व्रजेत् ॥११०॥

यह उपवास तो पवित्र है। सर्व पापियोंको शुद्ध करनेवाला है। सब पापोंका नाश करनेवाला है। यह सहसा बन्द नहीं हो सकता ॥११०॥

ईश्वरप्रेरणातोयं संप्रवृत्तो महार्थकः ।
समाप्तिरीश्वरायत्ता शक्तिरन्या विकुण्ठिता ॥१११॥

यह उपवास ईश्वरकी प्रेरणासे प्रवृत्त हुआ है। इसका बहुत बड़ा प्रयोजन है। इसकी समाप्ति भी ईश्वराधीन ही है। अन्य शक्ति इसको बन्द करानेमें कुण्ठित है ॥ १११ ॥

अम्बालालस्य तनुजा मृदुला मृदुमानसा ।
निराकरिष्णुर्दीनानां दुःखान्यप्रतराण्यपि ॥११२॥

अम्बालाल साराभाईकी पुत्री श्रीमृदुला दीनोंके भारी दुःखको दूर करनेमें लगी हुई है ॥ ११२ ॥

सहिष्णुः पावकज्वालामालामप्यविषादतः ।
किन्तु सोढुं समर्था नो मद्विपत्तिं मनागपि ॥११३॥

वह अग्निकी ज्वालाको बिना दुःखके सह सकती है परन्तु मेरे जरा भी दुःखको सहन करनेमें असमर्थ हैं ॥ ११३ ॥

बाल्ये सत्क्रोड आसीना रममाणाभवत्परम् ।
अधुनापि न मच्छायां सा चिरं विजिहासति ॥११४॥

बाल्यावस्थामें वह मेरी गोदीमें बैठती थी, खेलती थी। अब भी वह मेरी छाया छोड़ना नहीं चाहती ॥ ११४ ॥

उपवाससमाचारं श्रुत्वा वैयग्र्यमाप्य च ।
लवपुरे वसन्ती सा पत्त्रं प्राजीहयन्मयि ॥११५॥

वह लाहोरमें रही हुई हैं। मेरे उपवासका समाचार सुनकर व्याकुल होकर मेरे पास उन्होंने पत्र लिखा है ॥११५॥

अग्र्या व्यग्रा मुसल्माना अनुयुञ्जन्ति मामिह ।
अनश्नते कृतेस्माकं कुर्मः किं गांधये वयम् ॥११६॥

वह लिखती है कि—लाहोरके प्रतिष्ठित मुसलमान् उनसे पूछ रहे हैं कि गांधीने हमारे लिये उपवास किया है तो हमलोग उनके लिये क्या करें ? ॥ ११६ ॥

आच्छिद्याद्येश्वरस्थानं राजानति महासुरः ।
तं पुनस्तस्य संस्थाने स्थापयन्त्वचिरेण ते ॥११७॥
इत्युत्तरं मया दत्तं प्रेम स्वीकुर्वता मया ।
अस्मिन् यज्ञे समारब्धे सर्व एवोपजुह्वतु ॥११८॥

मैंने उनके प्रेमको स्वीकार करके उत्तर दिया है कि ईश्वरका स्थान छीनकर शैतान आज राजा बना हुआ है। वहाँके मुसलमान् ईश्वरकी गादीपर ईश्वरको शीघ्र बैठा दें। इस शुरू किये गये यज्ञमें सबको आहुति देनी है ॥ ११७ ॥ ११८ ॥

न यवान्न तिलान्नात्र पयो न मधुसर्पिषी ।
आत्मशुद्धिं सुहृद्भावं यज्ञोयमभिकाङ्क्षति ॥११९॥

इस यज्ञमें न यवकी, न तिलकी, न दूधकी, न मधुकी, न घीकी, आवश्यकता है। यहाँ केवल आत्मशुद्धि और पवित्र मैत्री अपेक्षित है ॥ ११९ ॥

हिन्दूसिक्खमुसल्माना जहितेति परस्परम्।
विप्रवदन्त एते चेद्विसिसृक्षामि न क्रतुम् ॥१२०॥

हिन्दु, सिक्ख, मुसलमान् यदि परस्पर मारो-मारो, यही लड़ाई-झगड़ा करते रहेंगे तो मैं इस यज्ञको विसर्जन करना नहीं चाहता हूँ ॥१२०॥

संबद्धाः सन्तु चेत्सर्वे सर्वधर्मानुयायिनः।
दिव्येन प्रेमसूत्रेण सर्वत्र प्रसरेच्छिवम् ॥१२१॥

यदि सर्व धर्मोंके सभी अनुयायी दिव्य प्रेम सूत्रसे बँध जायँ तो सर्वत्र आनन्द ही आनन्द फैल जाय ॥ १२१ ॥

नेक्षिष्येहं तदा क्वापि सुरापांश्च सुरालयम्।
आहिफेनं दुराचारमसत्यं बन्धुहिंसनम् ॥१२२॥

तब मैं न तो कहीं शराबी देखूँगा ना मैखाना देखूँगा। अफीम, दुराचार, असत्य और भाईकी ही हिंसा भी नहीं देखूँगा ॥ १२२ ॥

सदाचाराः स्त्रियः सर्वाः पुमांसोपि तथाविधाः।
तदार्थी संभविष्यन्ति समस्ते पूतभारते ॥१२३॥

तब समस्त भारतमें समस्त स्त्रियाँ और सब पुरुष सदाचारसम्पन्न होंगे ॥ १२३ ॥

पाकिस्तानमुसल्माना नाचरन्न्यायसंगतम्।
हिन्दुष्विति परं तथ्यमगोपिषमहं न हि ॥१२४॥

पाकिस्तानके मुसलमानोंने हिन्दुओंके साथ न्यायसंगत आचरण नहीं किया है इस परम सत्यको मैंने छिपाया नहीं है ॥ १२४ ॥

इदानीमेव काराच्यां निर्दोषाः सिक्खबन्धवः।
निहता निर्दयत्वेन लुण्ठिता सम्पदः समाः ॥१२५॥

अभी ही तो कराचीमें निर्दोष सिक्खों को निर्दयताके साथ मार डाला गया है और उनकी सब सम्पत्ति लूट ली गयी है ॥ १२५ ॥

गुजरातेपि सम्पन्नं तथैवेति श्रुतं मया ।
बन्नूतो दुःखिता भीता आयान्तो हिन्दवो हताः ॥१२६॥

मैंने सुना है कि डरके मारे जब हिन्दू बन्नूसे यहाँ आ रहे थे तो मार्गमें गुजरात शहर ( पञ्जाब ) में भी हिन्दू मारे और लूटे गए हैं ॥ १२६ ॥

मुसल्मानान्ब्रवीम्येतद्यदि वः स्यादियं कृतिः ।
वर्तमानैव हिन्दूनामविषह्या भविष्यति ॥१२७॥

मैं मुसलमानोंसे कहता हूँ कि यदि तुम्हारा यही काम चलता रहा तो हिन्दुओंको यह असह्य हो जायगा ॥ १२७ ॥

पाकिस्तानं भवेच्छुद्धं यदि बाह्यान्तरं तदा ।
ततोप्यधिकसंशुद्धिं भारतं शीघ्रमेष्यति ॥१२८॥

यदि पाकिस्तान अन्दरसे और बाहरसे शुद्ध हो गया तो भारत तो उससे भी अधिक शुद्ध शीघ्र ही हो जायगा ॥ १२८ ॥

पाकिस्तानं पवित्रं चेत्प्रेम सन्दर्शयिष्यति ।
अत्र प्रेमप्रवाहस्तु नावरुद्धो भविष्यति ॥१२९॥

यदि पाकिस्तान पवित्र प्रेम दिखावेगा तो यहाँ प्रेमप्रवाह बन्द ही नहीं होगा ॥ १२९ ॥

हृदयानि विशोध्यातो व्यपाकृत्य च राक्षसम् ।
आसीनमीश्वरं तेषु पाकिस्तानं विलोकताम् ॥१३०॥

पाकिस्तानको चाहिए कि हृदयको पवित्र करके, शैतानको दूर करके उस हृदयमें बैठे हुए खुदाको देखें ॥ १३० ॥

प्रतिमस्जिदमत्रापि प्रतिमन्दिरमप्यथ ।
तिरोहित इवात्मासौ प्रतिदेहमुदेष्यति ॥१३१॥

यहाँ भी प्रत्येक मस्जिदमें और प्रत्येक मन्दिरमें वही परमात्मा छिप गया जैसा है। वह प्रत्येक देहमें प्रकट होगा ॥ १३१ ॥

भारतं चेद्द्विधा भूतं किमेतेन मनांसि चेत्।
शुद्धानि स्नेहपूर्णानि तत्त्वदर्शीनि वोपि नः ॥१३२॥

यदि मुसल्मानों और हिंदुओंका मन स्नेहपूर्ण और सात्त्विक विचार वाला हो तो भारतके दो टुकड़े होगए, इससे कोई क्षति नहीं है ॥१३२॥

पृथिव्यां सन्ति बहवो राजानोपि पृथक् पृथक्।
साम्राज्यान्यपि नैकानि किञ्चिन्न च्छिद्यते ततः ॥१३३॥

पृथिवीपर बहुतसे राजा अलग अलग ही तो हैं, साम्राज्य भी तो अनेक हैं परन्तु इससे कुछ बिगड़ता नहीं है ॥ १३३ ॥

बाल्यादेव दिवास्वप्नं बालान्तःकरणानुगम्।
सर्वधर्मैकतारूपमपुषं बालचेष्टया ॥१३४॥

बाल्यावस्थासे ही मैं अपने अन्तःकरणमें सर्वधर्मोंकी एकताका दिवास्वप्न देखता रहा हूँ। मेरी बालचेष्टा भी ऐसी ही रही है ॥१३४॥

लोका हि मां जडं मत्तं विक्षिप्तं बुद्धिदूरगम्।
मन्यन्ते स्वल्पसिद्ध्यर्थं त्यक्तुं बहु समुद्यतम् ॥१३५॥

लोक मुझे जड़, उन्मत्त, पागल और बेवकूफ समझते हैं। वह यह समझते हैं कि मैं बहुत थोड़ेकेलिये बहुत अधिकका त्याग कर रहा हूँ ॥ १३५ ॥

कामो मे फलितश्चेत्स्यादेतयैव तपस्यया।
उन्मत्त इव नर्त्स्यामि ग्रहग्रस्त इवापि वा ॥१३६॥

यदि इसी तपस्यासे मेरी इच्छा पूर्ण हो गयी तब तो मैं पागलके समान अथवा ग्रहोंसे पकड़े गये हुएके समान नाचूँगा ॥ १३६ ॥

लोलत्कल्लोलविक्षुब्धमृत्युसिन्धुतटे स्थितः।
अर्थितं फलितं वीक्ष्य न स्यात्काष्ठा मुदो मम ॥१३७॥

अब तो चंचल, लहरें मारता, खलबल करता मृत्यु मेरे सामने उपस्थित है। ऐसी दशामें यदि मेरा मनोरथ पूर्ण हुआ तो मेरे आनन्दकी सीमा न रहेगी ॥ १३७ ॥

सुबुद्धयः सन्मनसः स्वधर्मे चेत्स्थिता वयम्।
पारस्परिकसम्बन्धक्षेमक्षोदो न संभवेत् ॥१३८॥

यदि हमारी बुद्धि शुद्ध बनी रहे और मन भी पवित्र बना रहे तथा यदि हम धर्ममें स्थित रहें तो हमारा आपसी सम्बन्ध कभी नष्ट नहीं होगा ॥ १३८ ॥

सत्प्रेममदिरोन्मत्ता वयं यूयं तथापरे।
सर्वभीतिविरहिता नर्तिष्यामो मुदा सदा ॥१३९॥

शुद्धप्रेमरूप मदिरासे उन्मत्त होकर आप, हम और दूसरे सर्व प्रकार के भयसे छूट कर आनन्दसे नाचेंगे ॥ १३९ ॥

योपि कोपि समाजोस्ति व्यक्तीनां स समुच्चयः।
व्यक्तिशुद्धौ समाजस्य शुद्धिरस्ति विनिश्चिता ॥१४०॥

कोई भी समाज व्यक्तियोंसे ही बनता है। यदि व्यक्ति शुद्ध हो तो समाजकी शुद्धिमें कोई सन्देह ही नहीं है ॥ १४० ॥

एकमेवात्र नैकत्वं जनयद्दृश्यतेनिशम्।
न चैकं चेदनेकानि न स्युस्तेन च शून्यता ॥१४१॥

हम रोज देखते हैं कि एक ही अनेकको पैदा करता है। यदि एक न हो तो अनेक भी नहीं होंगे। परिणाम शून्यतामें आवेगा ॥ १४१ ॥

अन्ये किमत्र कुर्वन्ति यूयं तन्नैव पश्यत।
आत्मानमेव वीक्षध्वं श्रेयस्तेनाधिगच्छत ॥१४२॥

दूसरे क्या कर रहे हैं, इसे आप न देखें। केवल आत्मनिरीक्षण आप करें। उसीसे कल्याण प्राप्त होगा ॥ १४२ ॥

चिन्तां जहित देहस्य मम क्षीणबलस्य च ।
मृत्युमेव विजानीत शरीरस्यान्तिमां दशाम् ॥१४३॥

मेरे इस निर्बल शरीरकी चिन्ता आप लोग छोड़ दें। शरीरकी अन्तिम दशा तो मृत्यु है ही ॥ १४३ ॥

सर्वं एव गमिष्यन्ति मृत्युद्वारमपावृतम् ।
यथा सनातनेनैव कर्मणा च सतासता ॥१४४॥

मृत्युका द्वार खुला हुआ है। सत्कर्म और असत्कर्मके द्वारा सभी मृत्युद्वारमें प्रवेश करेंगे ॥ १४४ ॥

देवो वा दानवो वापि नरोपि च नरेश्वरः ।
हिंसकोहिंसको वापि सर्वेषां शरणं मृतिः ॥१४५॥

देवता हो, दानव हो, नर हो, नरेन्द्र हो, हिंसक हो, अथवा अहिंसक हो, सबको शरण देनेवाला तो मृत्यु ही है ॥ १४५ ॥

जायमानो नरः पूर्वं मृत्युना समवेक्षितः ।
अङ्कितश्चापि वर्षाङ्कैर्दिनाङ्कैर्वा विधानतः ॥१४६॥

जब मनुष्य पैदा होता है तब सबसे पहिले मृत्यु ही उसे देखता है। मृत्यु ही सावधान बनकर उसपर छाप लगाता है कि वह इतने वर्ष और इतने दिन जीवेगा ॥ १४६ ॥

निश्चिते दिवसे पुण्ये निश्चितेपि च वत्सरे ।
ऋतौ विनिश्चिते चापि निश्चितो मरणागमः ॥१४७॥

निश्चित वर्षमें, निश्चित ऋतुमें, निश्चित पवित्र दिनमें निश्चित ही मृत्युका आगमन होता है ॥ १४७ ॥

कालादिकं विनिश्चित्य पूर्वस्मादागमिष्यतः ।
मृत्योर्हस्तान्न कस्यापि संभवेद्धि विमोक्षणम् ॥१४८॥

पहलेसे ही समय निश्चित करके आनेवाले मृत्युके हाथसे किसीका छुटकारा संभव नहीं है ॥ १४८ ॥

मृत्युरेवान्तिमं मित्रं मृत्युदुःखविनाशकः ।
सत्कार्यश्च ततो मृत्युर्व्यर्थमेव ततो भयम् ॥१४९॥

मृत्यु ही अन्तिम मित्र है। वही दुःखका नाश करनेवाला है। अतः उसका सदा सत्कार करना चाहिये। उससे डरना व्यर्थ है ॥ १४९ ॥

तित्यक्ष्यन्ति यदा सर्वे बान्धवा अन्तिमे क्षणे ।
सर्वदुःखविमोकाय मृत्युरेव सहायकः ॥१५०॥

अन्तिम क्षणमें जब सभी कुटुम्बी जन छोड़ देनेकी इच्छा करते हैं, उस समय सर्वदुःखोंमेंसे छुड़ानेकेलिये मृत्यु ही तो सहायक है ॥ १५० ॥

आह्वातुं मृत्युमेवायं नोपवासो निषेवितः ।
आह्वानमन्तरेणैव स आगच्छति देहिनः ॥१५१॥

मृत्युको बुलानेकेलिये ही यह उपवास नहीं है। वह तो विना बुलाये ही देहधारी के पास आता है ॥ १५१ ॥

ततः सर्वैः स्वकर्तव्यं ध्यायं ध्यायं पुनः पुनः ।
उपास्यं श्रद्धया नित्यं परया धर्मबन्धुभिः ॥१५२॥

अतः धर्मके साथ सम्बन्ध रखनेवाले सभीको चाहिये कि वह अपने अपने कर्तव्यका फिर-फिर, विचार-विचार करके महती श्रद्धाके साथ, पालन करें ॥ १५२ ॥

ममोपवासश्रवणमात्रेणैवाविलम्बकम् ।
भारतीयेन हि सता शासनेन कृतं बहु ॥१५३॥

मेरे उपवासकी बात सुनकर ही उत्तम भारतसर्कारने बहुत कुछ किया ॥ १५३ ॥

कोटयः पञ्चपञ्चाशद्रूप्यकाणां च धर्मतः ।
प्रदेया भारतेनासन्पाकिस्तानाय धर्मिणा ॥१५४॥

पंचावन करोड़ रुपये भारतको पाकिस्तानके देने थे ॥ १५४ ॥

काश्मीरस्य विवादोसौ न प्रयात्यन्तिमां गतिम् ।
यावत्तावन्न ता देयाः पाकायेति विनिश्चितिः ॥१५५॥

सर्कारने यह निश्चय किया था कि जबतक कश्मीरका झगड़ा खत्म नहीं होता तबतक वह रुपये पाकिस्तानको न दिये जायँ ॥ १५५ ॥

तथापि निर्णयं स्वीयं शासनं पर्यवर्तयत् ।
देयं तस्मा अदात्तेन गौरवं प्रापयन्निजम् ॥१५६॥

तो भी सर्कारने अपना निर्णय बदल दिया । पाकिस्तानको जो देना था भारतसर्कारने दे दिया । उसकी प्रतिष्ठा बढ़ गयी है ॥ १५६ ॥

साधारणी कृतिर्नेयं मन्तव्या धर्मवेदिभिः ।
भारतादितरैः कैश्चित्स्यात्कृता स्यान्नवापि सा ॥१५७॥

इस कार्यको साधारण कार्य नहीं मानना चाहिए । भारतसे अतिरिक्त किसीने यह काम शायद नहीं ही किया हो ॥ १५७ ॥

एवं सर्वैर्मुसल्मानैर्हिन्दुभिर्नानकैरपि ।
इतिकर्तव्यताबोधे सावधानैर्हि भूयताम् ॥१५८॥

जिस प्रकार भारतसर्कारने अपना कर्तव्य पालन किया है वैसे ही अपना कर्तव्य समझनेमें हिन्दु, मुसलमान्, सिक्ख सबको सावधान बनना चाहिए ॥ १५८ ॥

आ काश्मीरादा च कन्याकुमार्या आ कराचितः ।
आ च डिब्रूगढात्सर्वैः प्रशस्यं हिन्दशासनम् ॥१५९॥

काश्मीरसे लेकर, कन्याकुमारीसे लेकर, कराचीसे लेकर और डिब्रूगढ़से लेकर सर्वत्र सबकी प्रशंसा का पात्र भारतसर्कार बनी है ॥ १५९ ॥

मुस्लमानप्रतोषाय भवति स्म न साधितम् ।
अद्वितीयमिदं कर्म शासनेनात्र नः खलु ॥१६०॥

यह निश्चय ही समझना चाहिये कि यह अद्वितीय कार्य हमारी सर्कारने मुसलमानोंको खुश करनेकेलिए नहीं ही किया है ॥ १६० ॥

शासनं प्रतिनिधत्ते महतीं जनतां च यत् ।
केवलं स्वप्रतोषाय कार्यमुद्धमिदं मतम् ॥१६१॥

जो सर्कार एक बड़ी भारी जनताका प्रतिनिधित्व करती है उसने केवल अपने सन्तोषकेलिये यह प्रशस्त कार्य किया है ॥ १६१ ॥

उपमा का भवेल्लोकेनुपमस्यास्य कर्मणः ।
भारतं भारतमिव नातिशेते किमप्यदः ॥१६२॥

इस अनुपम कार्यकी जगत्में कोई उपमा नहीं है। भारत तो भारत ही है। इसे कोई नीचा नहीं दिखा सकता ॥ १६२ ॥

वाचं मर्माविधं क्रूरां प्रब्रुवाणमहर्दिवम् ।
विराध्यत्सततं पाकं कः क्षाम्येद्भारतं विना ॥१६३॥

रातदिन मर्मभेद करनेवाले, क्रूर वचन बोलनेवाले और सदा विरोध करनेवाले पाकिस्तानको भारतके विना दूसरा कौन सह सकता है ? ॥ १६३ ॥

न न्यञ्चं शासनमहो किञ्चिदन्यद्व्रजेदिदम् ।
धन्य भारत धन्यं त्वं धन्य शासन शासन ॥१६४॥

कोई छोटी-मोटी सर्कार यह कार्य नहीं कर सकती। भारत तू धन्य है ! भारतसर्कार तू धन्य है ॥ १६४ ॥

तद्यद्यन्वसुसूर्षिष्यद्विधानानि निजानि ह ।
नापारयिष्यत्तत्कर्तुं यद्व्यधित्सत शासनम् ॥ १६५ ॥

सर्कार यदि अपने विधानोंका अनुसरण करना चाहती तो वह कार्य न कर सकती जो करना चाहती थी ॥ १६५ ॥

अतिशेते विधानानि न्यायः सर्वोत्तमः सदा ।
धर्मतत्त्वविदः सर्वे जनाः संविद्रते त्विदम् ॥ १६६ ॥

सर्वोत्तम न्याय हमेशा विधानसे बढ़ जाता है इस वस्तुको सभी धर्मतत्त्ववेत्ता जानते हैं ॥ १६६ ॥

मेकडानल्ड इत्याख्यः श्वेताङ्गोपीत्थमाचरत् ।
मत्कृतेनोपवासेन यरोडाबन्दिसद्मनि ।। १६७ ।।

जब मैंने यरोडाजेलमें उपवास किया था उस समय श्रीमेकडानल्डने भी न्यायको ही मुख्य पद दिया था ।। १६७ ।।

लोकोत्तरेण कार्येण शासनेन कृतेन तु ।
उपवासः परित्यज्य इत्यपरे वदन्ति माम् ।। १६८ ।।

दूसरे लोग कहते हैं कि सर्कारने यह लोकोत्तर कार्य किया है इसकेलिये भी तो मुझे उपवास छोड़ देना चाहिये ।। १६८ ।।

श्रूयते न मया किन्तु तादृशो ध्वनिरान्तरः ।
सुहृदां सम्प्रसादाय न जागर्ति ततः स्पृहा ।। १६९ ।।

परन्तु चूँकि मेरे अन्तरसे ऐसा कोई शब्द नहीं सुनायी पड़ रहा है अतः मेरे मित्रोंको प्रसन्न करनेकी इच्छा नहीं हो रही है ।। १६९ ।।

उपवासो भवेत्त्याज्यो भवेयुः सर्व एव चेत् ।
शूरा निश्शङ्कमनसो मुसल्मानाश्च हिन्दवः ।। १७० ।।

यह उपवास छूट सकता है यदि सब मुसलमान् और हिन्दू बहादुर बनें और मनमेंसे परस्परकी शङ्का छोड़ दें ।। १७० ।।

आशङ्कन्ते न विक्रान्ताः शङ्कनीयानरीनपि ।
मन्यन्ते ते ह्यविश्वासं स्वमर्यादाविघातकम् ।। १७१ ।।

बहादुर लोग, जिसकी शङ्का करनी चाहिये उन शत्रुओंसे भी शङ्का नहीं करते । वह अविश्वासको अपनी मर्यादाका विघातक मानते हैं ।। १७१ ।।

अस्माकं शासनेनाद्य महोदारेण धीमता ।
न्याय्यस्याचरितस्यास्य पाकोत्तरमपेक्ष्यते ।। १७२ ।।

हमारी बुद्धिमान् और उदार सर्कारने जो यह न्याय्य आचरण किया है, पाकिस्तानसे उसके उत्तरकी अपेक्षा है ।। १७२ ।।

यदीच्छा धर्मदेवस्य सेवनायोदिता भवेत्।
पन्थानः सन्ति बह्वः पाकिस्तानगतेः कृते ॥ १७३ ॥

यदि धर्मपालन करनेकी इच्छा पैदा हो तो पाकिस्तानको गति करनेकेलिये बहुत मार्ग हैं ॥ १७३ ॥

आध्यात्मिक उपवास आशास्ते शुद्धतां हृदः।
निवृत्ते कारणे तस्या नैव सापि निवर्तते ॥ १७४ ॥

आध्यात्मिक उपवास हृदयकी शुद्धिकी आशा रखता है। यदि शुद्धि हो जाय तो उपवासरूप कारणके निवृत्त होनेपर भी वह शुद्धि बनी रहेगी ॥ १७४ ॥

सुधया लेपिते गेह अतिथावागमिष्यति।
आगत्य च गते तस्मिन्सुधा सा न निवर्तते ॥ १७५ ॥

अतिथि आनेवाला होता है तब घरको चूनेसे धोते हैं। अतिथि आकर चला गया हो तो भी वह चूना तो ज्योंका त्यों ही रहता है ॥१७५॥

पाकिस्तानप्रजाः सर्वाः पाकिस्तानाधिनायकाः।
अस्वीकृत्यापराधान्नो तं देशं रक्षितुं क्षमाः ॥ १७६ ॥

पाकिस्तानकी सारी प्रजा और उसके बड़े नेता अपराधोंको स्वीकार किये विना उस देशको बचा नहीं सकते ॥ १७६ ॥

मृत्युशय्यां स्पृशन्नाहं किञ्चित्कोपेन विब्रुवे।
सत्यं व्यवदिषि प्रेष्ठं मह्यं कोपि न कुप्यतु ॥ १७७ ॥

मैं तो मरणशय्यामें पड़ा हूँ। क्रोधसे कुछ भी नहीं कह रहा हूँ। अपने परमप्रिय सत्यका ही मैंने उच्चारण किया है। मुझपर कोई क्रोध न करें ॥ १७७ ॥

नैर्बल्याद्वा भयाद्वापि परस्मादपि कारणात्।
विवृणुयां मनोभावं नो तदासत्यवागहम् ॥ १७८ ॥

निर्बलतासे अथवा भयसे अथवा दूसरे कारणसे यदि मैं अपने मनके भावको प्रकट न करूँ तो मैं असत्यवादी बनूँगा ॥ १७८ ॥

राधितेष्वपराधेषु पाकिस्तानेन सर्वथा ।
विदुषां धार्मिकाणां च वैमत्यं नास्ति किंचन ॥ १७९ ॥

पाकिस्तानने जो अपराध किये हैं उनके विषयमें धार्मिकों और विद्वानोंके दो मत हैं ही नहीं ॥ १७९ ॥

यदि स्यादत्र मे भ्रान्तिर्बोधिता प्रतिपक्षिभिः ।
मृदुक्ताक्षेपवचनं प्रत्याख्यातं मया भवेत् ॥ १८० ॥

यदि मेरे विपक्षी मेरी भूल इस विषयमें बतावेंगे तो मैं अपने इस आक्षेप वचनका खण्डन कर दूँगा ॥ १८०॥

खिन्नया मनसो वृत्त्या सूनुस्तस्य महात्मनः ।
पत्रद्वारेण चित्तस्थमाशयं व्यानगीदृशम् ॥१८१॥

महात्माजीके ही पुत्र श्री० देवदास गांधीने खिन्न मनोवृत्तिसे पत्र द्वारा अपने हृदयके भावको इस प्रकार व्यक्त किया ॥१८१॥

योग्योयमथवायोग्य उपवासो भवेदिति ।
वक्तव्यमत्र बह्वासीन्ममैतमविजानतः ॥१८२॥

मुझे तो इस उपवासका ज्ञान ही नहीं था। यह उपवास योग्य है अथवा अयोग्य, इस विषयमें मुझे बहुत कुछ कहना था ॥१८२॥

मन्ये तत्र भवन्तं हि समाक्राम्यदधीरता ।
तत एवाविलम्बेन निरणायि व्रतं महत् ॥१८३॥

मैं समझता हूँ कि आप अधीर हो गये थे, इसी लिये शीघ्र ही इतने बड़े उपवासका निर्णय कर लिया ॥१८३॥

न शक्नोति भवाञ्ज्ञातुं दिल्ल्यां धैर्येण धीमता ।
किं किं साधितमत्रत्यलोकानां संहितं हितम् ॥१८४॥

आप नहीं जान सकते कि आपने धैर्यसे ही दिल्लीवालोंका क्या क्या हित सिद्ध किया है ? ॥१८४॥

भवच्छ्रमेण बहवो बन्धवो जीविताः स्थिताः ।
बहवश्च गतप्राणा इवासञ्जीविता अपि ॥१८५॥

आपके ही परिश्रमसे बहुतसे भाई जीते रह गये । बहुत तो ऐसे थे कि जीते हुए भी मरेके समान थे ॥१८५॥

ततो जीवन्भवानत्र कर्तुं शक्नोति यन्न तत् ।
प्राणानामाहुतिं दत्त्वैतस्मिन्कलहपावके ॥१८६॥

अतः आप जीकर जो कुछ यहाँ कर सकते हैं, इस कलहाग्निमें अपने प्राणोंको होमकर उसे नहीं कर सकते ॥१८६॥

एतेनैव विचारेण दृढेन कृपयाशु च ।
प्रायोपवेशनस्यान्तं स भवान्कर्तुमर्हति ॥१८७॥

इसी दृढ़ विचारके साथ आप कृपाकर इस उपवासको समाप्त कर सकते हैं ॥ १८७ ॥

यतिराजः क्षमाशीलो दत्तवानिदमुत्तरम् ।
न मया व्ययितं धैर्यं नापि शैघ्र्यं समाचरम् ॥१८८॥

क्षमावान् महात्माजीने यह उत्तर दिया, न तो मैंने धैर्य छोड़ा है और न शीघ्रता की है ॥ १८८ ॥

यावद्दिनानि चत्वारि शान्तेन मनसा मया ।
उपवासं पुरस्कृत्य बहुधैव विचारितम् ॥१८९॥

चार दिनों तक मैंने शान्तमनसे उपवासके विषयमें बहुत प्रकारसे विचार किया है ॥ १८९ ॥

पुत्रोसि तात योग्योसि हितोसि च बुधोसि च ।
चिन्ता स्वाभाविकी तस्मादाक्राम्यद्धृदयं तव ॥१९०॥

भाई, तू पुत्र है, योग्य है, हितैषी भी है, समझदार भी है। अतः तेरे हृदयमें चिन्ताका होना स्वाभाविक है ॥ १९० ॥

परां काष्ठां गते धैर्ये मम जातमुपोषणम्।
हन्त्युद्देश्यं न तद्धैर्यं मूर्खता सा विगण्यते ॥१९१॥

मेरा धैर्य पराकाष्ठाको जब पहुँचा तब वह उपवासके रूपमें आ गया। जो धैर्य उद्देश्यको ही नष्ट करे वह धैर्य नहीं, मूर्खता है ॥ १९१ ॥

दिल्ल्यां मम निवासस्य परिणामोभवद्यदि।
शुभस्तत्र महत्त्वं मे नास्ति श्रीशस्य तद्यशः ॥१९२॥

दिल्लीमें मेरे रहनेसे यदि शुभ परिणाम हुआ है तो उसमें मेरा महत्त्व नहीं है। वह यश तो भगवान्‌को ही है ॥ १९२ ॥

मम श्रमेण बहवो रक्षिता मानवा यदि।
तन्मूल्येधिकृतस्तस्य परमात्मा न लौकिकाः ॥१९३॥

यदि मेरे श्रमसे मनुष्योंकी प्राणरक्षा हुई है तो उसका मूल्य तो परमात्मा ही कर सकता है, लोग नहीं ॥ १९३ ॥

सेप्टेम्बरात्समारभ्य येनाद्यावधि रक्षितम्।
धैर्यं तस्य च तद्धानिं जाड्यमेव विवृण्वतः ॥१९४॥

जिसने सितम्बर माससे आजतक धीरज रखा उसके धीरजका नाश करना केवल जड़ता है ॥ १९४ ॥

व्यावहारिकपद्धत्या पुरुषार्थो हतो मम।
तदा क्रोडे परेशस्य शिरः संस्थापितं मया ॥१९५॥

व्यावहारिक रीतिसे जब मेरा पुरुषार्थ नष्ट हो गया तब मैंने परमात्मा-की गोदमें अपना शिर रखा है ॥ १९५ ॥

जन्मनो मरणाच्चापि यावज्जन्तुर्न मुच्यते।
जीवन्निव मृतोपि स्यात्कार्यसिद्ध्या असंशयम् ॥१९६॥

जब जीव जन्म और मरणसे छूट नहीं सकता है तो वह जैसे जीता हुआ कार्य सिद्ध करता है वैसे ही मरकर भी कर सकता है। इसमें सन्देह नहीं ॥ १९६ ॥

उपवासस्य तात्पर्यं रामस्य शरणागतिः।
गतस्य शरणे तस्य का च भीर्वेदनापि का ॥१९७॥

भगवान्की शरणागतिका स्वीकार करना ही उपवासका तात्पर्यार्थ है। रामकी शरणमें गये हुएको भय क्या? और वेदना क्या? ॥ १९७ ॥

यदि तस्य भवेदिच्छा वर्जयिष्यति मां व्रतात्।
जीवयेदथवा हन्याच्छ्रेय एव भविष्यति ॥१९८॥

यदि उसकी इच्छा होगी तो मेरा उपवास छोड़ावेगा। वह जिलावे अथवा मार डाले दोनों दशाओंमें कल्याण ही होगा ॥ १९८ ॥

श्रीरामं प्रार्थये तस्माद्व्रतं निश्चलतां व्रजेत्।
जिजीविषोपवासं मे वर्जयेन्न च तर्जयेत् ॥१९९॥

मैं रामसे प्रार्थना करता हूँ कि यह व्रत निश्चल रहे। जीनेकी इच्छा मेरे उपवासको न बन्द कर सके न विघ्नयुक्त कर सके ॥ १९९ ॥

सर्वसङ्कटनिवारणक्षमेषूपवासदहनेषु स क्रमात्।
पादचारमतनोद्भयातिगो निश्चचाल न चचाल निश्चयात् ॥२००॥

सर्वसङ्कटोंको दूर करनेवाले उपवासरूप अग्निमें श्रीमहात्माजीने अपना चरणार्पण कर दिया। वह भयके पार जा चुके थे। वह निश्चल थे अतः अपने निश्चयसे विचलित नहीं हुए ॥ २०० ॥

वागामृतेन परितोष्य यतिक्षमाभृत्।
सर्वानुपस्थितजनान्विधिवत्सदन्तम्।
प्रायोपवेशनमुपासितुमाशु तस्मा-
त्स्थानाज्जगाम निजवासभुवं महात्मा ॥ २०१ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
चतुर्दशः सर्गः

श्रीयतिराज महात्माजी अपने वचनामृतसे सभी उपस्थित लोगोंको सन्तुष्ट करके उपवासकेलिये उस स्थानसे अपने निवासस्थानपर चले गये ॥ २०१ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
चतुर्दशः सर्गः ।



# पञ्चदशः सर्गः

प्रतिवर्त्म गृहीतवेणवः प्रतिरथ्यं छुरिकासिसज्जिताः ।
यवनासुनिषूदनैषा यतिराजं तुतुदुश्च हिन्दवः ॥१॥

प्रत्येक रास्ते पर लाठी लिए हुए, प्रत्येक गलीमें छूरी और तलवारसे सज्ज, मुसलमानोंको मारने की इच्छावाले हिन्दुओंने महात्माजीको दुःखित कर दिया ! ॥ १ ॥

क्षणमाकुलमानसो भवन्नभिसंचिन्त्य च हस्तिनापुरे ।
प्रलयं निखिलार्य्यसन्मतेरवदद्योगिवरस्तदेति सः ॥२॥

क्षणभर व्याकुल होकर, और दिल्लीमें हिन्दुओंकी सुबुद्धिका प्रलय विचारकर योगिराज श्री महात्माजी बोले—॥ २ ॥

यदि भारतमात्मनो यशो धवलं दिक्षु ततं सनातनम् ।
न हि रक्षितुमस्ति शक्तिमत्पतनं तस्य निरर्गलं भवेत् ॥३॥

यदि भारत सारी दिशाओंमें फैले हुए अपने निर्मल सनातन यशको नहीं बचा सकता है तो इसका पतन अनिवार्य है ॥ ३ ॥

बलवत्कृपयानुसंहितं गतहिंसारुचिकं हि भारतम् ।
सकलस्य तदेशियाधराशकलस्यापि च नेतृतां वहेत् ॥४॥

कृपायुक्त और हिंसामेंसे रुचि हटाकर बलवान् भारत ही सम्पूर्ण एशिया खण्डका नेता बन सकता है ॥ ४ ॥

यदि भूरियमव्यवस्थिता विवशान्वेति च पश्चिमप्रजाः ।
न सहेत तदीयविक्रमं कथमप्युज्झितसत्पथक्रमा ॥५॥

यदि यह देश अव्यवस्थित बने और लाचार होकर पश्चिमकी प्रजाओंका अनुगमन करे तो सत्यके मार्गसे विचलित होकर पश्चिमके आक्रमणको नहीं सह सकेगा ॥ ५ ॥

अपगच्छति देहली शनैरपकर्मव्यसनेन बाधिता ।
भगवत्प्रतिकूलतावशाद्वशतोस्माकमिति प्रतीयते ॥६॥

कुकर्मसे पीड़ित होकर दिल्ली अब धीरे धीरे, ईश्वर हमारे प्रतिकूल है इसलिये, हमारे हाथमेंसे निकलती जा रही है, ऐसा मालूम होता है ॥ ६ ॥

यदि भारतमेतु दुर्दशां सकलाशा मम नाशमृच्छतु ।
क इहास्ति ममाद्य जीवितुं वद हेतुः सबलोप्यबाधितः ॥७॥

यदि भारतकी दुर्दशा हो और मेरी आशा नष्ट हो जावे तो, कहो, यहाँ मेरे जीनेके लिये कौन सा अबाधित और सबल कारण है ॥७॥

स्वपथाच्च्युतिमाप्नुवत्यलं निजदेशेद्य कथं निषेव्यताम् ।
जगतः शमसत्कथाप्रथाबलिताशा विबुधैः परैरपि ॥८॥

अपने इस देशके पथभ्रष्ट होनेपर जगत् में शान्तिकी कथाके प्रचारकी कौनसी बलवती आशा, मुझे तो नहीं, परन्तु आप विद्वानोंको भी कैसे हो सकती है ? ॥ ८ ॥

यदि नैव शहीदजाकिरौ भ्रमितुं स्वेच्छमिहाद्य शक्नुतः ।
अधिरथ्यमपास्तसाध्वसावधिका कालभविष्यतित्रपा ॥९॥

यहाँ पर यदि आज गलियोंमें डाक्टर ज़ाकिर हुसेन तथा शहीद सुहरावर्दी स्वेच्छासे निर्भयताके साथ नहीं घूम सकते हैं तो इससे अधिक लज्जा और क्या हो सकती है ? ॥ ९ ॥

स उपेक्ष्य वितर्कभूमिकां हृदयाग्निपित्तजपापतापितः ।
सहसा समकल्पत प्रभुर्व्रतिमूर्धन्य उपोषणव्रतम् ॥१०॥

तर्क-वितर्कोंकी उपेक्षा करके हृदयकी आगके तापसे तपाये गये हुए श्रीमहात्माजीने उपवास व्रतका संकल्प कर लिया ॥ १० ॥

गजवेदनवैकवत्सरे जनवर्याश्च दिने त्रयोदशे ।
स उपाक्रमतोपवासकं यतिवर्यो जनताहितेच्छया ॥११॥

श्रीमहात्माजीने ता० १३–१–१९४८ को जनताके हितकी इच्छासे उपवासका आरम्भ किया ॥ ११ ॥

उपवासकथा गृहे गृहे नगरे वापि समस्तभूतले ।
सपदि प्रतता विवेकिनां हृदये दुःखनिधिस्तरङ्गितः ॥१२॥

दिल्ली शहरमें घर-घर और सारी दुनियाँमें भी उपवासकी बात झट फैल गयी । विवेकियोंके हृदयमें दुःखसागर उमड़ पड़ा ॥ १२ ॥

नयनाश्रुजलेन संगता हृदयावेदकतारपत्रिकाः ।
चतसृभ्य उपागता यतेः सविधे दिग्भ्य उदारचेतसः ॥१३॥

आँसुओंके जलसे भरे हुए, हृदयके भावको बतानेवाले अनेक तार चारों ओरसे श्रीमहात्माजीके पास आने लगे । यद्यपि तारमें आँसू नहीं थे परन्तु उस स्थितिकी सूचना उन तारोंसे मिलती थी ॥ १३ ॥

समदिक्षदयं महामुनिः परमेशाङ्घ्रिरजोनुकम्पितः ।
व्रतमेतदुपासितुं क्षमः कृपया श्रीजगदीशपादयोः ॥१४॥

श्रीमहात्माजीने संदेश दिया कि, परमेश्वरके चरणकमलोंकी कृपासे इस व्रतको—उपवासको करनेमें मैं समर्थ हूँ ॥१४॥

मरणं न ममास्ति दुःखदं शरणं तत्परमं विवेकिनाम् ।
मम जीवितहेतवे मनागपि चिन्ता न निषेव्यतां बुधैः ॥१५॥

मुझे मरण दुःखद प्रतीत नहीं होता । वह तो विवेकियोंकेलिये सर्वोत्तम शरण है । बुद्धिमानोंको मेरे जीवनकी थोड़ी भी चिन्ता नहीं करनी चाहिये ॥ १५ ॥

मरणं भविनां च जीवितं परमेशस्य करे स्थिते सदा।
परवानहमस्मि सर्वथा सततं तस्य दयालुचेतसः ॥१६॥

संसारी लोगों—जीवोंका मरना और जीना दोनों ही परमेश्वरके हाथकी बात है। मैं उसी दयालु परमात्माकी अधीनतामें अपनेको मानता हूँ ॥ १६ ॥

परलोकगतं करोतु मामथवा जीवयतु श्रियः पतिः।
हृदये मम नास्ति कामना मरणायापि च जीविताय वा ॥१७॥

श्रीपतिभगवान् मुझे मारें अथवा जिलावें। मेरे हृदयमें मरने और जीनेकी कोई इच्छा नहीं है ॥ १७ ॥

सुखिनो मनुजा हि भारता यदि मे स्याद्व्रतधारणादथ।
सफलं मम जीवितं भवेद्व्रतमेतच्च लभेत सत्फलम् ॥१८॥

यदि भारतकी प्रजा मेरे इस व्रतसे सुखी रहे तो मेरा जीवन सफल होगा और इस उपवासका भी उत्तम फल मिलेगा ॥ ८ ॥

उपवासनिरोधनाय चेत्क्षणिकं किञ्चिदनुष्ठितं भवेत्।
हृदये न भवेत्पवित्रता न हि लाभो भवितात्पकोपि तत् ॥१९॥

यदि मेरे उपवासको रोकनेकेलिये यहाँ कुछ ऐसी योजना की जाय जो क्षणिक हो तो उससे हृदयमें पवित्रता नहीं आवेगी थोड़ा भी लाभ न होगा ॥ १९ ॥

मम मृत्युनिवारणाय नो करणीयं किमपीह कैश्चन।
यदि हिन्दुकुरानिबन्धुता स्थिरतां नैति ततो मृतिर्वरम् ॥२०॥

मेरे मृत्युको रोकनेकेलिये किसीको कुछ नहीं करना चाहिये। यदि हिन्दुओं और मुसलमानोंमें भ्रातृभाव स्थिर न हुआ तो मेरा मर जाना ही श्रेष्ठ है ॥ २० ॥

न दया भवतामपेक्षिता परमेशोस्ति सहायको मम।
सकलाः सुहृदो भवन्तु चेदबलाः केवलमेष रक्षकः ॥२१॥

मुझे आपकी दया अपेक्षित नहीं है। परमात्मा ही मेरा सहायक है। जब सब मित्र निर्बल बन जाते हैं तब केवल वही रक्षक होता है ॥२१॥

**भवतां हृदि जाग्रतीह चेन्मृदुलावृत्तिपरम्परास्तदा।**
**परमेश्वरसाक्षिकं दृढं हृदये तिष्ठतु वोद्य बन्धुता ॥२२॥**

यदि आपके हृदयमें कोमल वृत्तियाँ जाग उठी हों तो परमेश्वरको साक्षी बनाकर आप सब भाई-भाई बन जायँ ॥२२॥

**सुहृदो मम सन्ति तादृशा बहवो वीक्ष्य सुदारुणं व्रतम्।**
**हृदये परिपीडिता भृशं विकलाः सन्ति निराशतां गताः ॥२३॥**

मेरे बहुतसे ऐसे मित्र हैं कि जो भयङ्कर व्रतको देखकर हृदयमें अत्यन्त व्याकुल हैं और निराश बन चुके हैं ॥२३॥

**बहुभिश्च वसुन्धराधिपैर्बहुभिर्वा करुणान्वितैः परैः।**
**अथ पाकभुवि स्थितैरपि प्रहिताः पत्रपरम्पराः पराः ॥२४॥**

बहुतसे राजाओंने और बहुतसे दयालु पाकिस्तानी भाइयोंने मेरे पास बहुतसे पत्र भेजे हैं ॥२४॥

**व्रतमेतदकामयन्त ते सफलं त्याज्यमिहाविलम्बितम्।**
**हृदये बहु धारयाम्यहं सकलेभ्यः सुजनेभ्य आदरात् ॥२५॥**

उन लोगोंने मेरे इस उपवासको सफलतापूर्वक छोड़ देनेकी इच्छा प्रकट की है। मैं बहुत आदरके साथ उन सभी सज्जनोंका आभार मानता हूँ ॥२५॥

**भगवन्तमहं समाश्रितो व्रतमेतत्परिगृह्य दुस्त्यजम्।**
**मरणान्तिकमेत्य शान्तिदं गतवाँस्तस्य महाभुजाश्रयम् ॥२६॥**

इस न छोड़ने योग्य व्रतका स्वीकार करके मैं भगवान्की शरणमें पड़ा हूँ। शान्ति देनेवाले मृत्युके पास पहुँचकर मैं भगवान्के महाभुजोंके आश्रयमें जा पहुँचा हूँ ॥२६॥

न कदापि जनेन केनचिद्रिपुता कैश्चन सेव्यतामिह।
न कदाचन मुस्लिमैः सह प्रवसद्भिर्जगतीतले समम् ॥२७॥

कोई आदमी किसी से शत्रुता न करे। इस पृथिवीपर आपके समानही प्रवास करते हुए मुस्लिमोंके साथ भी कोई शत्रुता न करे ॥२७॥

शृणुताद्य वचो ममेरितं सकलैर्मुस्लिमबन्धुभिः सह।
यदि नास्ति जगत्तले स्तृतैः प्रियता वो भयकारणं सदा ॥२८॥

आज आप मेरी बात सुनें। पृथिवीमें फैले हुए मुसलमानोंके साथ यदि आपका प्रेमसम्बन्ध नहीं रहेगा तो आपकेलिये सदा भयका कारण बना रहेगा ॥२८॥

यदि तैर्न भवोदरे स्थितैः सुहृदाचारतयात्र हिन्दवः।
मनसा विमलेन संगता भवितारः पुनरेव बन्दिनः ॥२९॥

संसारमें चारोओर रहे हुए मुसलमानोंके साथ यदि हिन्दू मित्राचार-पूर्वक शुद्ध मनसे एक न होंगे तो फिर बन्दी ही रहना पड़ेगा ॥२९॥

महता हि परिश्रमेण या परिलब्धेह जनैः स्वतन्त्रता।
विवशासु गता भवेदसौ कलहः स्याद्युवयोर्द्वयोर्यदि ॥३०॥

महापरिश्रमसे जो स्वतन्त्रता यहाँ प्राप्त हुई है वह शीघ्र ही चली जायगी। यदि तुम दोनोंमें झगड़ा होगा ॥३०॥

दिवसा व्रतिनो ममोद्गता युवयोर्ध्यायत एव पञ्च शम्।
कृतिनः परमानुकम्पया जगदीशस्य च षष्ठ एषकः ॥३१॥

उपवास करते हुए और आप दोनों–हिन्दु-मुसलमानोंके कल्याणकी चिन्ता करते हुए मुझ कृतीके पाँच दिन तो ईश्वरकृपासे समाप्त हो गये। यह छठाँ दिवस है ॥३१॥

भविताद्य समापितो विधिर्भवतामप्यनुकम्पयानया।
सुखिनैव मया समन्वितः परितोषेण मम व्रतस्य तु ॥३२॥

आप लोगोंकी कृपासे भी मेरे उपवासका सन्तोषयुक्त विधि आज मैं समाप्त करूँगा ॥३२॥

सिखमुस्लिमहिन्दुबन्धवो विबुधाः पावकदेवपूजकाः ।
अथ यीशुपदानुयायिनो हृदयैक्येन सिता स्थिता इह ॥३३॥

सिक्ख, मुसलमान्, हिन्दु, पारसी, ईसाई सभी हृदयकी एकतासे बँधे हुए यहाँ स्थित हैं ॥३३॥

निखिलाः प्रवदन्ति सोत्सवा वयमद्य प्रभृति श्रियै हि नः ।
कलहं विनिपात्य सोदरा इव कामं प्रतिवर्तितास्महे ॥३४॥

उत्साहके साथ सभी कह रहे हैं कि हम आजसे लेकर अपने कल्याणकेलिये ही झगड़ेको छोड़कर सगे भाईके समान यहाँ रहेंगे ॥३४॥

अथ पाकगताः कुतोपि वा स्थितिमन्तो भरतक्ष्मातले ।
सकला मुसलीमबन्धवः प्रतिवत्स्यन्ति सुखेन निर्भयाः ॥३५॥

जो पाकिस्तान गये थे और किसी कारणसे भारतमें ही रह रहे हैं वह सब मुसलमान् यहाँ निर्भय होकर सुखसे रहेंगे ॥३५॥

इति मे प्रतिभाति साम्प्रतं प्रतिवाचो भवतां मुखस्पृशः ।
सकलेषु विनम्रतेक्षिणो मृदु तात्पर्यमिदं मनस्विनाम् ॥३६॥

मनस्विनां भवतां मुखस्पृशः प्रतिवाचः इति इदं मृदु तात्पर्यम् सकलेषु साम्प्रतं विनम्रतेक्षिणो मे प्रतिभाति = आपलोग मनस्वी हैं। आप सबमें मैं इस समय नम्रता देख रहा हूँ। आपके मुखसे निकले हुए उत्तरका ऊपर जो कह चुका हूँ, वही मृदु तात्पर्य मुझे प्रतीत हो रहा है ॥३६॥

यदि चेदमतो भवेदयं नितरां शुद्धसदर्थ ऊहितः ।
व्रतमस्ति निरर्थकं हृतं मम युष्माभिरनुग्रहैरितैः ॥३७॥

मैंने जो शुद्ध और उत्तम अर्थकी कल्पनाकी है यदि वह आपको स्वीकृत नहीं है तो आपने करुणावश व्यर्थ ही मेरे व्रतको तोड़वाया है ॥३७॥

न मनागपि वीक्ष्यते भयं भयहेतुर्न कुतोपि दृश्यते।
अथ दर्शितमेव वर्त्म मे प्रतिपन्नस्य च भारतस्य वः ॥३८॥

मैंने जो मार्ग बताया है उसपर चलनेवाले भारतकेलिये और आपके लिये भी ज़रा भी कोई भय या किसी ओर से भयका कारण नहीं दीख पड़ता है ॥३८॥

बलतोपहृता मनुष्यतापरिहारे कुशलेन रक्षसा।
अधुना भगवत्पदानुगाः सुखिनः स्याम शतायुषो वयम् ॥३९॥

कुशल शैतान, मनुष्यताका त्याग करनेकेलिये जबर्दस्तीसे हमें खींचले गया था। भगवान्‌की कृपासे अब हम सौ वर्ष तक सुखी रहकर जीवेंगे ॥३९॥

गुणवद्धृदये गुणाः पदं निदधीरन्नितरां न किञ्चन।
इह चित्रमिति प्रतन्वतां गुणसंग्राहकतां हि बन्धवः ॥४०॥

जिस हृदयमें गुणोंका निवास है उसमें अधिक गुण आवें इसमें कुछ भी आश्चर्य नहीं है। अतः मेरे भाइयों, गुणोंके संग्रह करनेकी ही वृत्ति आप धारण करें ॥४०॥

यदि भारतपाकयोर्द्वयोः प्रियबन्धुत्वमुदेष्यति स्थिरम्।
निखिलक्षितिमण्डलं तदा सुभगं संवृणुते यशस्तयोः ॥४१॥

यदि भारत और पाकिस्तानमें स्थिर प्रियबन्धुता पैदा हो गयी तो सम्पूर्ण पृथिवी उन दोनोंका सुन्दर यश प्रकट करेगी ॥४१॥

यदि नैतदभीप्सितं भवेत्प्रजयोर्हिन्दुकुरानिनोर्द्वयोः।
मम जीवितहेतुमत्र नो परिपश्यामि कमप्यनिन्दितम् ॥४२॥

यदि यह बात भारत और पाकिस्तानकी प्रजाको इष्ट नहीं है तो मैं समझता हूँ कि मेरे जीनेके लिये कोई उत्तम कारण नहीं है ॥४२॥

परिवर्धयितुं मनुष्यतां सकलो जीवतु जीवसंचये।
परिलम्भयितुं महत्पदं जनतां धन्यतमस्य जीवनम् ॥४३॥

मनुष्यताकी वृद्धि करनेके लिये और जनताको महत् पद प्राप्त करानेके लिये तो इस संसारमें, भाग्यशाली पुरुष जैसा जीता है वैसे ही जीवनके साथ सभी जीवें ॥ ४३ ॥

**सदकालखुदामहेश्वरा निखिलाः सन्ति च वर्णसंचयाः ।**
**कमपि प्रभुतापरं प्रभुं ननु सम्बोधयितुं समर्थकाः ॥४४॥**

सत्, अकाल, खुदा, ईश्वर यह सभी शब्द किसी परम प्रभुके सम्बोधन करनेके लिये पर्यायवाचक-समानार्थक शब्द हैं ॥ ४४ ॥

**सकला मनुजा अधीयतां गुरुवाणीं च कुरानमप्यथ ।**
**अथवा स्मृतिमिञ्जिलादिकं न हि संवर्तत इष्टदा भिदा ॥४५॥**

सभी आदमी गुरुग्रन्थसाहेबको पढ़ें, कुरानको पढ़ें, गीता पढ़ें, इञ्जील पढ़ें। भेद रखनेसे कोई लाभ नहीं है ॥ ४५ ॥

**अहमस्मि न पूजकः शिलाशकलस्यापि च हिन्दुतां भजन् ।**
**परमस्ति भजंश्च कोपि तन्न कदापीह तिरस्करोमि तम् ॥४६॥**

मैं हिन्दू होता हुआ भी मूर्तिपूजक तो नहीं हूँ। परन्तु यदि कोई मूर्तिपूजा करता हो तो मैं उसका तिरस्कार नहीं करता हूँ ॥ ४६ ॥

**स्थित एव महेश्वरः शिलाशकलेष्वप्यनवद्यसद्यशाः ।**
**न हि तत्र शिलां स ईक्षते भजते श्रीशमुपासकस्तदा ॥४७॥**

निर्दोष और पवित्र कीर्तिवाला भगवान् ही पत्थरकी मूर्तिमें भी है ही। भगवान्का उपासक मूर्तिपूजाकालमें मूर्तिमें पत्थर नहीं देखता, भगवान्को ही देखता है ॥ ४७ ॥

**यदि नास्ति शिलास्थ ईश्वरो न कुरानोपि भजेत्पवित्रताम् ।**
**स हि सर्वमवाप्य संस्थितस्तत एवास्ति पवित्रितं जगत् ॥४८॥**

यदि पत्थरमें ईश्वर नहीं है तो कुरान भी पवित्र नहीं माना जा सकता। वह भगवान् सबमें व्यापक होकर बैठा हुआ है इसीलिये जगत् पवित्र है। तात्पर्य यह है कि जैसे कुरानमें भी ईश्वर व्यापक है

अत एव वह पवित्र है एवम् मूर्तिमें भी ईश्वर व्यापक है और वह पवित्र है अत एव पूज्य है ॥ ४८ ॥

यदि हिन्दुरिहास्ति कोपि वा प्रतिमापूजक इद्धमानसः ।
अथ सिक्ख उतापि मुस्लिमो न हि वर्धेत न चापि हीयते ॥४९॥

चाहे कोई मूर्तिपूजक हिन्दू हो, अथवा सिक्ख हो, अथवा मुसलमान् हो, यदि सबका मन पवित्र है तो न कोई उत्तम है और न कोई अधम है ॥ ४९ ॥

मम नास्ति मतो महेश्वरः परसत्यादपरः प्रभावितः ।
स्मरणेन मयास्य साधितं व्रतमेतत्परिणामसत्फलम् ॥५०॥

मेरे मतमें शुद्ध सत्यसे भिन्न कोई प्रभावशाली ईश्वर नहीं है। इसी सत्यरूप ईश्वरके स्मरणसे मैंने उत्तम परिणामवाले इस व्रतको पूर्ण किया है ॥ ५० ॥

परमेश्वरमीदृशं त्यजन्निखिलानेहसि सत्सहायकम् ।
अपरं परिशोधयन्नरः परवान्पापशतानि सेवते ॥५१॥

सदा सब दिन सहायता करनेवाले ऐसे परमेश्वरको छोड़कर जब मनुष्य अन्य ईश्वरको ढूँढ़ता है तो लाचार होकर सैकड़ों पाप करता है ॥५१॥

निहता बहवो निरागसो निखिलैः श्रीजगदीशनामतः ।
शिशवः शिशुतामतीत्य वा रममाणाश्च नवे वयस्यपि ॥५२॥

ईश्वरके ही नामपर बहुतसे निरपराध दुधमुँहे बच्चे और उससे ऊपरकी उम्रमें खेलनेवाले बच्चे मार डाले गये ॥ ५२ ॥

निहताः प्रहृता हृताश्च ता अबला निर्दयिभिः सहस्रशः ।
अगृहीतकराश्च कन्यका अपि तैरासुरिभिर्विपातिता ॥५३॥

निर्दयी लोगोंने हजारों स्त्रियोंको मार डाला, उनपर प्रहार किया और उनका हरण किया। राक्षसोंने अविवाहित कन्याओंको भी पतित बना दिया ॥ ५३ ॥

बलतो निजधर्ममार्गतो बहवो हिन्दुजनाः पृथक्कृताः ।
ननु केयमुदारता च का विकसन्ती च मनुष्यतापि वा ॥५४॥

जबर्दस्तीसे बहुतेरे हिन्दुओंको अपने धर्मसे अलग किया गया । मैं पूछता हूँ कि यह कौनसी उदारता है ? और कौन-सी विकास पाती हुई मनुष्यता है ? ॥ ५४ ॥

निखिलं निखिलैरकारि तन्ननु नाम्ना परमेशितात्मनः ।
मनुजैः पशुवृत्तिभिः परं न हि सत्येशमपेक्ष्य तत्कृतम् ॥५५॥

सबोंने यह सब जो किया वस्तुतः वह परमेश्वरके नामसे ही किया । पशुवृत्तिवाले उन मनुष्योंने सत्यरूप परमात्माका विचार करके यह नहीं किया है ॥ ५५ ॥

राष्ट्रस्य नाथो यतिराजसंनिधौ,
राजेन्द्र आयादतिविह्वलान्तरः ।
आदाय हिन्दूंश्च मुहम्मदीयान्,
सिक्खांश्च संघस्थजनान्प्रतिष्ठितान् ॥ ५६ ॥

राष्ट्रपति बाबू श्री राजेन्द्रप्रसादजी व्याकुल होकर प्रतिष्ठित हिन्दुओं, मुसलमानों, सिक्खों और राष्ट्रसेवासंघके लोगोंको लेकर श्री महात्माजीके पास गये ॥ ५६ ॥

ज्राहिद् हुसेनोपि महाधिकारी पाकीय आसीत्तदुपस्थितेषु ।
सुभाषसंस्थापितसैन्यसेनापतिश्च वा शाह्नवाज्ञकोपि ॥५७॥

पाकिस्तानके एक बड़े अधिकारी जाहिद हुसेन भी उनमेंसे थे । तथा श्री सुभाषबाबू द्वारा स्थापित सेनाके सेनापति श्रीशाहनवाज भी थे ॥ ५७ ॥

श्रीनेहरूर्मूर्तिरिवास्त मौनमादाय योगेश्वरपार्श्व एव ।
अबुल्कलामोपि सहैव तेन सन्नाननो मौनमवास्थितासौ ॥५८॥

पण्डित श्री जवाहिरलालजी नेहरू और उनके साथ ही मौलाना श्री

अबुल कलाम आजाद चुपचाप उदासमुखसे महात्माजीके पासमें ही बैठे थे ॥ ५८ ॥

शान्तिप्रतिज्ञां लिखितां तदैकां संश्रावयामास स राष्ट्रनाथः ।
हस्ताक्षरैः सर्वमहाजनानां समङ्कितां तत्र यतिप्रकाण्डम् ॥५९॥

राष्ट्रपति श्री राजेन्द्रबाबूने उस समय एक लिखित प्रतिज्ञापत्र जिसमें सभी बड़े बड़े लोगोंके हस्ताक्षर थे, महात्माजीको सुनाया ॥ ५९ ॥

सर्वे वयं मुस्लिमहिन्दुसिक्खा अन्येपि सर्वे स्वमतस्वतन्त्राः ।
इच्छाम आधाय सहोदरत्वं दिल्लीनिवासं सुखशान्तिपूर्वम् ॥६०॥

वह प्रतिज्ञापत्र यह है । हम सब हिन्दू, मुसलमान, सिक्ख और दूसरे भी धर्मावलम्बी सगे भाईकी भावना रखकर शुभ-शान्तिसे दिल्लीमें रहना चाहते हैं ॥ ६० ॥

दिल्लीमुसल्मानजन-स्व-धर्मरक्षां करिष्याम उदारभावैः ।
अभूद्यथा पूर्वमितः परं नो भविष्यतीति प्रतिश्रृण्म एतत् ॥६१॥

हम सब दिल्लीके मुसलमानोंके और अपने भी धर्मकी रक्षा उदार चित्तसे करेंगे । पहले जैसा हो गया है अबसे वैसा नहीं होगा, यह हमलोग प्रतिज्ञा करते हैं ॥ ६१ ॥

गांधिं महात्मानमिहाद्य सर्वे विश्वासयामो वयमार्द्रभावैः ।
ख्वाजाकुतुब्बुद्दिन उर्स मेला सदा भवेदेव यथैव पूर्वम् ॥६२॥

हम सब बहुत नम्र होकर महात्मा श्री गांधीजीको विश्वास दिलाते हैं कि कुतुबुद्दीनका उर्सका मेला जैसे पहले होता था, सदा होगा ॥६२॥

करौलबागे च पहाड़गञ्जे तथैव सर्वत्र च सब्जिमण्ड्याम् ।
गमागमौ कर्तुमवश्यमेते शक्ता भवेयुर्मुसलीमलोकाः ॥६३॥

करौलबाग, पहाड़गंज, सबजीमंडीमें और सर्वत्र यह मुसलमान् गमनागमन अवश्य कर सकते हैं ॥ ६३ ॥

त्यक्तानि मुस्लीमजनैर्गतैस्तैस्तन्मस्जिदानीह च हिन्दुसिक्खैः ।
नीतानि सर्वाणि निजाधिकारं प्रदापयिष्याम इति प्रतिज्ञा ॥६४॥

वह मुसलमान् लोग जिन मस्जिदोंको छोड़कर चले गये थे और जिन्हें हिन्दुओं और सिक्खोंने अपने कब्जेमें कर लिया है हम उनको दिला देंगे, यह प्रतिज्ञा करते हैं ॥ ६४ ॥

यानि स्थलानीह भवन्ति मुस्लिम्लोकाधिवासाय न तानि केचित् ।
वशीकरिष्यन्ति बलाद्धठाद्वा सर्वे वयं कुर्म इति प्रतिज्ञाम् ॥६५॥

मुसलमानोंके रहनेके लिये जो स्थान हैं उन्हें कोई बलसे या हठसे अपने अधिकारमें नहीं लेंगे, यह हम सब प्रतिज्ञा करते हैं ॥ ६५ ॥

बहिर्गता मुस्लिमबन्धवो ये दिल्लीं विहाय स्वमनोरथेन ।
दिल्ल्यां पुनर्वस्तुमथास्तु तेषामीहा तदागन्तुमिहावकाशः ॥६६॥

स्वेच्छासे जो मुसलमान् दिल्ली छोड़कर बाहर चले गये हैं, वह यदि यहाँ पुनः रहना चाहें तो उन्हें आनेके लिये अवकाश है ॥ ६६ ॥

व्यापारमेतेपि यथेच्छमेव कर्तुं भविष्यन्ति सदा क्षमास्ते ।
विधातुमेतत्सकलं यतिष्यामहे वयं नात्र च कापि शङ्का ॥६७॥

मुसलमान् भी यहाँ अपनी इच्छाके अनुसार व्यापार कर सकेंगे । यह सब करनेके लिये हम यत्न करेंगे, इसमें सन्देह नहीं ॥ ६७ ॥

सेनाबलं शास्त्रबलं नवा स्यादपेक्षणीयं न कदापि कैश्चित् ।
एतत्प्रतिज्ञापरिपालनाय स्वयं विधास्याम इदं वयं हि ॥६८॥

इस प्रतिज्ञा पालन करनेके लिये सेना या सर्कारकी कभी अपेक्षा हम नहीं करेंगे । यह सब हम स्वयं ही करेंगे ॥ ६८ ॥

विनम्रभावेन निवेदयामो महात्मपादेषु वयं सदुःखाः ।
विश्वास्यमेतद्वचनं सदैव कदापि मिथ्या न भविष्यतीदम् ॥६९॥

हम नम्रताके साथ श्रीमहात्माजीके चरणोंमें दुःखके साथ प्रार्थना

करते हैं कि इस वचनपर आप विश्वास रखें। यह कभी मिथ्या नहीं होगा ॥ ६९ ॥

कृपां विधायैव महादयालो व्रतं विसृज्याद्य कुरुष्व लोकान्।
हिन्दून्सिखान्मुस्लिमपारसीकान्खिस्तानपि स्वस्थतमान्सनाथान् ॥७०॥

हे परमदयालु महात्माजी, आप कृपा करके व्रतको छोड़कर हिन्दू, सिक्ख, मुसलमान्, पारसी, ईसाई सबको स्वस्थ और सनाथ बनाइये ॥ ७० ॥

महाप्रभो त्वं परमः समर्थो निराश्रितानां परिरक्षणाय।
वयं तवाज्ञापरिपालनाय स्थास्याम ऊर्जा निखिलेन नित्यम् ॥७१॥

हे महाप्रभो, निराश्रितोंकी रक्षामें आप परम समर्थ हैं। आपकी आज्ञाका पालन करनेके लिये हम सब शक्तिसे सदा खड़े रहेंगे ॥७१॥

यथा भवान्नः परिपालनाय जागर्ति नित्यं कृपया प्रशान्तः।
तथैव चाद्यापि वयं निरीक्ष्याः पित्रेव पाल्याश्च सुता वयं स्मः ॥७२॥

जिस प्रकारसे आप हमारा पालन करनेके लिये दयासे सदा जागरूक रहते हैं वैसे ही आज भी हमारा निरीक्षण करेंगे। पिता जैसे अपने पुत्रोंका पालन करता है वैसे ही हमारा पालन करेंगे। हम सब आपके पुत्र हैं ॥ ७२ ॥

एतन्निशम्य निखिलं यमिनां महेन्द्रो,
विश्वम्भरो व्रतमपास्य दिने च षष्ठे।
स्वस्थो बभूव परितुष्य महाश्रमेण,
कृत्येन सद्भिरुपपादितकेन तेन ॥ ७३ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते

पारिजातसौरभे

पञ्चदशः सर्गः

यम पालन करनेवालोंमें श्रेष्ठ श्रीमहात्माजी यह सब सुनकर और सत्पुरुषों द्वारा महाश्रमसे किये गये इस कार्यसे प्रसन्न होकर छठें दिन उपवासका त्यागकर स्वस्थ हुए ॥ ७३ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
पञ्चदशः सर्गः



# षोडशः सर्गः

बन्नूप्रदेशाद्बहवः समाययुः श्रुतिप्रथाः केचन मूर्ध्नि ताडिताः ।
संच्छिन्नबाह्वङ्गुलयश्च केचन स्रवत्क्षतोत्पन्नसरित्प्रवाहकाः ॥१॥

बहुतसे श्रुतिप्रथ = हिन्दू बन्नू प्रदेशसे महात्माजीके पास आये। उनमेंसे किसीके सिरमें मार पड़ी थी, किसीका हाथ कटा था, किसीकी अङ्गुलियाँ कटी थीं और उन सभीके घावमेंसे रक्तकी धारा बह रही थी ॥ १ ॥

आगत्य योगीन्द्रपदारविन्दयोः प्रणम्य साष्टाङ्गमनद्भुता जनाः ।
आत्मीयदुःखोपकथानकेन ते यतीश्वरं साश्रुमुखं प्रचक्रिरे ॥२॥

आकर श्रीमहात्माजीके चरणकमलोंमें साष्टांग प्रणाम करके उन साधारण लोगोंने अपने दुःखकी कथासे उन्हें रुला दिया ॥ २ ॥

ऊचे विपद्ग्राहगृहीतमानसः प्रकोपितः कश्चन दैवनिर्दयैः ।
माहात्म्यतः सर्वमहात्मनां गणानधोनयन्तं यतिभूमिकापतिम् ॥३॥

उनमेंसे निर्दय दैवसे कोपित और दुःखी मनसे एकने सर्व महात्माओं-में श्रेष्ठ श्री यतिराजको कहा—॥ ३ ॥

विनाशितं सर्वमिह त्वयैव नो न चावशिष्टं किमपि क्षयोन्मुखम् ।
कर्तुं न किञ्चित्क्षमसे यतीश्वर प्रयाहि तस्माद्गिरिराजकन्दरम् ॥४॥

कि, आपने ही हमारा सर्वनाश कराया है। नष्ट होनेकेलिये अब कुछ बाकी नहीं है। आप तो कुछ कर नहीं सकते अतः हिमालयकी गुफामें आप चले जायँ ॥ ४ ॥

पूज्यः सतां स प्रतिवाचमादरान्निशम्य तद्वाचमुवाच सद्यतिः ।
गच्छानि तात क्व शृणोमि कस्य वा वचांसि चित्राणि विवृण्वतः पुरः ॥५॥

महात्माजीने आदरसे उसकी बातको सुनकर उत्तर दिया कि, भाई मैं कहाँ जाऊँ ? और किसकी बात सुनूँ ! सभी तो मेरे पास आकर विचित्र बातें कर जाते हैं ॥ ५ ॥

**कश्चित्प्रतिष्ठातुमिहैव सर्वदोपदेशदक्षो वदति प्रयत्नतः ।**
**त्वादृक् च मां गन्तुमितः सपद्यथो वदत्यजस्रं वद किं करोम्यहम् ॥६॥**

कोई तो प्रयत्नपूर्वक मुझे उपदेश देता है कि मैं यहाँ ही रहूँ । तुम्हारे जैसे लोग मुझे यहाँसे जानेकेलिये कहते हैं । कहो कि मैं क्या करूँ ? ॥६॥

**कश्चित्प्रशंसत्यथ कोपि पीडितो निर्भर्त्सयत्येव मुहुर्मुहुर्बत ।**
**मां तर्हि संवेदय मार्गमीदृशं गतेन यं शान्तिमयत्नतो लभे ॥७॥**

कोई पीड़ित आदमी मेरी निन्दा करता है और कोई प्रशंसा करता है । तुम मुझे कहो कि मैं कौन-सा मार्ग लूँ जिससे बिना श्रमके शान्ति प्राप्त करूँ ॥ ७ ॥

**संभर्त्सयेत्कोपि च कोपि गालिकासहस्रपाठं विदधातु तेन किम् ।**
**यत्कर्तुमीशः प्रतिबोधयिष्यति तदेव कालेषु मया विधास्यते ॥ ८ ॥**

चाहे कोई मुझे धमकावे चाहे हजारों गालियाँ दे, उससे मुझे क्या सम्बन्ध ? भगवान् मुझसे जो करावेगा वही समयपर मैं करूँगा ॥ ८ ॥

**त्वं चेन्न कंचिज्जगदीश्वरं परं जगत्प्रणम्यं मनुषे दयानिधिम् ।**
**ममान्तरात्मध्वनिमाकलय्य मां विधातुमार्यामवरुन्त्स्व मा कृतिम् ॥९॥**

तुम अगर कोई दयालु जगदीश्वरको न मानते हो तो न मानो । परन्तु मुझे मेरे अन्तरात्माकी आवाजके अनुसार सत्कर्म करनेसे मत रोको ॥९॥

**प्रत्येकनारी दुहिता मम प्रिया स्वसापि वेत्येव मयाभिमन्यते ।**
**तस्माद्विपत्तासु समागता भवेद्विपन्मयीति प्रथितं मया भवेत् ॥१०॥**

प्रत्येक स्त्री मेरी प्रियकन्या है और मेरी प्रिय बहिन है ऐसा ही मैं मानता हूँ । अतः यदि उनपर कोई विपत्ति आवे तो उसे मैं मेरी ही विपत्ति समझता हूँ ॥ १० ॥

नाहं सुहृद्धिन्दुसिखादिसद्धियामिति प्रतीतिर्हृदये कुतस्तव।
नित्यं मुसल्मानगणस्य मानसं धिनोम्यहं ते तदपि भ्रमो महान् ॥११॥

मैं हिन्दुओं और सिक्खोंका मित्र नहीं हूँ, तुम यह कैसे जानते हो? मैं सदा मुसलमानोंके मनको ही प्रसन्न करता हूँ, यह भी तुम्हारा बड़ा भारी भ्रम है ॥ ११ ॥

केनापि नो अस्मि नियोजितः क्वचिज्जनोपकाराचरणे नरेण वा।
नो वारितः कैरपि लोकसेवनाद्भवाम्यकस्माद्विरतः कदाचन ॥१२॥

किसीके कहनेसे मैं जनताके उपकारमें नहीं लगा हूँ। तथा किसीके रोकनेसे मैं लोकसेवासे अकस्मात् कभी भी विरत नहीं बनूँगा ॥ १२ ॥

ईशेच्छयैवाहमिमां कृतिं शुभां समाचरामीति निवृत्तिरप्यथ।
सम्पत्स्यते श्रीभगवत्सदिच्छया परं न हेतुः प्रभवेदिहापरः ॥१३॥

भगवान्‌की ही इच्छासे मैं यह सेवारूप शुभ कर्म करता हूँ। इससे निवृत्ति भी भगवान्‌की ही इच्छासे होगी। परन्तु दूसरा कोई कारण मुझे रोकनेमें समर्थ न होगा ॥ १३ ॥

यद्यत्समिच्छेत्स हिताय मे प्रभुः करिष्यते तत्र न चिन्तितोस्म्यहम्।
हन्ता स चेन्मामिह संजिघांसति जिजीवयिष्येद्यदि जीवयिष्यति॥१४॥

वह मेरे हितकेलिये जो इच्छा करेगा, उसे वह करेगा, इस विषयमें मैं कभी चिन्ता नहीं करता हूँ। यदि वह मुझे मार डालना चाहेगा तो मार डालेगा। यदि वह जिलाना चाहेगा तो जिलावेगा ॥ १४ ॥

मन्येहमीशस्य वशोस्मि सर्वथा सदा च तत्प्रेरित एव कर्मसु।
इष्टेष्वनिष्टेस्वपि संभजे रतिं कदापि कर्ता स्वत एव नास्म्यहम् ॥१५॥

मैं मानता हूँ कि सब प्रकारसे भगवान्‌के ही वशमें हूँ। उसकी प्रेरणासे ही मैं इष्ट अथवा अनिष्ट कर्ममें लगता हूँ। मैं स्वतः तो कभी भी कर्ता नहीं हूँ ॥ १५ ॥

विंशे तिथौ नाशयितुं तनूमिमां जरातिजीर्णां मम बन्धुरेव सः ।
चिक्षेप मध्ये सदसः पविं हरेरुपासनायाः समये सविभ्रमः ॥१६॥

बीसवीं तारीखको मेरे इस जराजीर्ण शरीरको नष्ट करनेकेलिये मेरे ही एक पागल भाईने ईश्वरोपासनाके समय सभामें वज्र—बॉम्ब फेंका था ॥ १६ ॥

भीरुर्न चाहं न विबाधते भयं मृत्तेश्च मामल्पमपीह निर्भयम् ।
रीत्यानया कोपि मनोरथं निजं भवेन्न संपूरयितुं क्षमः क्वचित् ॥१७॥

मैं डरपोक नहीं हूँ । मृत्युका जरा भी भय मुझ निर्भयको नहीं होता है । इस रीतिसे कोई अपने मनोरथको पूर्ण नहीं कर सकता ॥ १७ ॥

कङ्कालमात्रां तनुपोतिकां हि मे बलेन हीनां जरयावशीकृताम् ।
हन्तुं प्रयत्नः क इहास्त्वसौ महान्स शोभते नाहित ईर्मविक्रये ॥१८॥

यह शरीर तो हड्डीमात्र ही है, बल है नहीं, वृद्धावस्थासे पराधीन है उसे मारनेके लिये यह क्या महान् प्रयत्न किया गया है ? फोड़ा-फुन्सीसे विकृत शरीरमें किया गया वह प्रयत्न शोभा नहीं देता है ॥ १८ ॥

युष्माभिरन्यैरपि मूढबुद्धिकैः कदापि नेयः कुपितावनिं न सः ।
अज्ञानदण्डप्रहतः स्वभावतो हतः स्वकृत्या कृतया कथञ्चन ॥१९॥

आप लोग तथा अन्य विचारहीन लोग उसपर क्रोध न करें । वह तो स्वयम् अज्ञानदण्डसे दण्डित होकर अपने कर्मसे ही मारा जा चुका है ॥१९॥

हिन्दुः सिखो वास्तु स मेस्तु तेन किं भवेन्मुसल्मांश्च ततोपि किं मम ।
स्यात्कोप्यसौ नो व्यधित प्रतिष्ठितां क्रियां ततो दुष्यति देशमात्मनः ॥

बम फेकनेवाला हिन्दु हो, या सिख हो, या मुसलमान् हो, उससे मुझे क्या ? वह कोई भी हो परन्तु उसने अच्छा काम नहीं किया है । उससे अपना देश कलंकित होता है ॥ २० ॥

तस्मा अधीशः प्रददातु सन्मतिं भवे भवे पुण्यतमेषु कर्मसु ।
भक्तिर्भवेत्तद्धृदये सदातनं विरक्तिमाप्नोतु सदा सदुष्कृतात् ॥२१॥

भगवान् उसे सुमति दें। प्रत्येक जन्ममें पुण्य कार्य्योंमें उसकी भक्ति हो। उसके हृदयमें सदा ही दुष्कर्मसे विरक्ति हो ॥ २१ ॥

**उक्तं मया पोलिसकर्मचारिणां मुखं न तं पीडयितुं कथंचन।**
**दैवेन यः पूर्वतरं निपातितो निहत्य तं किं यशसे भवेत्तव ॥२२॥**

मैंने पुलिसके कर्मचारियोंमें मुख्य कर्मचारी-पुलिस सुपरिन्टेन्डेन्टको कहा है कि उस बम फेंकनेवालेको हैरान न करें। जो दैवका पहिलेसे ही मारा हुआ है उसको मारनेसे आपको क्या यश मिलेगा? ॥ २२ ॥

**शक्नोमि वक्तुं न कृतापराधनं जहीति तं चेति परन्तु तन्मनः।**
**जेतुं प्रयत्नो निखिलो निषेव्यतां कदापि तस्मै न हि कुप्यतामिति ॥२३॥**

मैंने उन्हें यह भी कहा है कि—मैं यह तो कह ही नहीं सकता कि अपराधीको वह छोड़ दें। परन्तु उसके मनको जीतनेके लिये सब प्रयत्न करें। उसपर क्रोध न करें॥ २३ ॥

**सर्वे वयं चेद्धतकोपवृत्तिका भवेम तत्तस्य मनोविशोधनम्।**
**स्यादेव निश्चप्रचमित्यलं जनैः शमान्वितै रोषरयो निरोध्यताम् ॥२४॥**

यदि हम सभी क्रोधकी वृत्ति छोड़ दें तो उसका मन अवश्य ही शुद्ध हो सके। अतः सबको शान्त होकर क्रोधका वेग रोकना चाहिये ॥२४॥

**पापं कदाचिन्न वितिष्ठते स्वयं भवन्निराधारमिति श्रुतिश्रुतम्।**
**तस्मादधिष्ठानविनाशहेतवे विधीयतां यत्नगणोखिलैः सदा ॥२५॥**

शास्त्रोंमें कहा गया है कि पाप स्वतः कभी निराधार नहीं रह सकता है। अतः उसके अधिष्ठान (मन) के नाशकेलिये सबको सदा यत्न करना चाहिये ॥ २५ ॥

**पापस्य निःशङ्कतया मनः स्मृतं बुधैरधिष्ठानमिति प्रणाशिते।**
**तस्मिन् प्रणङ्क्ष्यन्ति जघन्यवृत्तयः स्वयं तत स्युर्निखिला अकोपनाः॥२६॥**

निस्सन्देह पापका अधिष्ठान मन है। उसके नाश करनेपर नीच वृत्तियाँ स्वयं नष्ट हो जायँगी और उससे सब क्रोधरहित बन जायँगे ॥२६॥

स्थातुं समर्थो भगवान्स केवलः सदा निराधारतया समन्ततः ।
तद्भक्तलोका अपि नावलम्बनं प्रकामयन्ते क्वचनाथ किंचन ॥२७॥

केवल भगवान् ही सदा और सर्वत्र निराधार रह सकता है। उसके भक्त भी कभी कोई ( अन्य ) अवलम्ब नहीं चाहते हैं ॥ २७ ॥

आक्रामको मां समुपेत्य निर्भयः क्रियां स्वकीयां कुरुतां यथेच्छया ।
नान्यः सहायोस्तु च रामनाम मे परं सहायोस्तु तदैव धन्यता ॥२८॥

आक्रमण करनेवाला निर्भय होकर मेरे पास आ सकता है और इच्छानुसार अपना काम कर सकता है। मेरा तो कोई सहायक नहीं है। रामनाम ही मेरा सहायक रहे तो मैं अपने को धन्य मानूँ ॥ २८ ॥

धृष्णोतु मां कश्चिदुपेत्य कोपनो न कोपि युष्मासु भवेत्प्रकोपितः ।
सर्वे जपन्तो हृदि रामनामस्थितास्तदा धन्यतया वयं खलु ॥२९॥

कोई क्रोधी पुरुष मेरे पास आकर मुझपर हमला करे और आप लोगोंमेंसे किसीको क्रोध न हो और सभी रामनामका जप हृदयमें करते रहें तभी हम सब धन्य हो सकते हैं ॥ २९ ॥

ह्यः कापि कारुण्यधरा मनस्विनी निधाय सा चेतसि साहसं महत् ।
तं ग्राहयित्वा व्यदधात्सती क्रियां प्रकोपमूढं तदरोचतैव मे ॥३०॥

कल किसी दयालु, मनस्विनी बहिनने मनमें बड़ा भारी साहस रखकर उस क्रोधोन्मत्त पुरुषको पकड़वाकर अच्छा काम किया। यह मुझे पसन्द आया ॥ ३० ॥

एषाथवैषोस्तु निरक्षरा यदि महत्त्वमस्या न भवेदुत क्वचित् ।
अस्याथवस्या मन एति शुद्धतां यदि प्रवृद्धिं गमयेत्स्वकान्गुणान् ॥३१॥

कोई स्त्री हो या पुरुष हो, वह यदि निरक्षर हो तो भी उसका महत्त्व कहीं जाता नहीं, यदि वह अपने मनको पवित्र करे और अपने गुणोंको बढ़ानेका प्रयत्न करे ॥ ३१ ॥

तस्मात्परेऽहन्यवनीप्रपूजितः सभाभुवं सायमुपैतुमागतः ।
स प्रार्थनायाः समये यथाक्रमं जयेतिनादेन समर्चितोऽभवत् ॥३२॥

उससे पीछेके दिनमें जगत्पूज्य महात्माजी क्रमके अनुसार प्रार्थना-समयमें सायङ्काल सभामें आये और जयकारसे लोगोंने स्वागत किया ॥३२॥

दूरेऽभवद्व्यासपदं ततः स्थलाद्विलोकितस्तैः प्रथमं सभाजनैः ।
यत्रागतस्तत्र नराधमाधमो यतीन्द्रपादेषु ननाम कश्चन ॥३३॥

महात्माजीका लोगोंको जहाँसे प्रथमदर्शन हुआ वहाँसे व्यासगादी दूर थी । उसी जगह (जहाँ प्रथम उनका दर्शन हुआ था) कोई एक महानीच पुरुष आया और उसने महात्माजीके चरणोंमें प्रणाम किया ॥ ३३ ॥

आदाय वह्न्यस्त्रमसौ स्वहस्तयोर्महाप्रभोर्वक्षसि चोदरे क्रमात् ।
चिक्षेप तिस्रो गुलिकाः प्रकाशिनीरुपोषणाबल्यभुजो जगद्धृदः ॥३४॥

पश्चात् उसने हाथोंमें रिवाल्वर लेकर, उपवाससे निर्बल बने हुए, और सम्पूर्णजगत्के हृदय समान श्रीमहात्माजीकी छातीमें और पेटमें क्रमसे तीन गोलियाँ मारीं ॥ ३४ ॥

काले च तस्मिन्मनुगांधिराज्ञया यतेस्तथाभापि कनोः सधर्मिणी ।
आस्तां स्थिते तस्य च पार्श्वयोर्द्वयोर्महागुरो राष्ट्रपितुः सतां सतः ॥३५॥

उस समय महात्माजीकी आज्ञासे श्री० मनुगांधी और श्री० कनुगांधीकी पत्नी श्री० आभागांधी उनके दोनों तरफ खड़ी थीं ॥ ३५ ॥

वस्वर्थरन्ध्रैकमितस्य योगिराट् सदाशिवो यैशववत्सरस्य च ।
मासे च जान्यूअरिमासमुख्यगे तथा नवत्रिंशदिने महेश्वरः ॥३६॥
लीलागृहीतां स्वतनुं त्यजन्नसौ महायतीशः कृतकृत्यतां गतः ।
स्वरूपमापत्परमा हि देवता स्मरन्स रामं हृदये पुनः पुनः ॥३७॥

ता० २९-१-१९४८ ई० के दिन श्रीमहात्माजी लीलादेहको त्यागकरके हृदयमें बार-बार रामनाम स्मरण करते हुए स्वरूपमें लीन हो गये ॥ ३६-३७ ॥

महाविद्वेषाग्नौ सकलजनतास्तप्ततनवो,
मिथोऽशत्रूयन्त प्रतिदिनमभूद्द्वन्द्वकलहः ।
महाक्रोधावेशास्मृतनिजमहापूर्वजगणाः,
सदा हिन्दूलोका मुसलिमवधायोद्यततमाः ॥३८॥

महाविद्वेषरूप आगमें सबका शरीर तप रहा था, परस्पर सब शत्रु हो रहे थे, प्रतिदिन परस्पर लड़ाइयाँ होती थीं, हिन्दूलोग क्रोधके आवेशमें आकर अपने पूर्वजोंके गुणोंको भूल गये थे, सदा मुसलमानोंको मार डालनेकेलिये तैयार थे ॥ ३८ ॥

अयं श्रीमानीशो निहतयवनान्वीक्ष्य करुणा-
स्रवत्स्रोतोमग्नः परिचरितपञ्चानशनकः ।
व्यधत्ताराच्छान्तिं कलिकलकलप्रोज्झितमतिः,
स नाथू हा नाथं जगदकृत सद्यः शवमयम् ॥३९॥

श्रीमान् महात्माजी मरे हुए यवनोंको देखकर करुणानदीमें डूबकर, पाँच उपवास करके, किसी तरह शान्तिकी थी। कलिके प्रतापसे जिसकी बुद्धि नष्ट हो गयी थी उस नाथूरामगोडसेने जगत्को अनाथ और मुर्दा बना दिया ॥३९॥

स्वातन्त्र्यं भरतक्षितेः स रचयन्सत्यं भुवि स्थापय-
न्नस्पृश्येतिकदक्षरं परिभवन्नार्तार्तिमानाशयन् ।
लीला लोकहिताय तेन विहितास्ताः स्थापयित्वा शिवा,
हा रामेतिवदन्दयाजलनिधिः शान्तस्वरूपोऽभवत् ॥४०॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
षोडशः सर्गः

भारतदेशका स्वतन्त्र बनाकर, अस्पृश्यताको मिटाकर, दुःखी जनोंकी पीड़ाका नाशकर लोककल्याणकेलिये की हुई पवित्रलीलाका स्थापन करके हे राम कहते हुए दयासागर श्रीमहात्माजी शान्तस्वरूप हो गये ॥ ४० ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
षोडशः सर्गः

# सप्तदशः सर्गः

धरणी नववेदनां गता रहिता गांधिमहात्मना सता।
अथ सत्यमितो गतं जहत्सशरीरं जगदेतदर्दितम् ॥ १ ॥

महात्मा गाँधीके विना पृथिवीने एक नयी वेदनाका अनुभव किया और शरीरधारी सत्य इस दुःखित जगत्को छोड़कर चला गया ॥ १ ॥

नयनानि नृणामनारतं जलजातानि नृणां तनूरिमाः।
अघदूषितदुस्स्पृशा जलैरघहीनाः सकला वितन्वते ॥ २ ॥

लोगोंके नेत्र जो जलसे पैदा हुए हैं, मनुष्योंके पापसे दूषित होनेके कारण स्पर्श करनेके अयोग्य शरीरोंको जलसे पापहीन बना रहे हैं ॥ २ ॥

अथ केन निशम्य मूर्छिता वधवार्ता बत मोहनस्य ताम्।
अथ के न गता निराशतां जननी भूमिमवेक्ष्य दुर्गताम् ॥ ३ ॥

श्री महात्माजीके मारे जाने की बात सुनकर कौन मूर्छित नहीं हुआ ? माता भूमिकी दुर्दशा देखकर कौन निराश नहीं हुआ ? ॥ ३ ॥

न कदापि विलोकिता मही भवनाथेन दुरन्तकेदृशी।
न कदापि विलापवर्णकैर्विलपन्तीयमुपश्रुता क्वचित् ॥ ४ ॥

भगवान्ने कभी देखा नहीं था कि पृथिवीकी ऐसी दुर्दशा होती है। पृथिवी विलाप करती हुई भी कभी सुनी नहीं गयी ॥ ४ ॥

गत एव मनोर्तिशामको गत एवास्ति मनोरथाश्रयः।
गत एव मनः शमोद्य मे गत एवाखिलसम्पदां निधिः ॥ ५ ॥

मनके दुःखोंको शान्त करनेवाला चला गया ! मनोरथोंका एकमात्र आश्रय भी चला गया ! मनकी शान्ति भी आज चली गयी ! सर्वसम्पत्तियोंका निधि आज चला गया ॥ ५ ॥

गत एव जगत्सदाश्रयो गत एव प्रतिभापराश्रयः।
इति दूनमना नभोमणिस्तमसाच्छन्न इहाभवत्क्षणात् ॥ ६ ॥

जगत्का श्रेष्ठ आश्रय चला गया। प्रतिभाका अद्भुत आश्रमी चला ही गया! इस प्रकारसे दुःखितमनवाले भगवान् सूर्य भी क्षण भरमें ही अंधकारसे ढँक गये ॥ ६ ॥

जगदन्धतमिस्रलेपितं सहसा जातमनातपं तदा।
हृदये समुदीतवेदनां पुरतः कस्य विकाशयेदद: ॥ ७ ॥

जगत् घोर अन्धकारसे लिप गया। संसार सहसा प्रकाशहीन हो गया। अब वह अपने हृदयकी वेदनाको किसके आगे प्रकाशित करेगा? ॥ ७ ॥

जनतातिविषादविह्वला विरता सर्वकृतेस्तदारता।
पशुपक्षिगणा अपि प्रभारहिता रावहितास्तदाभवन् ॥ ८ ॥

मानवसमूह उस समय विषादसे व्याकुल हो गया। सब कामोंसे उस समय जनता अरता = प्रेमशून्य हो गयी। पशु-पक्षियोंका समुदाय भी प्रभारहित और राव-हित = शब्दहीन हो गया ॥ ८ ॥

मम राष्ट्रपिता पिता गतो जननी चाद्य दिवं गता मम।
द्युतिरेव ममाद्य चक्षुषोर्व्यतियाता परमार्थदर्शिनी ॥ ९ ॥

मेरे राष्ट्रपिता चले गये। पिता और माता आज स्वर्गवासी हुए। परमार्थ दर्शन करनेवाली मेरी आँखोंकी ज्योति चली गयी ॥ ९ ॥

हृदयं मम निर्गतं तनुं विरहय्याद्य निरर्थिकामिव।
क्वचिदेव गतं मनोपि मे चिरसंगित्वमपालयत्तथा ॥१०॥

इस निरर्थक जैसे शरीरको छोड़कर मेरा हृदय चला गया! चिरकालके सम्बन्धको न पालन करता हुआ मेरा मन भी कहीं चला गया ॥१०॥

पतितो यदि संकटेधुना सविधे कस्य नु यानि चिन्तितः।
क इहास्ति हरेन्मम व्यथां मधुरेणैव वचश्चयेन यः ॥११॥

आज मैं संकटमें पड़ गया हूँ। अब मैं चिन्ताग्रस्त होकर किसके पास जाऊँगा ? अब यहाँ कौन है जो मीठे शब्दों से मेरी व्यथाको दूर करेगा ? ॥ ११ ॥

इति हन्त जवाहरः परं व्यलपद्राष्ट्रपितुः कृते मुहुः।
सततं हि महात्मनात्मना पयसा प्रेममयेन पालितः ॥१२॥

सदा ही महात्माजीने स्वयं जिन्हें प्रेममय दूधसे पाला था वह पण्डित जवाहरलालनेहरू राष्ट्रपिताकेलिये इस प्रकार विलाप करते थे ॥१२॥

न हि रोचिरदः प्रकाशते परितोस्मानिह साम्प्रतं ज्वलत्।
वयमद्य समावृताः परं तमसामेव चयेन भारते ॥१३॥

अब हमारे चारों ओर जलती हुई ज्योति प्रकाशित नहीं है। आज हम भारतमें अन्धकारसे घिर गये ॥१३॥

न हि राष्ट्रपिताद्य वर्तते गुरुदेवो गत एव मां त्यजन्।
परमः सुहृदस्तमन्वगादधुना को हि निषेव्यतां मया ॥१४॥

आज मुझे छोड़कर राष्ट्रपिता चले गये, गुरुदेव चले गये, परम सुहृद् चले गये। अब मैं किसकी सेवा करूँगा ? किसका आश्रय लूँगा ? ॥ १४ ॥

रुचिरः प्रखरप्रकाशकृन्नहि देहोस्ति ततो न वा क्षतिः।
सकलं स परीत्य संस्थितः प्रतिभासाय भवत्यलं सदा ॥१५॥

आज वह प्रखर प्रकाशवाला-तेजस्वी सुन्दर देह नहीं है, तो कोई क्षति नहीं। वह तो सर्वत्र व्यापक होकर सदा प्रकाश देनेकेलिये समर्थ हैं ॥ १५ ॥

निखिलोद्य भवस्तमोनिधौ परिमग्नः खलु माययावशः।
परिहर्तुमनेन दीपितं विजरज्योतिरिदं ज्वलेत्सदा ॥१६॥

अज्ञानसे लाचार होकर आज सम्पूर्ण जगत् अन्धकार महासागरमें अवश्य ही डूबा हुआ था। उस अन्धकारको दूर करनेकेलिये महात्माजी ने यह अमर ज्योति सुलगायी है ॥ १६ ॥

यदुपादिशदेष नो गुरुर्निखिलागम्यसदागमक्षमः ।
नियतं हि तदस्ति शाश्वतं परमं सत्यमनञ्जनं शिवम् ॥१७॥

जो उस सत् शास्त्रमें समर्थ थे जिसे सब नहीं जान सकते थे उन हमारे गुरुदेवने हमको जो उपदेश दिया है वह अवश्य ही नित्य है, परमसत्य है और निरञ्जन है ॥ १७ ॥

स गतः परिहाय नस्तदा तदपेक्षा नियताभवद्यदा ।
नियतौ विधिना विलेखितं निपुणोपि प्रतिवर्तयेत कः ॥१८॥

वह हमें तब छोड़कर चले गये जब हमें उनकी अधिक आवश्यकता थी । ब्रह्माने भाग्यमें जो कुछ लिखा हो उसे कौन मिटा सकता है ? ॥१८॥

न वयं समचिन्तयाम यत्तदपेक्षा न कदापि विद्यते ।
विधुरिच्छति कर्हिचिन्न हि द्युमणेः क्वापि वियोगसन्ततिम् ॥१९॥

हमने कभी सोचाही नहीं कि उनकी अपेक्षा नहीं है । चन्द्र कभी भी सदाकेलिये सूर्यका वियोग नहीं ही चाहता है ॥ १९ ॥

पतिता वयमद्य दुर्दिने विपदम्भोनिधिवीचिताडिताः ।
अथ नः परिहाय तद्गतिर्न विषह्या कथमप्यरिष्टदा ॥२०॥

आज हम दुर्दिनमें पड़े हैं । विपत्तियोंका सागर अपने तरङ्गोंसे हमें ताड़न कर रहा है ऐसे समयमें हमको छोड़कर उसका चले जाना किसी प्रकार भी सह्य नहीं है और दुःख देनेवाला है ॥२०॥

बहुभिर्दिनमासवृन्दकैर्बहुभिर्वर्षगणैरपीह वा ।
विषमुप्तमानिद्रमत्र यत्फलितं नो विषमाय तत्खलु ॥२१॥

बहुत दिनों और महीनोंमें, बहुत वर्षोंसे भी यहाँ जो अनवरत विष बोया गया है वह आज हमारे कष्टकेलिये फला है ॥ २१ ॥

विषमस्थितिशालिभिस्त्वियं तरणीयैव विपत्सरिद्भवेत् ।
गुरुशिक्षितवर्त्मनैव तत्पदगामित्वभरेण संभृतैः ॥२२॥

हम आज विषम स्थितिमें हैं । गुरुके बताये मार्गसे उनकी

अनुगामिताके भारसे भरे हुए हमें विपत्ति-नदी पार करनी ही है ॥ २२ ॥

न हि येऽत्र भवन्ति विह्वलाः परिवीक्ष्यैव भयास्पदागमम् ।
त इवेह वयं विपन्निधिं निखिलं धर्षितुमुत्सहामहै ॥२३॥

जो लोग भयस्थानको देखकर ही व्याकुल नहीं हो जाते उन्हींके समान हम इस समस्त विपत्सागरको पार करनेका उत्साह रखें ॥ २३ ॥

गुरुदर्शितवर्त्मना व्रजन्न तदन्तर्व्यथयान्यहं क्वचित् ।
अवलोक्य मदुत्पथायनं हृदयं तस्य सहिष्यते व्यथाम् ॥२४॥

हम अपने गुरुके ही दिखाये मार्गसे चलते हुए उनके हृदयको कभी व्यथित नहीं करेंगे । हमारे उत्पथगमनको देखकर उनके हृदयको पीड़ा होगी ॥ २४ ॥

वयमैक्यमुपास्य सर्वथा जनिभूमेर्विपदां निषेधिनीम् ।
तनवाम सतीं क्रियां सदा परिवर्ज्यैव विपन्निधायिनीम् ॥२५॥

हम सब एक होकर जन्मभूमिके दुःखको दूर करनेवाले अच्छे काम करें और दुःखदेनेवाले कामको छोड़ दें ॥ २५ ॥

अधिनेतृपदं गता जना बहवो ध्वंसकरीं क्रियां प्रति ।
रतिमादधते निरन्तरं प्रकृतेरस्ति हि दुर्निवार्यता ॥२६॥

बहुतसे नेताभी ऐसी क्रिया करते हैं जिसमेंसे नाश ही पैदा होता है । जिसका जैसा स्वभाव है वह मिटाया नहीं जा सकता ॥ २६ ॥

मतिमद्भिरुपासितः स नो गुरुरासीद्विरलो महाजनः ।
रचनात्मककर्मकर्तृता नितरां संपरिषेवते स्म तम् ॥२७॥

सभी विद्वान् जिनकी उपासना करते थे वह हमारे गुरु विरल महापुरुष थे । रचनात्मक कर्म करना उन्हें प्रिय था ॥ २७ ॥

स हि राष्ट्रपिता महागुरुर्निखिलस्यैव मनुष्यताभृतः ।
असता दुरितेन नित्यशो बलतो निर्भयतोऽप्ययुध्यत ॥२८॥

वह हमारे राष्ट्रपिता सभी मनुष्योंके महागुरु थे। उन्होंने सदा ही असत्यरूप पापके साथ बलसे और निर्भयतासे युद्ध किया है ॥२८॥

द्विषतां न विनाश ईहितो गुरुणा नः कथयाम्यधिक्षमम् ।
परिवर्त्य च शत्रुमानसं स्ववशीकर्तुमपैक्षतानिशम् ॥२९॥

हमारे गुरुने कभी भी पृथिवीपर शत्रुके नाशकी इच्छा नहीं की। वह तो शत्रुओंके मनको केवल बदलकर सदा उनको अपने वशमें लाना चाहते थे ॥ २९ ॥

समभाव उदेतु नः पुरो विषयत्वं प्रतियातु सर्वथा ।
इति तस्य सुपूजनं भवेत्स्मृतिरप्यस्तु च तस्य तादृशी ॥३०॥

हमारे सामने समभावका उदय हो और विषमता सदा दूर जाय। ऐसा करना ही उनकी सर्वश्रेष्ठपूजा होगी तथा उनकी वैसी ही स्मृति बनी रहेगी ॥ ३० ॥

अथ भारतमस्ति भाग्यभुग् जगदैतिह्यनरोत्तमोत्तमः ।
समवातरदस्य मृत्तिकानिचये चारुविचारसंनिधिः ॥३१॥

भारतवर्ष भाग्यशाली है कि, इसकी माटीमें, संसारके इतिहासमें सर्वश्रेष्ठ महापुरुष—जो सुन्दर विचारोंका महान् कोष था, अपनेको प्रकट किया ॥ ३१ ॥

अथ तस्य महत्त्वमुत्तमं निखिलालोकितलोकसत्तमम् ।
निजदेशविदेशभूमिषु प्रभुता तस्य पदाङ्कमार्पयत् ॥३२॥

जगत्में सबने जो देखा होगा उससे भी उत्तम उनके महत्त्वने और उनकी प्रभुताने स्वदेश और विदेशकी भूमिमें अपना पैर जमा दिया है ॥ ३२ ॥

स हि तत्त्वविदां महागुरुः प्रतिभाशालिकुलाकुलः सदा ।
अपराजितशक्तिसत्पतिर्यत आध्यात्मिकवर्त्मसद्गुरुः ॥३३॥

वह तत्त्ववेत्ताओंके महागुरु थे। प्रतिभाशाली लोगोंकी उनके पास सदा भीड़ रहती थी। वह ऐसी शक्तिके सत्पति थे जो कभी पराजित नहीं हुई, क्योंकि वह आध्यात्मिक मार्गके सद्गुरु थे ॥ ३३ ॥

**दश पञ्च दिनानि मानसे तपतां नो गतवन्ति कुत्रचित्।**
**अपि वारिभिरेभिरुद्गतैर्नयनानां हृदि शुद्धता भवेत् ॥३४॥**

हृदयमें संताप करते हमारे पन्द्रह दिन कहीं चले गये। यदि आँखोंसे निकले हुए इस जलसे हमारे हृदयकी शुद्धता हो जाती तो कैसा अच्छा होता ॥ ३४ ॥

**नयनाश्रुजलेन पावितं हृदयं स्याद्यदि हन्त नस्तदा।**
**वयमाहितयोगसाधना निकटे तस्य भवेम संमताः ॥३५॥**

यदि इन आँसुओंसे हमारा हृदय पवित्र हो जाता तो हम योगसाधन करके उनके निकट पहुँच जाते ॥ ३५ ॥

**जगतः प्रतिकोणमाततप्रकृतीनामथ भूभुजामपि।**
**बहुमान्यपदाधिकारिणामुपयातानि दलान्यनेकशः ॥३६॥**

जगत्के कोने-कोनेसे समस्त प्रजा और राजाओंके तथा बड़े-बड़े पदाधिकारियोंके अनेक पत्र आये हैं ॥ ३६ ॥

**निखिला अपि मानवाः परां सममन्यन्त महानराकृतिम्।**
**प्रियमित्त्रमिति प्रमापको मम पक्षस्य सदेत्यसौ मतः ॥३७॥**

सभी मनुष्य उस महापुरुषकी श्रेष्ठ आकृतिका आदर करते थे। तथा उन्हें अपना मित्र मानते हैं और सभी यह मानते थे कि वह हमारे पक्षके समर्थक हैं ॥ ३७ ॥

**अधुना न हि कोपि जीवितुं क्षमते सत्यमिदं न पूर्ववत्।**
**असुषु प्रतिगोदमत्र नः सततं तिष्ठति सद्गुरुर्यतः ॥३८॥**

वह सद्गुरु हमारे प्राणोंमें और हमारे मस्तिष्कके प्रत्येक गूदेमें

सतत निवास कर रहे हैं अतः यह सत्य है कि हममेंसे कोई भी पहलेके समान तो नहीं ही जी सकता ॥ ३८ ॥

**न च कांस्यमयी न काञ्चनी प्रतिमा तस्य कदाप्यपेक्ष्यते ।**
**उपदेशवचो महायतेरनुसर्तव्यमिति प्रपूजनम् ॥३९॥**

उनकी काँसेकी अथवा सोनेकी मूर्तिकी कभी आवश्यकता नहीं है। उस महायति के उपदेशोंका अनुसरण करना यही उनकी बड़ी पूजा है ॥३९॥

**मृतये फलिजीवनाय वा निरमाद्यां स महोत्तमां सृतिम् ।**
**अवलम्ब्य च तां प्रयास्यतामभिधर्मो भविता महानिति ॥४०॥**

मरनेके लिये अथवा सफल जीवनके लिये उन्होंने जो सर्वोत्तम मार्ग बनाया है उसका अवलम्बन करके जो चलेंगे उनको महान् धर्म होगा ॥ ४० ॥

**स भवन्निह हिन्दुसन्मणिर्निखिलानामपि मूर्धसन्मणिः ।**
**अभवन्बहवोत्र हिन्दवः समतां तस्य न केपि तन्वते ॥४१॥**

वह एक अच्छे हिन्दू होते हुए भी हिन्दू और अहिन्दू सबके शिरोमणि थे। यहाँ बहुतसे हिन्दू हुए हैं परन्तु कोई भी उनकी समानता नहीं कर सकता ॥ ४१ ॥

**असमैव च भारतीयता रुचिरा तस्य मनो जनुष्मताम् ।**
**नियतं नितरां हरिष्यते निजदेशप्रियताभृतां सताम् ॥४२॥**

उनकी भारतीयता भी अपूर्व थी—अनुपम थी। उत्तम देशभक्तोंके मनको अवश्य ही वह सदा अपनी ओर खींचेगी ॥ ४२ ॥

**स च सन्नपि हिन्दुरुत्तमो निखिलेष्वेव जनेष्वभिन्नताम् ।**
**समपश्यदुदारधीः सदा श्रुतिसिद्धान्तविदां न भिन्नता ॥४३॥**

उन्होंने एक उत्तम हिन्दु होकर भी सब मनुष्योंमें सदा अभेद (समानता) ही देखा है। वैदिक सिद्धान्तोंको जाननेवालोंमें भेदबुद्धि होती ही नहीं ॥ ४३ ॥

निखिलानि मतानि तन्मते पृथिवीगर्भसृतानि वस्तुतः।
सततं दधते समानतां नतमौन्नत्यमदत्र नो मतम् ॥४४॥

उनके मतसे पृथिवीपर जितने भी धर्म फैले हुए हैं वह वस्तुतः परस्पर समानता ही धारण करते हैं। उनमें कोई नीचा और कोई ऊँचा नहीं है ॥ ४४ ॥

स विमृश्य महत्प्रयोजनं सकलेष्वेव मतेषु जातिषु।
नितरां समवैक्षतैकतामिति सर्वागममत्यशेत सः ॥४५॥

वह किसी महान् प्रयोजनका विचार करके सब मतोंमें और सब जातियोंमें एकताका दर्शन करते थे। अतः वह सभी आगमोंसे आगे बढ़े हुए थे ॥ ४५ ॥

मनुजस्य भवेदपेक्षितं किमिति प्रेक्ष्य सुरोपमः सदा।
परिपूर्तय एव तस्य स श्रयते स्मात्र निरन्तरं श्रमम् ॥४६॥

मनुष्यको किस वस्तुकी अपेक्षा है उसे विचार कर वह देवता समान बापूजी उसीकी पूर्तिकेलिये निरन्तर श्रम करते थे ॥ ४६ ॥

परिवीक्ष्य दरिद्रताभुजां महतीमापदमाशु चिन्तया।
अभवद्गतनिद्रजीवना करुणामूर्तिरसौ महीयसी ॥४७॥

गरीबोंकी आपत्तिको देखकर चिन्तासे उन दयालुकी नींद उड़ जाती थी ॥ ४७ ॥

स समर्प्य निजं स्वभावतः परपीडाशितकण्टकस्पृशाम्।
अधिसेवमनन्यभक्तितोभवदानन्त्यधराधुरातिगः ॥४८॥

दूसरोंके द्वारा की गयी हुई पीड़ारूप तीक्ष्णकाँटा जिन्हें लगा हो उनकी सेवामें स्वभावसे ही अनन्यभक्तिसे अपनेको अर्पण करके अनन्तता युक्त पृथिवीकी कक्षासे बाहर निकल गये—लोकोत्तर बन गये ॥ ४८ ॥

स विहृत्य जनिक्षमोरसि प्रहृतापारगतद्विपद्वुले।
गतवानवसन्नमोहजव्यथ एवाक्षणभङ्गुरां गतिम् ॥४९॥

जन्मभूमिकी जिस छातीपरसे अपार विपत्तिके बलको नष्ट कर दिया था उसीपर विहार करके अज्ञानकी कोई भी व्यथा जिनमें नहीं थी वह राष्ट्रपिता स्थायी गति–मोक्षधामको प्राप्त हो गये ॥ ४९ ॥

**निखिलं जगदद्य रोदिति प्रतियाते त्वरितो जगद्गुरौ ।**
**न कदापि भवोनुभूतवान्विरलामीदृशमेकतां नृणाम् ॥५०॥**

उनके यहाँसे परधाम चले जानेपर सम्पूर्ण जगत् रो रहा है । संसारने मनुष्योंकी ऐसी एकता कभी देखी नहीं थी ॥ ५० ॥

**अथ पाकनिवासिनामपि श्रयते दुःखशिखां भृशं मनः ।**
**विनिपात्य कटुत्वमुद्गतं बहुना मासगणेन दुःखदम् ॥५१॥**

कितने ही महीनोंसे जो दुःखप्रद कटुता पैदा हुई थी उसे दूरकरके पाकिस्तानके लोग भी आज दुःख अनुभव कर रहे हैं ॥ ५१ ॥

**अविभक्तमिदं यदाभवद्गुरु राष्ट्रं हृदयैकता तदा ।**
**अभवत्परिवीक्षिताद्य सा निखिलैरेव जगन्निवासिभिः ॥५२॥**

जब यह महान् राष्ट्र विभक्त नहीं हुआ था उस उमय लोगोंने जो एकता यहाँ देखी थी उसी एकताको सम्पूर्ण जगत्की प्रजाने आज देखा है ॥ ५२ ॥

**अभिवाञ्छितमत्र तेन यद्धृदयैक्यं ननु हिन्दपाकयोः ।**
**मरणेन तदाहितं क्षणान्महतां मृत्युरपीह सत्क्रियः ॥५३॥**

राष्ट्रपिता यहाँपर भारत और पाकिस्तानके हृदयकी एकता चाहते थे । वह एकता उनके मरणसे क्षणभरमें सिद्ध हो गयी । सत्य है, महापुरुषोंका मृत्यु भी उत्तम कार्य करता है ॥ ५३ ॥

**न वयं बहुमूल्यतां च तां प्रतियातस्य गुरोर्विचिन्महे ।**
**यत एव स आत्मरूपतां प्रतिपन्नः किल मादृशैः सह ॥५४॥**

हमारे गुरुदेव चले गये इसका हम बहुत मूल्य नहीं करते हैं । क्योंकि वह तो हम लोगोंके साथ यहाँ ही आत्मरूप बन गये हैं ॥ ५४ ॥

अतिवेगपरायणाः प्रजा अनुयास्यन्त्य इहोत्सुका यतिम् ।
अचिरेण चिरेण वापि ताः परिवक्ष्यन्ति तदर्घमातुराः ॥५५॥

भारतीय प्रजा बहुत वेगके साथ राष्ट्रीयताका अनुगमन करेगी। और वही देरसे या जल्दीसे उनका मूल्य करेगी ॥ ५५ ॥

सुफलं दुरितेन नाप्यते यदि वाप्येत न तद्धि सत्फलम् ।
समजूघुषमेतदन्वहं प्रतिपन्नः शुचि सत्यवर्त्म सः ॥५६॥

उन्होंने पवित्र सत्यमार्गपर आरूढ़ रहकर सदा ही यह घोषणाकी है कि दुष्ट कर्मसे कभी भी सत्फल नहीं मिलता है। यदि सत्फल जैसा मालूम हो तो भी वह सत्फल नहीं ही है ॥ ५६ ॥

अथ सत्यपरायणेन चेत्त्रुटिरल्पाप्यवलोकितात्मनि ।
घुषिता नचिरेण तेन सा शिखराणि प्रतिपद्य भूभृतः ॥५७॥

सत्यपरायण राष्ट्रपिताने यदि अपनेमें जरा भी त्रुटि देखी हो तो, शीघ्र ही पर्वतके शिखरोंपर चढ़ चढ़कर उसकी घोषणा कर दी है ॥५७॥

अथ दोषमसत्यमर्दितुं नितरां प्रैरयदात्मसंस्थितः ।
यतिराजममुं महाप्रभः सततं सत्यमहेश्वरः परः ॥५८॥

अन्तरात्मामें सदा स्थित महती प्रभावाला सत्यरूप परमात्मा, असत्यरूप दोषको नष्ट करनेकेलिये उन्हें सदा प्रेरणा करता रहता था ॥ ५८ ॥

परिणामपरीक्षणोद्भयादवहेलामकरोन्न तस्य सः ।
अनलं विनिपत्य दुःखिनां परिरक्षानियतोभवन्नृणाम् ॥५९॥

परिणामकी परीक्षाके भयसे—क्या परिणाम आवेगा इस भयसे उन्होंने सत्यकी कभी अवहेलना नहीं की। आगमें पड़कर भी दुःखियोंकी रक्षामें वह लग गये थे—लग जाते थे ॥ ५९ ॥

अपमानभुवं प्रसारिता निखिला अन्त्यसमुद्भवाः प्रजाः ।
अनुसृत्य हि सत्यमर्तिहं गुरुणा तेन सताधिरक्षिताः ॥६०॥

सभी अन्त्यज—हरिजन अपमानित कर दिये गये थे। दुःखनाश करनेवाले सत्यका अनुसरण करके ही सद्गुरुने उनकी रक्षा की ॥ ६० ॥

अथ सत्यसमर्चनादसौ समभून्मानवतासुरक्षकः ।
अथ सत्यसमादरादसावभवत्सर्वजनैः समादृतः ॥६१॥

सत्यकी पूजा करनेसे ही वह मानवताके रक्षक बने थे। और सत्यके आदरसे ही वह सबके आदरके पात्र थे ॥ ६१ ॥

स हि यत्र धरातले स्थितस्तदभून्मन्दिरमुज्ज्वलं सताम् ।
अदधात्पदकञ्जमात्मनः पृथिवी तीर्थमभून्मनोहरम् ॥६२॥

उन्होंने जहाँ निवास किया वह स्थल ही सज्जनोंकेलिये सुन्दर मन्दिर बन गया। और उन्होंने जहाँ अपना चरणकमल रखा वही पवित्र तीर्थ बन गया ॥ ६२ ॥

न शरीरमवाप्स्यतेधुना यतिराजस्य महाप्रयत्नतः ।
अजरस्य यतो विनश्वरं न हि संतिष्ठत आशु नश्यति ॥६३॥

महान् प्रयत्नसे भी अजर यतिराजका शरीर अब नहीं मिल सकेगा। क्योंकि वह विनाशी था। विनाशी वस्तु स्थिर नहीं रहती, शीघ्र नाश पाती है ॥ ६३ ॥

न स वीक्षितुमत्र शक्यते कथमप्येव परिश्रमैरपि ।
न हि तस्य मुखध्वनिस्तथा भविता वा श्रुतिगोचरः पुनः ॥६४॥

परिश्रम करनेपर भी किसी प्रकारसे अब हम उन्हें देख नहीं सकते। और उनके मुखसे अब वह शब्द भी पुनः सुननेको नहीं मिलेगा ॥ ६४ ॥

सकलं हि शरीरगं गतं परमक्षय्यमनोहरा स्मृतिः ।
सततं हृदयेश्वरीव सा सशरीरा परिवर्त्स्यति ध्रुवम् ॥६५॥

शरीरके साथकी सभी ही चीजें उनकी चली गयीं। परन्तु उनकी वह मनोहर याद हृदयेश्वरीके समान सदा बढ़ती ही रहेगी ॥ ६५ ॥

गुरुणा परिशिक्षिता वयं निरता देशहितेषु संततम् ।
परितः समवेत्य निर्विषा विदधामात्र हितप्रदाः क्रियाः ॥६६॥

गुरुदेवने हमें सिखाया है अतः हम देशहितमें लग गये हैं। हमको चाहिये कि सब ओरसे निर्विष होकर—जहर त्याग करके हितकारक काम करें ॥ ६६ ॥

सततं हितमेव बोधयन्गतरागादिदुरन्तदुर्गुणः ।
अधिराष्ट्रपिता ह्यशिक्षयत्कथमुत्थातुमिहाल्पकाच्च नः ॥६७॥

सदा हितका उपदेश करनेवाले रागादि दोषोंसे रहित हमारे राष्ट्र-पिताने हमको सिखाया है कि नीचेसे ऊँचे कैसे आना चाहिये ॥ ६७ ॥

विधिना परिमृष्टवर्त्मना विरहय्यात्मविचारगोनताम् ।
अमुनैव परेषु संस्थितान्सुगुणानाप्तुमधिक्षमामहै ॥६८॥

विधिपूर्वक साफ किये गये मार्गसे अपने विचारकी न्यूनताको दूर करके इसी मार्गसे अन्योंमें रहे हुए सद्गुणको प्राप्त करनेमें समर्थ हो सकते हैं ॥ ६८ ॥

गुरवो यतिजीवनान्तिमा ननु मासास्तु कियन्त एव ते ।
ज्ञपयन्ति तदीयगौरवं महतीं तस्य हृदोऽप्युदारताम् ॥६९॥

राष्ट्रपिताके जीवनके अन्तिम महीने तो कितने भारी थे। वही उनके गौरव और उनके हृदयकी उदारताको कह रहे हैं ॥ ६९ ॥

विरलः प्रतिपद्यते मृतिं कृतकर्मा जगतीह तद्विधाम् ।
निखिलैर्न नरैरुपासितां विबुधैर्नापि सुरैर्न चापरैः ॥७०॥

जिस प्रकारका मृत्यु उन्होंने प्राप्त किया है उसको तो विरल ही प्राप्त करते हैं। किसी मनुष्यने, विद्वान्ने, देवताने, दानवने ऐसा मृत्यु नहीं प्राप्त किया है ॥ ७० ॥

परिमातुमशक्य एव तद्गुणराशिर्निखिलैर्मनूद्भवैः ।
न हि वर्णपरम्परास्ति नः शिरसि श्लाघितुमेनमद्वयम् ॥७१॥

सारे ही मनुष्य उनके गुणोंको माप नहीं सकते। हमारे सिरमें तो इतनी वर्णमाला भी नहीं है कि हम उनकी प्रशंसा कर सकें ॥ ७१ ॥

स भवे कृपया समागतश्चिरमत्रावसतिं समातनोत्।
उदद्दीधरदात्मजन्मभूभरमन्ते च गतः शिवं पदम् ॥७२॥

वह कृपा करके इस संसारमें आये और बहुत दिनों तक रहे। अपनी जन्मभूमि माताका भार हटाया और अन्तमें मोक्षधाम चले गये ॥ ७२ ॥

अलमस्तु च तत्प्रशंसया न हि तां स प्रतिपालयेदपि।
गतयोस्तु महत्पदाब्जयोर्जगतार्प्यन्त हि शस्तिमालिकाः ॥७३।

उनकी प्रशंसा हम क्या करें? वह उसकी इच्छा भी तो नहीं रखते। जगत्‌ने तो मरनेपर ही महापुरुषोंके चरणोंमें प्रशस्तिमाला पहिनायी है ॥ ७३ ॥

नितरां वयमास्म बालका महतस्तस्य गुरोः प्रियोत्तमाः।
स च योग्यतया पराहतैः कथमस्तु स्तुत एव दुर्विधैः ॥७४॥

हम उस महान् गुरुके सर्वप्रिय बालक थे। हम योग्यताहीन हुए हैं, दुर्गत हैं, हमसे उनकी स्तुति कैसे की जा सकती है? ॥ ७४ ॥

पृथगेव गतास्मदद्य सा प्रतिभाभा च चिराय यद्यपि।
अनुशासनमेव रुध्महे बत तस्यैवमिति प्रचिन्तनैः ॥७५॥

वह प्रतिभा और वह आभा आज हमसे यद्यपि चिरकालके लिये अलग हो गयी हैं। तथापि उनकी आज्ञाका–शिक्षाका पालन करें। उसे पालन करनेका मार्ग इसी प्रकारसे उनका गुणचिन्तन ही है ॥ ७५ ॥

वयमद्य विनिर्मिताः सता गुरुणा तेन महामनस्विना।
उचितेन पथैव मादृशाः कथमर्हाम इदं प्रभाषितुम् ॥७६॥

उस महान् गुरुने हमको उचित मार्गसे ही बनाया है, इसे हम कैसे कह सकते हैं? ॥ ७६ ॥

वयमाप्य महानलाद्बहूञ्ज्वलतः शक्तिभृतः कणांस्ततः।
अनुगन्तुमतः क्षमाः सदा प्रथितेनैव पथा च तेन हि ॥७७॥

हमने उस महानलसे जलती हुई शक्तिशाली बहुतसी चिनगारियाँ प्राप्त की हैं। अतः हम उनके बनाये मार्गसे जानेके लिये समर्थ हैं ॥७७॥

स समैहत सस्पृहं सदा श्रमकर्मोत्मयमादिभावनाः।
हृदये न उदेतुमर्थदा गुणगृह्या अभवाम नो वयम् ॥७८॥

उन्होंने सदा यह इच्छा की थी कि हमारे हृदयमें मेहनतके काम करनेकी भावना उत्पन्न हो, उससे हमारी आर्थिक स्थिति अच्छी बनेगी। परन्तु हम गुणग्रहण करनेवाले न बनें ॥ ७८ ॥

विगतासु समासु विंशतौ दशसून्नत्यभिलाषतः सता।
निरमीयत देश एष तं विरलां त्यागभुवं ह्यनाययत् ॥७९॥

गत ३० वर्षोंमें उन्होंने इस देशका, इसे उन्नत बनानेकी इच्छासे निर्माण किया है और हमको अद्वितीय त्यागभूमिमें पहुँचा दिया है ॥७९॥

अवदातयशा महागुरुः प्रबलं विघ्नमवाप्य मार्गगम्।
कुपितो न कदापि नो कटु स्मयमानो वचनं स उक्तवान् ॥८०॥

निर्मल यशवाले महागुरु रास्तेमें प्रबल विघ्नको देखकर न तो कभी क्रुद्ध हुए और न कभी कटुवचन बोले ॥ ८० ॥

हृदये स निपीडितः परं स्वयुगीयः सकलस्य सद्गुरुः।
चलितान्सुपथो निरीक्ष्य को निजशिष्यान्न हि खिद्यते गुरुः ॥८१॥

विघ्न आनेसे वह हृदयमें दुःखित तो होते थे। वह सबके अपने समयके सद्गुरु थे। विघ्न आनेका अर्थ है उनके अनुयायियोंमें किसी दोषका आ जाना। इसीलिये वह दुःखी होते थे। अपने शिष्योंको सन्मार्गसे चलित देखकर किस गुरुको खेद नहीं होता ? ॥ ८१ ॥

समयः स विभास्यति स्वयं विगतेष्वत्र समाशतेषु वा।
अथ गांधियुगीयसिद्धिकाः उपचेतुं ह्यपचायितुं च वा ॥८२॥

सौ वर्ष बीत जानेके बाद गांधीयुगकी सिद्धियोंको बढ़ाने या घटानेका वह समय स्वयं आवेगा ॥ ८२ ॥

स भविष्यत आत्मचिन्तकः समतीतस्य च भारतस्य वा ।
महती प्रतिभाभवच्छिवा विरचय्यास्य च वर्तमानताम् ॥८३॥

वह भविष्यत् तथा अतीत दोनों ही भारतके आत्मचिन्तक थे । तथा इसके वर्तमानकालका निर्माण करके उनकी महती प्रतिभा कल्याणकारिणी सिद्ध हो गयी ॥ ८३ ॥

यज्ज्योतिः प्रकटयितुं महायतीन्द्रः,
स्वात्मानं परमकृपानिधि र्व्यहौषीत् ।
अज्ञानान्धवृतमनोनिले यथेच्छं,
तज्जीयात्सततमितीव नोस्ति कार्यम् ॥८४॥

जिस ज्योतिको प्रगटानेके लिये परमदयालु महायतिने अपनेको अज्ञानरूप अन्धकारसे घिरे हुए लोगोंके मनरूप अग्निमें स्वेच्छासे होमकर दिया वह ज्योति सदा विजयी रहे, यही हमें करना है ॥ ८४ ॥

सज्जन्मा निजबलबुद्धितः स्वतन्त्रां,
जन्मक्ष्मामरचयदाशु दीर्घकालात् ।
दुर्बद्धां बहुविधलोभरज्जुबद्धै—
रद्यापीह विजयते स देवप्रभः ॥८५॥

पवित्रजन्मवाले महात्माजीने अपने बल और बुद्धिसे चिरकालके पश्चात् उस मातृभूमिको स्वतन्त्र बनाया जिसे अनेक प्रकारके लोभरूप डोरीसे बँधे हुओंने बुरी तरह बाँध रखा था । देवसमान कान्तिवाले वह आज भी विजय पा रहे हैं ॥ ८५ ॥

सत्यज्योतिरिह प्रकाश्य विमलं हिंसामुदस्यैव वा,
धर्माणां प्रशमय्य सर्वकलहं संस्थाप्य मैत्रीं मिथः ।
स्पृश्यास्पृश्यमुधाविचारजतमोजन्यातिविद्वेषणं,
सर्वं तत्परिहृत्य मुक्तिपदवीं प्राप्य स्थितो राजताम् ॥८६॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
सप्तदशः सर्गः

यहाँ निर्मल सत्यज्योतिको जलाकर, हिंसाको मिटाकर, धर्मोंके झगड़ोंको शान्त करके, परस्पर मित्रता स्थापित करके, यह स्पृश्य और यह अस्पृश्य है इस प्रकारके मिथ्या विचारसे पैदा हुए अज्ञानसे उत्पन्न हुए द्वेषको दूर करके, मुक्तिपदको पाकर—ब्रह्मस्वरूप होकर महात्माजी शोभा दे रहे हैं ॥ ८६ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
सप्तदशः सर्गः



# अष्टादशः सर्गः

जवाहर उवाचेदं पुनरुद्दिश्य तं यतिम् ।
क्षणेनैव गतः क्वासावहो विधिविडम्बनम् ॥ १ ॥

पण्डित श्रीजवाहिरलालजी महात्माजीको उद्देश्य करके पुनः बोले, वह क्षणभरमें ही कहाँ चले गये ? अहो विधिकी लीला ! ॥ १ ॥

गतो बापू गतो नेता सर्वेषां स सखा गतः ।
वञ्चिताः स्मो वयं चाद्य विधात्रा क्रूरकर्मणा ॥ २ ॥

सबके बापूजी गये, सबके नेता गये और सबके मित्र गये । क्रूर विधाताने हम सबको आज ठग लिया ॥ २ ॥

सर्वे वयमनाथाः स्मः पित्रा तेन विना कृताः ।
प्रयातोस्मान्विहायैव न निवर्तिष्यते पुनः ॥ ३ ॥

उस पिताके विना आज हम सब अनाथ हैं । हमको छोड़कर वह चले गये और फिर लौटेंगे नहीं ॥ ३ ॥

रोमनर्तक एतादृगितिहासो न विद्यते ।
इतिहासविपत्कालो वर्तते क्वथ्यते च हृत् ॥ ४ ॥

रोमाञ्च करनेवाला ऐसा इतिहास है नहीं । यह इतिहासकी विपत्तिका काल है । हृदय उकल रहा है ॥ ४ ॥

तेषाममोघनेतृत्वं स्वशासनमदापयत् ।
तेषां स्थितिर्भुवः पृष्ठे मानवान्तर्विशोधिका ॥ ५ ॥

उनके सफल नेतृत्वने हमको स्वराज्य दिलाया । पृथिवीपर उनका रहना मनुष्योंके हृदयको शुद्ध करनेवाला था ॥ ५ ॥

अहिंसायाः स आचार्योहिंसायाः स प्रचारकः ।
नाशक्नोद्वीक्षितुं क्वापि स हिंसारतभारतम् ॥ ६ ॥

वह अहिंसाके आचार्य थे और उसीके प्रचारक थे। वह भारतको हिंसक कभी देख नहीं सकते थे ॥ ६ ॥

अस्मान्स नीतिविभ्रष्टानवालोकत सन्मतिः।
पिता बालानिवैवास्माननैषीत्सत्पथं यतिः ॥ ७ ॥

जैसे पिता बालकको सन्मार्गमें ले जाता है वैसे ही वह हम नीति-भ्रष्टोंको सन्मार्गमें ले गये ॥ ७ ॥

प्रेम्णामितेन राजर्षिब्रह्मर्षिर्वापि योगिराट्।
कोपरूपमहारक्षोबाधितांस्त्रा तवान्सनः ॥ ८ ॥

उन राजर्षि अथवा ब्रह्मर्षि अथवा योगिराजने अपार प्रेमसे हमको कोपरूप रक्षासे पीड़ित होते हुए सदा बचाया ॥ ८ ॥

महाविपत्तिकाले नः स एव दृढ आश्रयः।
तस्मिन्गते गतोस्माकं रक्षकः शान्तिदायकः ॥ ९ ॥

भारी विपत्तिके समय वही हमारे दृढ़ आश्रय थे। उनके चले जानेपर हमारा रक्षक और हमें शान्ति देनेवाला चला गया ॥ ९ ॥

अभविष्यन्न चेत्सोद्य महाराजो महद्धृदाम्।
हिंसाराजकताद्वेषैरनङ्क्ष्यामाव्यवस्थया ॥१०॥

यदि इस समय सभी महान् पुरुषोंके हृदयके महाराज वह न होते तो हम हिंसा, अराजकता और द्वेषसे, अव्यवस्थाके कारण, नष्ट हो गये होते ॥ १० ॥

उन्मत्तेनैककोपेन जराजीर्णं कलेवरम्।
अभिन्त तस्य देवस्य निर्जरस्यामरस्य च ॥११॥

उन्मत्त एक ही कोपने अर्थात् क्रोधीने उन अजर अमर देवके वृद्धावस्थासे जीर्ण शरीरको फाड़ दिया ॥ ११ ॥

गुणिनस्तस्य भाविन्यो गुणानां जगतः प्रजाः।
स्मरिष्यन्ति करिष्यन्ति पश्चात्तापमनीश्वराः ॥१२॥

जगत्की भावी प्रजा उन गुणी बापूके गुणोंका स्मरण करेगी और असमर्थ होकर पश्चात्ताप करेगी ॥ १२ ॥

सर्वशास्त्रविदां तत्त्वज्ञानिनां ब्रह्मवादिनाम् ।
आप्तवान् गतिमच्छेद्यामभेद्यां मर्मवित्स हि ॥ १३ ॥

सर्व शास्त्रोंके जाननेवालों, तत्त्वज्ञानियों और ब्रह्मवादियोंको जो गति प्राप्त होती है उसी अच्छेद्य और अभेद्य गतिको वह प्राप्त हुए हैं ॥१३॥

धारयामो वयं तस्मै बहु श्रीपरमात्मने ।
श्रेयोस्माकमुपाहर्तुमजिहिषीत्तनुं स्विकाम् ॥ १४ ॥

हम उन परम आत्माके बहुत ऋणी हैं। उन्होंने हमको कल्याण प्राप्त करानेके लिये अपना शरीर छोड़ दिया ॥ १४ ॥

कृतवन्तो वयं पापं महदेव गतत्रपाः ।
प्रत्येकं भारतक्ष्माजा भवेयुर्नतमस्तकाः ॥ १५ ॥

हम निर्लज्जोंने बहुत बड़ा पाप किया। प्रत्येक भारतवासीका मस्तक नत रहेगा ॥ १५ ॥

अस्मास्वेको हि पापात्मा प्रमत्तश्च दुरन्वयः ।
निर्दयो निस्त्रपश्चामुं श्रीमहानिधिमाहरत् ॥ १६ ॥

हमारेमेंसे ही एक अकुलीन, प्रमत्त, निर्दय, निर्लज्ज पापीने इस श्रीके महाभण्डारको उठा लिया ॥ १६ ॥

क्षमतामीश्वरो मूढं दुरात्मानं च दुर्विधम् ।
प्रयस्याम वयं चापि क्षन्तुमेवाधमाधमम् ॥ १७ ॥

उस दुरात्माको भगवान् क्षमा करें। हम भी उस महानीचको क्षमा करनेका ही प्रयास करें ॥ १७ ॥

पिता राष्ट्रस्य जीवेच्चेदयालुर्दीनवत्सलः ।
भवेदेव दुरन्तेस्मिन्कृतान्तेन प्रतारिते ॥ १८ ॥

यदि राष्ट्रपिता जीते होते तो दुष्टके ऊपर दयालु ही होते ॥ १८ ॥

**शोकानलपरीताः स्मः प्रलयानिलसंवृताः ।**
**निराशाकलितो देशः सक्लेशः सर्वथाभवत् ॥ १९ ॥**

हम सब निराशापूर्ण हो गये। प्रलयकालके वायुसे हम घिर गये। देश निराशापूर्ण और दुःखी हो गया ॥ १९ ॥

**भगवानाशिषां राशिं वर्षत्वस्मासु सदयः ।**
**निराधारेष्वपारेत्र निमज्जत्सु तमोनिधौ ॥ २० ॥**

इस अपार अन्धकार सागरमें हम डूब रहे हैं। दयालु भगवान् हमारे ऊपर आशीर्वादोंकी वर्षा करें ॥ २० ॥

**भवेम शक्तिसम्पन्ना विपन्ना हि वयं पुनः ।**
**तन्निदर्शितमादर्शं प्राप्नुयाम प्रयत्नतः ॥ २१ ॥**

हम दुःखी हैं। पुनः शक्तिसम्पन्न बनें। बापूजीके बताये हुए आदर्शको हम प्रयत्नसे प्राप्त करें ॥ २१ ॥

**साम्प्रदायिकविद्वेषानलज्वालाकरालताम् ।**
**शमयितुं नैव शक्ता अभूमानवधानतः ॥ २२ ॥**

साम्प्रदायिक विद्वेषकी आगकी ज्वालाकी भयङ्करताको हम भूलसे शान्त नहीं कर सके ॥ २२ ॥

**तत एव हतो देशो हन्त प्रणिहता वयम् ।**
**हतं सौभाग्यमस्माकं निहता सत्यता शिवा ॥ २३ ॥**

इसीसे देशका नाश हुआ। हम मारे गये। हमारा सौभाग्य नष्ट हो गया। सत्यताकी बर्बादी हो गयी ॥ २३ ॥

**हिंसयाद्य हताहिंसा हिंसितो धर्म उज्ज्वलः ।**
**हिंसिता हि नराकारा दया निष्ठा क्षमा रमा ॥ २४ ॥**

हिंसाने अहिंसाको मार डाला, निर्मल धर्मका वध कर दिया और मनुष्यके रूपमें रही हुई दया, निष्ठा, क्षमा, रमाका भी वध होगया ॥२४॥

मन्तवो दूरमुत्सार्याः स्वीकार्याः प्रेमतन्तवः ।
अरीणाममरीणां च सम्यक्त्वे हि प्रयोजकाः ॥ २५ ॥

क्रोधको दूर फेंक देना चाहिये । प्रेमतन्तुका स्वीकार करना चाहिये । क्योंकि शत्रु और मित्रके यही कारण हैं ॥ २५ ॥

भावमेव परित्यज्य नृहिंसाप्रतिहिंसयोः ।
अहिंसा सरला भव्या पर्युपास्या मनोरमा ॥ २६ ॥

मनुष्यकी हिंसा और प्रतिहिंसाके भावको छोड़कर सरल, सुन्दर, मनोहर अहिंसाकी ही उपासना करनी चाहिये ॥ २६ ॥

अहिंसयैव साम्राज्यमसौ श्वेतं व्यकम्पयत् ।
विजानन्तोप्यजानन्त इवाभूमेति दुःखकृत् ॥ २७ ॥

बापूजीने अहिंसासे ही अंग्रेजी साम्राज्यको हिला दिया था । जानते हुए भी हम अज्ञानके समान बने इसीने दुःख पैदा किया ॥ २७ ॥

प्रतिजानीमहे सर्वे वयं भारतवासिनः ।
श्रद्धया नो गुरोराज्ञां वक्ष्यामः शिरसा सदा ॥ २८ ॥

हम सब भारतीय प्रतिज्ञा करते हैं कि गुरुकी आज्ञाको हम सदा सिर पर धारण करेंगे ॥ २८ ॥

न्यक्कर्तरि तिरस्कर्तर्यप्युदारां च बन्धुताम् ।
संप्रदर्श्य गुरोर्भव्यं गौरवं वर्धयामहे ॥ २९ ॥

धिक्कारनेवाले और तिरस्कार करनेवालेपर भी हम बन्धुत्व दिखाकर गुरुके गौरवको बढ़ावेंगे ॥ २९ ॥

प्रत्यक्षु वापि सम्यक्षु सध्र्यक्ष्वपि सचेतसः ।
वयं प्रेम प्रदर्श्यैव साधयिष्याम इष्टताम् ॥ ३० ॥

चाहे प्रतिकूल चलनेवाला हो, अनुकूल चलनेवाला हो, सीधा चलने वाला हो, कोई कैसा भी हो, हम पवित्रमनसे प्रेम दिखाकर इष्टता सिद्धकरेंगे ॥ ३० ॥

न्यञ्चामपि च जिह्मानां पतितानां च दुःखिनाम् ।
सेवा समानभावेन कर्तव्या तत्पदानुगैः ॥ ३१ ॥

कोई नीच हो, कुटिल हो, पतित हो, दुःखी हो, गुरुके अनुयायियोंका धर्म है कि सबकी समान भावसे सेवा करें ॥ ३१ ॥

खिस्तीया भारतीया ये तेप्येतद्देशजास्ततः ।
तेपि संततयो गाँधेः पितृहीनाश्च तेभवन् ॥ ३२ ॥

भारतीय ईसाई भी इसी देशमें पैदा हुए हैं । अतः वह भी महात्माजीके सन्तान हैं और वह भी पितृहीन हो गये ॥ ३२ ॥

मायां भित्त्वा सदामायः परमेशपरायणः ।
प्रतिसीरामपसार्य गतः पारं भवाब्धितः ॥ ३३ ॥

मायाको फाड़कर सदा माया से पर रहनेवाले, परमेश्वरपरायण महात्माजी पड़दा हटाकर संसारसागरसे पार चले गये ॥ ३३ ॥

तपःकृशानुना दग्ध्वा जन्मव्याधिजरामराः ।
सत्येनाहिंसया चापि परब्रह्मत्वमाप्तवान् ॥ ३४ ॥

उन्होंने तपस्यारूप अग्निसे जन्मरूप व्याधि, जरा, मृत्यु आदिको जलाकर सत्य और अहिंसाके द्वारा ब्रह्मत्वको प्राप्त हो गये ॥ ३४ ॥

संसारे सत्यनिष्ठोसौ बहुकृत्वो जयश्रिया ।
आलिङ्गितो महाबाहुर्महादेवो ह्यनीदृशः ॥ ३५ ॥

संसारमें इन सत्यनिष्ठ, विशालभुजबलि, महान् अद्वितीय देवको विजयश्रीने बहुत बार आलिङ्गन किया है ॥ ३५ ॥

अयं तु तस्य देवस्य महीयान्विजयोऽभवत् ।
अस्मिन्नवसरे पुण्ये किमर्प्यं तत्पदाब्जयोः ॥ ३६ ॥

उनका यह मृत्यु तो सबसे बड़ा विजय हुआ है । इस पवित्र अवसरपर उनके चरण कमलोंमें हम क्या अर्पण करें ? ॥ ३६ ॥

मन्वानः सुहृदं मृत्युं सर्वदाशिक्षयत्स नः।
मृत्योर्भीतिं परित्यक्तुंका भीतिः सुहृदो भवेत्॥ ३७॥

मृत्युको तो वह सदा मित्र मानते थे और इसीलिये उन्होंने हमें सिखाया है कि हम मृत्युका भय छोड दें। मित्रसे भय क्या? ॥ ३७॥

पूर्वजा येन मार्गेण गत्वा परमवाप्नुवन्।
यता सता स्वयं तेन तं गन्तुं शिक्षिता वयम्॥ ३८॥

जिस मार्गसे चल कर पूर्वजोंने परमेश्वरको प्राप्त किया था उसी मार्गसे स्वयं चलकर हमको भी चलना सिखाया॥ ३८॥

वैरं च वैरिणं चापि जेतुं द्वेषं च विद्विषम्।
स्नेहेन निर्मलेनैव समादिक्षत्सनात्स नः॥ ३९॥

शत्रुता, शत्रु, द्वेष, द्वेषी इन सबको निर्मल प्रेमसे ही जीतनेका उन्होंने सदा हमको आदेश दिया है॥ ३९॥

उपादिक्षदसौ यूयं सत्यमेवेश्वरं परम्।
वित्तेति सेवया तस्य स्वातन्त्र्यं पूर्णमाप्नुत॥४०॥

उन्होंने नित्य ही उपदेश दिया है कि "तुम लोग सत्यको ही परम ईश्वर समझो" और उसकी सेवासे पूर्ण स्वतन्त्रताको = मोक्षको प्राप्त करो॥ ४०॥

मध्येस्माकं विहरता सह तेन सता कियत्।
जीवनायोधनं जेतुं सरलं प्रत्यभासत॥४१॥

जब वह हमारे बीचमें थे तब उनके साथ जीवन युद्धको जीतना कितना सरल प्रतीत होता था!॥ ४१॥

सच्छ्रद्धा साहसं स्नेहो बलं शीलमभीकता।
अनुद्वेगो यतेस्तस्य नियतो नः सदाश्रयः॥४२॥

उनकी श्रद्धा, उनका साहस, स्नेह, आत्मिक बल, शील, निर्भयता, अव्याकुलता इत्यादि हमारे निश्चित ही उत्तम आश्रय थे॥४२॥

सर्व एव भरोस्माकं दयाया निर्झरे झरे ।
आसीन्निहित ऊढः सोनवसादेन तेन हि ॥४३॥

हमारा सब भार उसी दयाके अमर स्रोतपर निर्भर था । उस भारको उन्होंने अवश्य ही बिना थकावटके वहन किया है ॥ ४३ ॥

अपारे तस्य सत्प्रेमपारावारे निमज्ज्य नः ।
अशक्ता अपि संप्राप्ता महतीं शक्तिमिष्टदाम् ॥४४॥

उनके अपार विशुद्ध प्रेमरूप सागरमें डूबकर हमारेमेंसे कितने ही अशक्त लोगोंने भी महती शक्तिको प्राप्त कर लिया ॥ ४४ ॥

यदात्रावश्यकी तस्य स्थितिरासीदपेक्षिता ।
तदानीं स परित्यज्य गतोस्मानात्मनः पदम् ॥४५॥

जब कि उनकी यहाँ पर स्थिति आवश्यक रूपसे अपेक्षित थी, उस समय वह हमें छोड़कर अपने स्थानको चले गये ॥ ४५ ॥

ततो वयमनाथाः स्मो विवशा भीपराहताः ।
हृदयं वेपतेस्माकं रुदन्ति नयनानि च ॥४६॥

अतः हम अनाथ हैं, लाचार हैं, डरे हैं, हमारा हृदय काँप रहा है । हमारी आँखें रो रही हैं ॥ ४६ ॥

अद्यावधि जयस्तस्य जयोस्माकमभूत्सदा ।
परमेष जयस्तस्य परमो नः पराजयः ॥४७॥

अभी तक तो उनका विजय सदा हमारा ही विजय था । परन्तु उनका यह विजय हमारा अत्यन्त पराजय है ॥ ४७ ॥

तस्यैवैकः सुतो हन्त मायापाशपराजितः ।
निघ्नन्पुण्यं हि तद्वर्ष्म भूमिमेतामदूषयत् ॥४८॥

उन्हींके एक पुत्रने मायाके पाशसे पराजित होकर उनके पवित्र देहका वध करके इस भूमिको दूषित कर दिया ॥ ४८ ॥

परं भयं च नैर्बल्यमितिशब्दद्वयं क्वचित् ।
प्रवेशं नाकरोत्तस्य शब्दस्तोममहानिधौ ॥४९॥

परन्तु भय और निर्बलता यह दो शब्द उनके शब्दकोशमें कभी प्रवेश नहीं पा सके ॥ ४९ ॥

हिंसाद्वेषौ समाश्लिष्टौ संचरेते हि चेतसा ।
भारते तेन नो भीतिरात्मा नष्टो भवेन्न नः ॥५०॥

आज हिंसा और द्वेष साथ मिलकर चित्तपर चढ़कर भारतमें चल रहे हैं । अतः भय है कि हमारा आत्मा नष्ट न हो जाय ॥ ५० ॥

असावदापयन्नो यत्स्वातन्त्र्यं राजनीतिकम् ।
तदिष्टरामराज्यस्य सोपानं प्रथमं हि तत् ॥५१॥

उन्होंने जो हमें राजनीतिक स्वतन्त्रता दिलायी है, वह तो, उन्हें जो रामराज्य इष्ट था, उसकी पहली ही सीढ़ी है ॥ ५१ ॥

सति मानवदौर्बल्ये सति काले भयप्रदे ।
न हेयं साहसं सर्वैर्हेया भीतिरनर्थकृत् ॥ ५२ ॥

यद्यपि मनुष्योंकी दुर्बलता है, और समय भयङ्कर है तो भी कभी किसीको साहस नहीं छोड़ना चाहिये और अनर्थकारी भयका त्याग कर देना चाहिये ॥ ५२ ॥

अहिंसा निशितं सत्यमजय्यमपराजितम् ।
शस्त्रं गृहीत्वा प्रत्यूहा विजेया गुरुमार्गगैः ॥ ५३ ॥

गुरुके मार्गसे चलकर हमें चाहिये कि अहिंसा और सत्यरूप तीक्ष्ण तथा जो कभी हारा नहीं है और हराया नहीं जा सकता ऐसे शस्त्रको ग्रहण करके विघ्नोंको जीतें ॥ ५३ ॥

कुर्वाणेषु तदीयाज्ञामनुसृत्य सतीः क्रियाः ।
अस्मास्ववतरेत्तस्य क्षमा शक्तिरभङ्गुरा ॥ ५४ ॥

उनकी आज्ञाका अनुसरण करके पवित्र कर्म करते हुए हममें उनकी अभङ्गुर शक्तिका अवतार हो, यह प्रार्थना है ॥ ५४ ॥

अस्माभिः परिवृत्तस्य तस्य वाणीसुधा यथा ।
पीयते स्म तथा शून्याद्धीयेतास्माभिरज्वरम् ॥ ५५ ॥

हमसे घिरे हुए उन बापूजीकी वाणीरूप अमृतको जैसे हम पीते थे वैसे ही शून्यमेंसे भी हम शान्त होकर पीते रहें, यही कामना है ॥ ५५ ॥

शब्दास्तस्य च कर्माणि विचारसरणिस्तथा ।
यथा स्फूर्तिमतोकार्षुर्नस्तथाद्यापि कुर्वताम् ॥ ५६ ॥

उनके शब्द, उनके कर्म, उनकी विचारसरणि यह सब जिस प्रकारसे हमें स्फूर्तिमान् बनाते रहे हैं वैसे ही आज बनावें, यह अभिलाष है ॥५६॥

तमोभिर्विततैश्छन्ने पथि संचारिणो वयम् ।
अन्तरिक्षात्तदीयाभां प्राप्नवाम निरन्तरम् ॥ ५७ ॥

अन्धकारसे ढँके मार्गमें हम चल रहे हैं । अन्तरिक्षमेंसे हम उनके प्रकाशको निरन्तर प्राप्त करते रहें यही हृदयकी चाह है ॥ ५७ ॥

रिरसयिषति मत्ता चेतना तृष्णगेषा,
गुरुवरमुखपद्मान्निस्सृतां वाक्सुधां ताम् ।
असुपरिचितमार्गे गच्छतां नः शिवाय,
वितरतु करुणार्द्रः क्वापि शक्तिं निलीनः ॥ ५८ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
अष्टादशः सर्गः

यह पागल बनी हुई लोभी हमारी चेतना श्रीगुरुदेवके कमलमुखसे निकली हुई वाणी-सुधाको पीना चाहती है । अत्यन्त अपरिचित मार्गमें कल्याणकेलिये जाते हुए, हमें, कहीं छिपे हुए वह कृपालु शक्ति प्रदान करें, यह प्रार्थना है ॥ ५८ ॥

इति परमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायाम्
अष्टादशः सर्गः

# एकोनविंशः सर्गः

## लार्ड माउन्टबेटनः

**जगत्समग्रं सहदुःखितां तदान्वभून्महात्मन्यमरत्वमीयुषि ।**
**जगच्छिरोरत्नशिरोमहामणौ महामनुष्यत्वसुरूपधारिणि ॥१॥**

जिस समय महात्मा गांधी अमर पदको प्राप्त हुए उस समय जगत् समान ही दुःख अनुभव कर रहा था। वह संसारके श्रेष्ठ मानवोंके श्रेष्ठ शिरोमणि थे, एवं महामनुष्यताके सुन्दर रूप थे ॥ १ ॥

**महात्मगांधेर्निधनं जगत्तले तथात्र कोटीर्मनुजानमानयत् ।**
**ममैव कश्चित्स्वजनो दिवं गतः प्रियोत्तमः सर्वमहत्तमस्त्विति ॥२॥**

महात्मा गांधीका अवसान पृथिवीपर और यहाँ भारतमें करोड़ों मनुष्योंको यह माननेको विवश किया कि कोई मेरा ही प्रियोत्तम, सर्वमहान् स्वजन स्वर्गवासी होगया है ॥ २ ॥

**न केवलं तस्य समीपवासिनश्चिरेण वाल्पं सह तेन संगताः ।**
**गतं दिवं प्रत्युत सर्वमानवा जगन्महामित्त्रतया रुदन्ति तम् ॥३॥**

केवल वही लोग नहीं रो रहे हैं जो चिरकालसे अथवा अल्पकालसे उनसे परिचित थे प्रत्युत सारे ही मनुष्य उन्हें जगत्का महान् मित्र मान कर रो रहे हैं ॥ ३ ॥

**स शान्तिदेवो जगतः शिवप्रदो महानहिंसाप्रतिरूपकः क्षितौ ।**
**अधन्यकाले निहतो दुरात्मनेत्युवाच माउन्टबिटन् व्यथान्वितः॥४॥**

श्री लार्ड माउन्टबेटनने कहा कि वह जगत् के कल्याणप्रद शान्ति देवता थे। पृथिवी पर वह अहिंसाके महान् प्रतिनिधि थे। दुष्टने उन्हें बुरे समय में मार डाला ॥ ४ ॥

## लार्ड माउन्टबेटनस्य धर्मपत्नी

गांधीमहात्मनो मृत्युः स्यादन्ताराष्ट्रिया क्षतिः ।
न केवलं प्रत्युतान्ताराष्ट्रिया घटनाशिवा ॥ ५ ॥

महात्मा गांधीका मृत्यु केवल अन्ताराष्ट्रिय क्षति ही नहीं है प्रत्युत वह अन्ताराष्ट्रिय अमङ्गल घटना भी है ॥ ५ ॥

हृदयं व्यथितं शून्यं मनो बुद्धिर्विकुण्ठिता ।
समाचारेण सर्वेषामेतेन प्राणहारिणा ॥ ६ ॥

इस प्राणहारी समाचारसे सबका हृदय व्यथित है, मन शून्य है और बुद्धि कुण्ठित हो गयी है ॥ ६ ॥

अस्मिन्विसंकटे काले स्वस्याः पत्युरुपान्तिके ।
निवस्तुं कामये येन मनः शान्तिं प्रपत्स्यते ॥ ७ ॥

इस अति संकटमय समयमें मैं अपने पतिके पास रहना चाहती हूँ ( उस समय वह मद्रासमें थीं ) जिससे मेरा मन शान्त हो ॥ ७ ॥

शिक्षितं गांधिना यद्यदस्मभ्यं पूर्णयोगिना ।
तत्तदाचरितुं सद्यः प्रयत्नं तनवामहै ॥ ८ ॥

पूर्णयोगी महात्मा गांधीने हमें जो कुछ सिखाया है उन सबका आचरण करनेके लिये हमें आजसे ही प्रयत्न करना चाहिये ॥ ८ ॥

एतस्मादतिरिक्तो मे नास्ति वाग्विभवस्ततः ।
महतो नायकस्यास्य स्तोतुमिष्टान्गुणानिह ॥ ९ ॥

उस महान् नेताके इष्ट गुणोंकी स्तुति करनेकेलिये इससे अतिरिक्त मेरे पास शब्द नहीं हैं ॥ ९ ॥

ग्लाना म्लाना च विदुषी कौटुम्बिकमहाक्षतिम् ।
मन्वानेत्याह माउन्टबेटनस्य कुटुम्बिनी ॥ १० ॥

लार्ड माउन्टबेटनकी धर्मपत्नी लेडी एडविना माउण्डबेटनने दुःखित होकर, उदास होकर कहा कि यह हमारी कौटुम्बिक क्षति हुई है ॥ १० ॥

## षष्ठो जार्जः

अखण्डकल्याणगुणार्जनाय लोकस्य सर्वस्य प्रयस्यतोद्य।
महात्मनो मोहनदासगांधेर्मृत्योः कथा मेस्त्यशनिप्रपातः ॥११॥

सब लोगोंकेलिये अखण्ड कल्याणगुण उपार्जन करनेकेलिये प्रयास करनेवाले महात्मा मोहनदास गांधीकी आज मृत्युवार्ता मेरेलिये वज्रपात हुा है ॥११॥

न केवलं श्रीभरतप्रजानामेषा क्षतिः प्रत्युत सार्वभौमी।
अपूरणीया तत आर्तचेता वितिष्ठते मानवजातिरद्य ॥१२॥

यह क्षति केवल भारतीय प्रजाकी ही नहीं है प्रत्युत सार्वभौम क्षति है और वह अपूरणीय है। अतः आज मानवजातिका चित्त दुःखी है ॥ १२ ॥

नाहं मदीया सहधर्मिणी नो दुःखं महत्सोढुमशक्नुवैतत्।
इति ब्रिटेनस्य महानरेन्द्रो जार्जोवदत्षष्ठ उपास्य दुःखम् ॥१३॥

ब्रिटेनके महाराज षष्ठ जार्ज महानुभावने दुःखी होकर कहा कि न तो मैं ही और न मेरी धर्मपत्नी ही इस महान् दुःखको सह सके हैं ॥१३॥

## वाइसरायस्य जार्जं षष्ठं प्रति पत्रम्

निधनं महात्मन इदं मनोरुजं ननु विद्यते मनुजजातिहानिकृत्।
वसुमत्यपेक्षत इदं महातुरा परिभासतां तदवदत्तसद्गुणः ॥१४॥

वाइसरायने छठें जार्ज को लिखा कि—महात्माजीका यह मनको खिन्न करनेवाला निधन मानव जातिकी क्षतिकेलिये ही हुआ है। पृथिवी आज व्याकुल होकर यही चाहती है कि उनके दिये हुए सद्गुण प्रकाशित हों ॥१४॥

अवसन्नमानवहृदि प्रकाशतां निरवद्यमेव पुनरद्य तत्त्रयम्।
प्रियता जनेषु सकलेषु शाश्वती नवधो नृणां च कृतिरस्तु सत्यभृत्॥

दुःखित मानव हृदयमें आज उन तीन गुणोंके प्रकाशकी आवश्यकता है:—१—सब लोगोंमें स्थायी प्रेम, २—किसी भी मनुष्यकी हिंसाका अभाव और ३—सत्यपूर्ण आचरण ॥ १५ ॥

**विपदाहतं गलितमुच्चभारतं दधतोभिमानमिति यज्जगत्कृते ।**
**तददाद्धि तादृशमभोद्धमानवं सममित्रशत्रुमथ निर्विकारकम् ॥१६॥**

भारत आज विपत्तिमें है, उसका हर्ष चला गया है तो भी उसे अभिमान है कि उसने जगत्केलिये ऐसा ज्वलन्त मानव दिया है जिसकी दृष्टिमें शत्रु और मित्र सब समान थे, और वह निर्विकार था ॥ १६ ॥

**यमुनातटादहमुपास्य तस्य तं दहनावधिं विधिमनूनपावनम् ।**
**अधुनैव संन्यवृतमार्तचेतसा परिवीक्ष्य खिन्नमनसां नृणां गणम् ॥**

अभी ही मैं यमुनाके किनारेसे उनकी पवित्र दाह क्रियाको देखकर दुःखित मनसे आ रहा हूँ । मैंने वहाँ दुःखित लोगोंका एक बहुत बड़ा समूह देखा ॥ १७ ॥

**अवलोक्य तं जनगणं निरीक्षितं न कदापि कैरपि महाद्भुतायितम् ।**
**कठिनं न वक्तुमिदमस्ति मोहने जनता दधाति कियतीं नमाननाम् ॥**

जिसे कभी किसीने नहीं देखा है, उस अपार जनसमुदायको देखकर यह कहना कठिन नहीं है कि महात्माजीमें जनताका कितना महान् प्रेम और आदर है ॥ १८ ॥

**अवभासते न पुनरेव तादृशो नर आपतेदिह जगत्यघायिते ।**
**जगदुत्तरो गुणनिधिर्महात्मनः प्रभविष्यति प्रतिपलं श्रिये हि नः ॥**

स्पष्ट प्रतीत होता है कि इस पापपूर्ण जगत्में फिर वैसा मनुष्य नहीं आवेगा । महात्माजीके लोकोत्तर गुण हम लोगोंके कल्याणके लिये सदा ही समर्थ होंगे ॥ १९ ॥

**व्यलिखन्महाप्रतिनिधिर्ब्रिटेनिकापतिमित्यकुण्ठितमतिः सितात्प्रति ।**
**इह भारते स्थित उदारमानसः परिवृत्तमत्र निखिलं विलोक्य सः ॥**

वाइसरायने षष्ठजार्ज महाशयको, यहाँ भारतमें ही रहते हुए, यहाँके सब वृत्तान्त आँखोंसे देखकर, इस प्रकारसे लिखा था ।। २० ।।

## सर्दार श्रीवल्लभभाई महोदयः

**कोपाय नायमिह काल उदस्य तस्मात्तं श्रीमहात्मपरिपाठितपाठमेव ।**
**स्मृत्वा शुचं च कलिलं च मनोव्यथां च हित्वा यथासमयमद्य कृतिर्हि कार्या**

यह क्रोध करनेका समय नहीं है। अतः उसे छोड़कर महात्माजीके पढ़ाये हुए पाठको स्मरण करके शोक, मलिनता और मनोव्यथाको छोड़कर समयके अनुसार कार्य ही करना चाहिये ।। २१ ।।

**तेनोपदिष्टसरणिं स्मृतितोपसार्य रोषेण मत्तमतयो विनयादपेताः ।**
**सर्वे वयं यदि भवेम न कोपि लाभो लब्धो भवेदथ भवेम च निन्दनीयाः ।।**

उनके बताए हुए मार्गको भुलाकर यदि हम मतवाले और अविनयी बन जायँगे तो कुछ भी लाभ न होगा और हम सब निन्दाके पात्र बन जायँगे ।। २२ ।।

**कार्यातिभारविकला निखिला विपन्नाः,**
**साहाय्यमेत्य परमार्यवरस्य तस्य ।**
**गन्तुं भवेम पथि तस्य वयं समर्था,**
**हा हन्त हन्त विधिना परिवञ्चिताः स्मः ।।२३।।**

हम सब कार्यके भारसे दबे हुए हैं, विपत्तिमें पड़े हुए हैं। उन्हीं परमार्थ राष्ट्रपिताकी सहायतासे उनके मार्गमें जानेकेलिये हम समर्थ हैं। हा, विधिने हमको ठग लिया ! ।। २३ ।।

**यातो महागुरुरसौ परलोकमार्गं,**
**हित्वैव भारमखिलं प्रियभारतस्य ।**
**यच्छिक्षितं करुणयाभवदत्र तेन,**
**तत्त्रास्यतेतिनिपुणं विपदास्पदान्नः ।।२४।।**

प्रियभारतका सब भार छोड़कर महागुरु परलोकमें चले गये।

कृपाकर उन्होंने यहाँ रहते हुए हमें जो कुछ सिखाया है वह विपत्तियोंसे हमारी अच्छी तरह रक्षा करेगा ॥ २४ ॥

श्वः सायमस्य विमलः परिपूतदेहो,
भस्मावशेष इह विश्वजनप्रणम्यः ।
नूनं भविष्यति परं निहितोस्मदन्त-
र्द्रक्ष्यत्यवश्यमखिलांस्तनयान्नतान्नः ॥२५॥

उनका निर्मल और पवित्र देह जिसे समस्त विश्व प्रणाम करता था, कलह सांयकाल अवश्य ही भस्म हो जायगा। परन्तु हमारे भीतर रहकर अवश्य ही हम बालकोंका निरीक्षण करते रहेंगे ॥ २५ ॥

नित्योमरोजर उपात्तपवित्रकायो,
लोकानुशिक्षणमिषेण समागतोत्र ।
शान्त्या विवेकनिरता वयमद्य तस्य,
रत्नाधिकं गुरुवचः परिपालयाम ॥२६॥

वह तो नित्य थे, अजर थे, अमर थे; लोगोंको उपदेशदेनेके बहानेसे पवित्र शरीर धारण करके आये थे। हमें चाहिये कि शान्तिसे विवेकी बनकर रत्नसे भी अधिक मूल्यवान् उनके वचनका पालन करें ॥ २६ ॥

शोकं समाप्य पथि तेन निदर्शितेद्य,
लग्ना भवेम वयमित्यतियुक्तकार्यम् ।
श्रीवल्लभः सकलभारतवर्षलोकां-
स्तस्मिन्निते परपदं समवोचतैवम् ॥२७॥

शोकको छोड़कर उनके बताये मार्गमें हम लग जायँ, यही सर्वोत्तम कार्य है। जब महात्माजी परम पदको चले गये उस समय श्री० वल्लभभाईने इस प्रकार उपदेश दिया ॥ २७ ॥

## श्रीकिशोरलालो मशरूवाला

हन्तुं समर्थ इह कोस्ति भवे भवाब्धेः,
पारं गतं यतिवरं परमामरं तम्।
येनाततायिविरलेन सितं शरीरं,
तेनाप्यमान्यमरतावशतोपि तस्य ॥२८॥

इस संसारमें संसारसागरसे पार चले जानेवाले परम अमर उन यतीश्वरको कौन मार सकता है? वह तो अमर हो गये थे, इस बातको, जिस विरल आततायीने उनके शरीरका अन्त किया है उसने भी, लाचार होकर, स्वीकार कर लिया है ॥ २८ ॥

कृष्णोस्तु यीशुरिह वापि च सोक्रटीसो,
नैते हता अपि हता विदुषां मतेन।
एवं हतो निरुपमो यतिराजराजो,
जातोमरोलभत तत्पदमन्तशून्यम् ॥२९॥

श्रीकृष्ण, यीशु और सोक्रेटिस यह मारे गये हैं तो भी विद्वानोंके मतसे अमर ही हैं। इसी प्रकार जिनकी जगत्में कोई उपमा नहीं हैं, वह परम श्रेष्ठ यतिसम्राट् अमर हुए हैं और उस पदको प्राप्त हुए है जिसका कभी अन्त नहीं है ॥ २९ ॥

यो मूढ एनमुरसि प्रजहार हन्तुं,
नूनं गतो विफलतामिति कोपि विद्वान्।
सन्दोग्धि नाद्य स यतः प्रभवंश्चिरायु-
रद्यापि जीवति समृद्धबलो महात्मा ॥३०॥

जिस मूर्खने महात्माजीको मारनेकेलिये छातीमें प्रहार किया था, वह अवश्य ही निष्फल गया है, इसमें आज किसी विद्वान्-समझदारको सन्देह नहीं है। क्योंकि वह तो चिरायु होकर, अधिक बलवान् होकर आज भी जीवित ही हैं ॥ ३० ॥

ग्रीकाश्च सोक्रटिसमत्र निहत्य नैजीं,
चेरुः क्षतिं यहुदयोपि यिशुं विनाश्य ।
ते यादवा अपि वधं प्रविधाय नन्द-
सूनोर्न लाभमदुहन्नणुमात्रमत्र ॥३१॥

ग्रीकलोगोंने सोक्रेटिसको मारकर, यहूदियोंने यीशुको मारकर अपनी ही हानि की थी। उन यादवोंने भी कृष्णका वध करके तनिक भी लाभ प्राप्त नहीं किया ॥ ३१ ॥

एषोपि निस्त्रपनरः प्रणिहत्य मूढो,
दीनार्तरक्षणपरं शिवरूपमेनम् ।
नूनं समस्तजगता सह हिन्दुजाते-
श्चक्रे महाक्षतिमनन्यतुलं महेशम् ॥३२॥

इस निर्लज्ज और मूर्ख मनुष्यने दीनों और दुखियोंकी रक्षा करनेवाले अद्वितीय-अनुपम शिवरूप महात्माजी ( के शरीर ) को मारकर अवश्य सम्पूर्ण जगत्के साथ साथ हिन्दु जातिकी महती हानि की है ॥ ३२ ॥

वार्या न कैरपि नरैर्नयनाश्रुधारा,
स्वाभाविकी विरहजा बलतः सृता सा ।
नो विद्यते परमिहाद्य स कोपि हेतु-
र्यो रोदयेन्मुनिकृते कमपि प्रतप्तम् ॥३३॥

विरहजन्य आँसू आँखमेंसे स्वभावतः जबर्दस्तीसे निकल आते हैं। उन्हें कोई रोक नहीं सकता है। परन्तु बापूकेलिये किसी सन्तप्त पुरुष अथवा स्त्रीको रोनेकेलिये कोई भी कारण नहीं है ॥३३॥

श्रीमद्यतीन्द्रकृतसेतुमुपास्य गच्छन्,
घोरे भवार्णव उदात्तमना यशस्वी ।
सत्याग्रहिप्रवर एतदनन्तभव्य-
श्रद्धाकरः समवदत्स किशोरलालः ॥३४॥

इस भयङ्कर संसारसागरके ऊपर महात्माजीने जो पुल बाँधा है उसी पर चलते हुए सत्याग्रहियोंमें श्रेष्ठ अनन्त भव्य श्रद्धाके आकर श्री किशोरलालमशरूवालाने कहा था ।। ३४ ।।

## श्रीमीराबहिन

द्वावेवाश्रयोत्रासीन्मम बापू स्तथेश्वरः ।
इदानीं तावुभौ जातावभिन्नौ नियतित्वतः ।।३५।।

मेरे दो ही आश्रय थे, बापू और ईश्वर । आज मेरे भाग्यसे दोनों एक हो गये ।। ३५ ।।

आकर्णयन्त्या वृत्तं तद्दुःखदं महदेव मे ।
वन्दितां गमयद्द्वारमात्मानमुदजीघटत् ।।३६।।

जब मैंने इस अत्यन्त दुःखद समाचार को सुना तो आत्माको बन्दी बनानेवाला दरवाजा खुल गया ।। ३६ ।।

स आत्मा यतिराजस्य सर्वस्वस्य ममाद्भुतः ।
सर्वशक्तिमयो योगी प्राविशच्च मदात्मनि ।। ३७ ।।

बापू मेरे सर्वस्व थे । उनका अद्भुत, सर्वशक्तिमय और योगी आत्मा मेरे आत्मामें प्रविष्ट हो गया ।। ३७ ।।

बापू शाश्वतमेवास्त स आत्मा शाश्वतो मतः ।
अहं शाश्वत एवास्मीत्येवं नन्वनुभूयते ।।३८।।

बापू शाश्वत हैं, वह आत्मा शाश्वत है, मैं भी शाश्वत ही हूँ, ऐसा आज मुझे अनुभव होता है ।। ३८ ।।

नो सदेहः प्रियो बापू मध्यगो नोद्य यद्यपि ।
समीपतर एवास्ते परमात्मा परात्मनः ।।३९।।

यद्यपि बापूजी आज सदेह हमारे बीचमें नहीं हैं । परन्तु उन महान् आत्माका आत्मा अत्यन्त समीप है ।। ३९ ।।

न भविष्यति देहोयं न वियोगस्तदापि नौ।
अन्तराले गते चास्मिन्भविष्यावो निरन्तरौ ॥४०॥

जब यह देह नहीं होगा तब भी मेरा और तुम्हारा वियोग नहीं होगा। प्रत्युत इस देहरूप अन्तरालके दूर होनेपर हमदोनों निरन्तर अन्तरालशून्य बन जावेंगे ॥ ४० ॥

तस्य सर्वज्ञदेवस्य शब्दा भव्याः सनातनाः।
बुद्धार्थका इदानीं ते तदानीमनितार्थकाः ॥४१॥

उन सर्वज्ञ देवके वह भव्य सनातन शब्द उस समय तो अगतार्थ थे—उनके अर्थका ज्ञान मुझे नहीं था और अब उनके अर्थका पता लगा है ॥ ४१ ॥

पशुलोकं हृषीकेशे मया गन्तुं निमन्त्रितः।
मृतस्य गणना का स्यादित्यवादीत्स सर्ववित् ॥४२॥

जब मैंने हृषीकेश-ऋषिकेशमें पशुलोकमें आनेकेलिये उन्हें आमन्त्रण दिया तब उन्होंने कहा था कि "मरे हुएकी क्या गिनती करनी है?" ॥४२॥

मर्माविध इमे शब्दा भयदा अपि रक्षिताः।
ईश्वरप्रार्थनाशब्दैः साकमेव मया हृदि ॥४३॥

यह मर्मभेदी शब्द यद्यपि भयङ्कर थे तो भी मैंने इन्हें अपने हृदयमें ईश्वर-प्रार्थनाके शब्दोंके साथ रख छोड़ा था ॥ ४३ ॥

उपवासदिनान्यासन्स्मारकाणि महाप्रभोः।
तेषां च शब्दजातानां पश्चादासीदचिन्तता ॥४४॥

उनके वह शब्द, उनके उपवास ( दिल्ली उपवास ) के दिनोंमें याद आते थे—अर्थात् कदाचित् उपवासमें उनका नश्वर शरीर चला जाय—परन्तु उपवासकी समाप्तिके पश्चात् मैं निश्चिन्त बनी थी ॥४४॥

समाप्तावुपवासानां ते शब्दा नीरहस्यकाः।
अभवन्निति मे ज्ञानमभवत्तदनेहसि ॥४५॥

उपवासकी समाप्तिमें मुझे ऐसा अनुभव हुआ कि बापूके उन शब्दोंमें कोई रहस्य समाया हुआ नहीं था ॥ ४५ ॥

परं तत्त्वविदः शब्दाः सत्यरूपस्य सत्पतेः ।
भविष्यदर्थसम्पन्ना आसन्नित्यद्य मे स्फुटम् ॥४६॥

परन्तु आज मुझे स्पष्ट हुआ है कि तत्त्वज्ञानी और सत्यस्वरूप उन बापूके शब्द भविष्यमें होनेवाली घटनाके सूचक थे ॥ ४६ ॥

विधिना निर्मिते तस्मिन्सन्ध्याकाले समाहिता ।
आन्दोलनं महाग्लानेरहमन्वभवं भवे ॥४७॥

उस विधिनिर्मित सन्ध्याकालमें मैं समाधिमें बैठी थी और मैंने जगत्में महती ग्लानिके स्पन्दनका अनुभव किया ॥ ४७ ॥

उद्धाराय मनुष्याणामवतारस्य शोणितैः ।
उक्षिता पृथिवी भूयः कम्पमाना वराकिका ॥४८॥

मनुष्योंके उद्धारके लिये अवतारके रक्तसे पुनः काँपती हुई दीन पृथिवी सींची गयी है ॥ ४८ ॥

नेदं पापं भवेद्व्यक्तेः प्रत्येकयुगभाविनाम् ।
मनुष्याणां हि तत्तेन रक्ष्यास्ते भक्तशोणितैः ॥४९॥

यह पाप एक व्यक्तिका नहीं है। प्रत्येक युगमें आनेवाले सभी मनुष्यों का यह पाप है। अतः उन पापी मनुष्योंकी रक्षा ईश्वरभक्तके रक्तसे ही हो सकती है ॥ ४९ ॥

जानीमस्तस्य कर्तव्यकर्माणि विततानि तत् ।
तेषां पूर्तये यत्नः कार्यः प्राणपणेन हि ॥५०॥

हम उनके फैले हुए कर्तव्य कर्मोंको जानते हैं। अतः उनकी पूर्तिकेलिये हमें प्राणपणसे प्रयत्न करना चाहिये ॥५०॥

यातु भेदो मनुष्येभ्यो धर्मवर्णविकल्पितः ।
हिंसा नश्यत्वसत्यं च प्रलयं यातु सर्वथा ॥५१॥

मनुष्योंमेंसे धर्मकृत तथा वर्णकृत भेद चला जाना चाहिये। हिंसा और असत्यका नाश हो ही जाना चाहिये ॥५१॥

मन्थदण्डश्च मनसः कर्तव्यपथदर्शिका ।
सर्वश्रेयस्करी जीयादितिमीरावचः सुधा ॥५२॥

मनके लिये मन्थनदण्ड समान, कर्तव्यमार्गको दिखानेवाली, सबका श्रेय करनेवाली श्रीमीराबहिनकी यह वाणीसुधा विजयिनी बने ॥ ५२ ॥

## श्रीमदबुलकलामआजादः

यातेनाद्य दिवं दयाजलनिधौ सर्वात्मके सर्ववि—
द्यायातोस्तिमहाविपज्जलनिधिर्नाशाय नः सर्वथा।
तस्यात्मा तदिदं वचश्च विमलं पन्थाश्च संदर्शितः,
कल्याणाय समन्ततो भवतु नो दुःखाटवीं भ्राम्यताम् ॥५३॥

आज वह दयासागर स्वर्ग चलेगये। हमारे नाशके लिये विपत्तिरूप महासागर उपस्थित है। उनका आत्मा, उनका यह वचन, और दिखाया हुआ मार्ग, दुःखके जंगलमें भटकते हुए हम सबके कल्याणके लिये हो ॥ ५३ ॥

यात्रा तेन समापितात्र कृतिना लोकोत्तरं स्वं यशो,
दिक्षूर्ध्वं च वितन्वता सफलितं स्वं जीवनं चावनौ।
अस्माकं च नवा दधाति पदवीं नव्ये पथि क्लेशिते,
सा तस्यैव कृपाबलादनुदिनं संपूर्णतामेष्यति ॥५४॥

उन्होंने इस जगत्की यात्रा पूरी की है। सभी दिशाओंमें, ऊपर भी, अपना अद्भुत यश फैलाकर अपना जीवन पृथिवीपर सफल किया है और अब हमारी नयी यात्रा क्लेशमय नवीन मार्गमें **पदवीं दधाति** शुरू होती है। वह उन्हींकी कृपासे सम्पूर्ण होगी ॥ ५४ ॥

हिन्दूमुस्लिमयोरनैक्यमिह चेद्वृद्धिं गतं स्यात्तदा,
देशस्यास्य भविष्यति प्रलयकृद्धानिर्महाभीतिदा।

इत्येवं समबोधयत्स सकलान्दु:खाधिसन्तापित:,
श्रीमद्विद्वदबुल्कलाम इसलाम्विद्यामहावारिधिः ॥५५॥

दु:खितहृदयसे श्री मौलाना अबुलकलाम आज़ाद साहेबने सबको कहा कि हिन्दुओं और मुसलमानोंमें यदि फूट बढ़ती ही गयी तो इस देशकी बहुत बड़ी भयंकर हानि होगी ॥ ५५ ॥

## श्रीपुरुषोत्तमदास टंडनः

निजतन्त्रभारतगुरुत्वमथ विदितकीर्तिकायकः ।
गांधिरखिलजनताविपदः परिनाशनेसमुदितेऽभे समे ॥५६॥

प्रथितकीर्तिवाले श्रीमहात्मा गांधीजी और स्वतन्त्रभारतका गुरुत्व यह दोनों ही जनताकी विपत्तिका नाश करनेके लिये समानरूपसे उदय हुए थे ॥ ५६ ॥

जगतीह कुत्रचिदपि प्रसरति यदि नाम भारतम् ।
तत्र परमबुधसन्ततिभिरभिपूजितस्य महतोपि नाम तत् ॥ ५७ ॥

संसारमें कहीं पर भी यदि भारतका नाम फैलता है—जाता है तो वहाँ विद्वानोंसे पूजित श्रीमहात्माजीका भी वह नाम जाता ही है ॥ ५७ ॥

अविनाशिनामकृतिकं परहितविहितस्वमानसम् ।
गांधिमुपनतपरात्मसुदर्शनमद्य विनाश्य तं पितरमास्म विना तम् ॥५८॥

जिनका नाम और कर्म दोनों ही अमर हैं, परायेके हितमें जिन्होंने अपना मन लगा दिया था, जिन्होंने ईश्वरका साक्षात्कार किया था, आज हम उन्हीं राष्ट्रपिताको नष्ट करके उनके बिना हम रह गये ॥ ५८ ॥

इति टंडनः स पुरुषोत्तम उदितदयः सभासदः ।
आह विकलितमना निरतो जनसेवने स्वयमपीह पण्डितः ॥५९॥

दयालु श्री पुरुषोत्तमदासटण्डनजीने व्याकुल मनसे, प्रजासेवामें स्वयं भी लगे हुए, इस प्रकारसे सभामें बैठनेवालोंको कहा ॥ ५९ ॥

## श्रीगोविन्दवल्लभपन्तः

श्रीमान्देवो मोहनो भारतस्य निर्मातासौ सर्वनृणां शरण्यः ।
यातो लोकं ब्रह्मविद्यापराणां हित्वा सर्वान्नः क्षणेनैव भूमेः ॥६०॥

श्रीमान् देवस्वरूप महात्मा मोहनदासजी भारतके निर्माता थे, सर्वमानवोंको शरण देनेवाले थे। आज क्षणभरमें हमको छोड़कर पृथिवीसे उस लोकमें चले गये जहाँ ब्रह्मज्ञानी जाते हैं ॥ ६० ॥

स्वातन्त्र्यं तत्स्थापयित्वात्र देशे लोकेलोके भारतीकीर्तिगाथाम् ।
ख्यातां कृत्वा भारतस्यैकनाथो यातो हा हा क्रुश्यते भारतीयैः ॥६१॥

इस भारत देशमें स्वतन्त्रताकी स्थापना करके, प्रत्येक लोकमें भारतकी कीर्तिगाथा फैलाकर, भारतके एकमात्र नाथ चले गये। भारतीय आज रो रहे हैं ॥ ६१ ॥

सर्वग्राहि क्रूरमासीत्तमोदः कोणे कोणे भारतस्य क्षमायाम् ।
रुद्ध्वा मार्गं संस्थितं तेन सर्वे भ्रान्ता आसन्मार्गतश्च्योतनेन ॥६२॥

भारतभूमिके कोने कोनेमें वह सर्वग्राही क्रूर अन्धकार मार्ग रोककर वर्तमान था। अतः मार्गभ्रष्ट होकर सब भ्रान्त हो गये थे ॥ ६२ ॥

बन्धुर्बन्धुं विद्विषन्नास्त भूमावस्यां ग्लानिर्वर्तते स्म स्वकीये ।
उच्चैः सन्त्येतेत्र नीचैरमी स्युर्लोका एवं भ्रान्तिविभ्रष्टमार्गाः ॥६३॥

इस भूमिमें भाई भाईके साथ द्वेष करता था, जो अपने थे उनमें हमें ग्लानि थी, यह ऊँच हैं और वह नीच हैं, इस प्रकारकी भ्रांतिसे लोग मार्गभ्रष्ट हो गये थे ॥ ६३ ॥

धर्मस्थानं धर्मनामा विधर्मोसत्यं सत्यस्थानमाक्रम्य सम्यक् ।
प्रावर्तिष्ट प्रच्युताः श्रेयसस्ते लोका भूमौ भारतस्यादिमस्य ॥६४॥

इस प्राचीन भारतभूमिमें धर्मस्थानोंपर धर्मनामधारी अधर्म और सत्यके स्थानपर असत्य आक्रमण करके बैठा हुआ था। अतः सब लोक-कल्याणसे च्युत हो गये थे ॥ ६४ ॥

आलस्यं वा दीर्घनिद्रालुता वा स्वार्थो मोहो द्रोह ऐश्वर्यकान्तिः ।
एते रोगाः स्वालयं संविधाय क्रूरा आसन्संस्थिताः स्वेच्छयैव ॥६५॥

आलस्य, ऊँघ, स्वार्थ, मोह, द्रोह, धनेच्छा यह सब रोग स्वेच्छासे यहाँ अपना घर बनाकर बैठ गए थे ॥ ६५ ॥

मार्गाः सर्वे छादिता रागरोषध्वान्तावेगान्नैव दृष्टिप्रसारः ।
बम्भ्रम्यन्ते स्मैव सर्वेअनाथा नासीत्कश्चित्पारदृश्वा व्यथानाम् ॥६६।

राग, रोष रूप अन्धकारके वेगके कारण सब मार्ग ढँके हुए थे । कहीं कुछ दीखता नहीं था । सब अनाथ बनकर इधर-उधर भटक रहे थे । दुःखोंका अन्त करनेवाला कोई नहीं था ॥ ६६ ॥

तस्मिन्काले घोरघोरे महात्मा गांधिर्देवो मोहनाख्यः समागात् ।
भित्त्वा भित्त्वा ध्वान्तमध्वान्तरूपो देशं ह्येनं सप्रकाशं व्यतानीत् ॥६७॥

उसी अतिघोर समयमें श्रीमहात्माजी आये और स्वयम् अध्वान्तरूप –प्रकाशस्वरूप होनेसे ध्वान्त–अन्धकारको फाड़ फाड़कर इस देशको उन्होंने प्रकाशमय बनादिया ॥ ६७ ॥

आसीन्नित्यं निस्सहायाश्रयोसौ रक्षालीनो दीनहीनादिकानाम् ।
येषां नाभूत्कोपि देवो दयालुस्तस्यासावासीन्महादेवदेवः ॥६८॥

वह सदा निस्सहायोंके आश्रय थे, दीनों और हीनोंकी रक्षामें लीन थे । जिनका कोई भी नहीं था उनके वह दयालु देव और महादेव थे ॥६८॥

हा हा सैषा देवता सर्वरूपा स्वीयं लोकं द्वारमाधाय किञ्चित् ।
त्यक्त्वा दीनानस्मदादीन्प्रयातो गोविन्दः श्रीपन्त एवं समूचे ॥६९॥

हा, हा, वह सर्वरूप देवता हम दीनोंको छोड़कर किसी बहानेसे अपने लोकमें चले गये, ऐसा श्रीगोविन्दवल्लभपन्तने कहा ॥ ६९ ॥

गोविन्दवल्लभ उदात्तमनास्तपस्वी,
श्रीमद्यतीन्द्रमभिलक्ष्य वचांस्यमूनि ।

उक्त्वा प्रणीय हृदये प्रशमं स्वकीय,
आश्वासनं स लभते स्म कथंचिदेव ॥७०॥

पण्डित श्रीगोविन्दवल्लभपन्तजीने महात्माजीके विषयमें इतने वचन कहकर अपने हृदयमें शान्ति स्थापन करके किसी प्रकार आश्वासन प्राप्त किया ॥ ७० ॥

## श्रीसम्पूर्णानन्दः

दिव्यो देवः श्रीमहापूरुषोसौ सर्वाङ्गीणं जीवनं संप्रजीव्य ।
दत्त्वा सत्यं साम्यमास्थाप्य धर्मं सन्मर्माणं संप्रदर्श्य प्रयातः ॥७१॥

वह दिव्य महापुरुष सर्वाङ्गीणजीवन जीकर, सत्य हमें देकर, समताकी स्थापना करके, पवित्र मर्मवाले धर्मको दिखाकर चले गये ॥ ७१ ॥

शक्तिः कार्यं संविधातुं भवेच्चेत्सर्वो लोकः सर्वकर्माधिकारः ।
एवं तत्त्वं सर्वलोकाय दत्त्वा प्रायाल्लोकं स्वीयमस्मान्महात्मा ॥७२॥

यदि कार्य करनेकी शक्ति हो तो सभी लोग सब कर्मोंके अधिकारी हैं, ऐसा तत्त्व सबको देकर श्रीमहात्माजी इस लोकसे स्वलोकको चले गये ॥ ७२ ॥

श्रीसम्पूर्णानन्द ऊचे मनस्वी सर्वानेवं भिन्नभिन्नार्थद्रष्टॄन् ।
अन्यांस्तेन स्वं च संतोष्य विद्वाञ्छोकज्वालां शान्तरूपां चकार ॥७३॥

विद्वान्, मनस्वी श्रीसम्पूर्णानन्दजीने भिन्न-भिन्न विचारवालोंको इस प्रकार कहा और उससे अन्योंको तथा अपनेको भी संतुष्ट करके शोककी ज्वालाको किसी प्रकार शांत किया ॥ ७३ ॥

## चक्रवर्ती श्रीराजगोपालाचार्यः

लुण्ठितः स महानिधिरत्र केनचिद्दुरितपूर्णतमेन ।
एषु दुःखविपलेषु महेशो रक्षताद्विकलभारतमद्य ॥७४॥

किसी महापापीने उस महानिधिको लूट लिया । इन दुःखके क्षणोंमें व्याकुल भारतकी भगवान् रक्षा करे ॥ ७४ ॥

प्रेयसः सकलभारतभूमेर्देशनेतृनयनस्य च तस्य ।
प्राप्य ते बलिमनुत्तममर्घ्यं नश्यतां विशय एव घृणा च ॥७५॥

समस्त भारतभूमिके परमप्रिय और देशके नेताओंकी आँख समान उनके सर्वश्रेष्ठ और अर्घ्य बलिको पाकर संदेह और घृणा यह दोनों ही यहाँसे नष्ट होवें ॥ ७५ ॥

भारतक्षितिरियं विकलास्ति क्रौञ्चविष्किर इवार्तमनस्कः ।
आद्यकाव्यकविसम्मुखमेवं व्याधबाणहतहृद्यसुहृत्कः ॥७६॥

आज भारतभूमि उस प्रकारसे विकल है जैसा कि वह क्रौञ्च पक्षी विकल था जिसका एक प्रिय साथी व्याधके बाणसे वाल्मीकि ऋषिके सामने मारा गया था ॥ ७६ ॥

तां निरीक्ष्य घटनां करुणार्द्रश्रीमहर्षिवदनोद्गतवाचः ।
हेतुतामुपगताः प्रति काव्यं रामचन्द्रचरितामृतपूर्णम् ॥७७॥

उस घटनाको देखकर करुणासे आर्द्र महर्षि वाल्मीकिके मुखसे जो वचन निकले थे वह रामचरितसे पूर्ण काव्यके प्रति हेतु बन गये थे ॥७७॥

तद्वदेव परिदेवयतां नो वक्त्रतो विगलदक्षरमाला ।
मोहनस्य भवतादतिभव्यं काव्यमेव रुचये जनतायाः ॥७८॥

उसी प्रकारसे रोते हुए हमारे मुखसे जो अक्षरमाला निकल रही है वह जनताके आनन्दके लिये भगवान् मोहनका अतिभव्य काव्य बने ॥७८॥

प्रेमसत्यपरिरक्षणहेतोः स्वानसून्व्यसृजदद्य महर्षिः ।
तस्य मूल्यमभिरक्षितुकामैस्तन्न कार्यमिह यन्न सुयोग्यम् ॥७९॥

प्रेम और सत्यकी रक्षाके निमित्त महर्षिने आज अपने प्राणोंका विसर्जन किया है। जिन्हें उस त्यागके मूल्यकी रक्षा करनी है उन्हें वह कुछ भी नहीं करना चाहिये जो अत्यन्त योग्य न हो॥ ७९ ॥

आश्रयः स विपुलः पतितानां सत्यदेवपरिरक्षक ईड्यः ।
अद्य तद्विरहमाप्य निराशा हा गता विनिहता विधिना ते ॥८०॥

वह पतितोंके महान् आश्रय थे। सत्यदेवके प्रशंसनीय संरक्षक थे। आज वह सब उनके विरहसे निराश हुए हैं। विधिने उन्हें मार डाला ॥ ८० ॥

अद्य कष्टसमये स विधात्रा हा हृतः परमदुर्बलदेवः।
शासनं च विधिना हतकेन वञ्चितं बिषमकाल उपेत्य ॥८१॥

आज कष्टके समयमें परम दुर्बलोंके देव महात्माजीको विधाताने उठा लिया। तथा दुष्ट भाग्यने आकर भारत सर्कारको विषम कालमें ठग दिया ॥ ८१ ॥

चक्रवर्ती महाविद्वान् राजगोपाल इत्यमुम्।
अशोचत्पुण्यसम्राजं शोकापहृतचेतसा ॥ ८२ ॥

महाविद्वान् चक्रवर्ती राजगोपालाचार्यजीने पुण्यके सम्राट् उन महात्माजीके लिये शोकातुरचित्तसे इस प्रकार शोक प्रकट किया ॥ ८२ ॥

## डाक्टर भगवानदासः

येनापरे कलिकलङ्कजुषोपि काले,
संरक्षिता अभयवागभिनन्दनेन।
स स्वं न रक्षितुमपारयदेतदेव,
लीलालयस्य च परस्य महापरत्वम् ॥८३॥

जिस महापुरुषने पापियों और अपराधियोंको भी अभयवचन देकर समयपर बचा लिया था वही अपनेको न बचा सका। यही लीलाधर परमेश्वरका परमेश्वरत्व है ॥ ८३ ॥

भव्ये भवेपि नियमोयमुपस्थितो वा,
हन्याज्जनस्तमिह यः परिरक्षितुं तम्।
यावन्मृति प्रयतमानमकल्मषं किं,
हन्तुं ववाञ्छ यतिमद्य परिष्कृतो यत् ॥८४॥

क्या इस जगत्का यही तो नियम नहीं है कि जो जिसको बचानेके

लिये मरणपर्यन्त प्रयत्न करे उसी निर्दोष आत्माका वही वध कर डाले ? इसीलिये उपकृत महात्माजीको मारनेकी इच्छा की ॥ ८४ ॥

सर्वे गता उपकृतिप्रवणा नरेन्द्रा,
एतेन विस्तृततमेन यथा पुरापि।
श्रीमन्महात्मधरणीमणिरेष पुण्यः,
प्रापत्स्वमन्तमिह निश्चितमेव पुण्यम् ॥८५॥

उपकारपरायण सभी महापुरुष इसी विस्तृत मार्गसे पहले भी गये हैं। पवित्र श्रीमहात्माजी निश्चय ही पवित्र मृत्युको प्राप्त हुए हैं ॥ ८५ ॥

ये तस्य नीतिविषये विषमा अभूवं-
स्तेप्यद्य तद्गुणमहत्त्वमुदाहरन्ति।
तत्त्यागिता तदथ मानवताहितत्वं,
लोकाश्रु वाहयति सन्ततमद्य कोष्णम् ॥८६॥

जो लोग उनकी नीतिसे सहमत नहीं थे वह भी उनके गुणोंके महत्त्वका गान कर रहे हैं। उनका वह त्याग और मानवताकी हितैषिता आज लोगोंके गर्म आँसूको बहा रहे हैं ॥ ८६ ॥

तत्त्वज्ञानस्य मञ्जूषा व्यवहारनिरङ्कुशः।
इत्यभिप्रैद्विचारेण भगवान्दासडाक्टरः ॥ ८७ ॥

तत्त्वज्ञानके भण्डार और सब व्यवहारमें स्वतन्त्र श्री० डाक्टर भगवानदासजीने विचारके साथ यह अभिप्राय प्रकट किया था ॥ ८७ ॥

## श्रीराधाकृष्णन् सर्वपल्ली

जातं प्रहारमधिगत्य महात्मदेहे,
शब्दैरवर्ण्यहृदयोन्मथशीलदुःखम्।
बत्कल्पनाविरहितं तदभूदिदानीं,
यातः पवित्रतमदेहभृदद्य वन्द्यः ॥८८॥

महात्माजीके शरीरपर प्रहारको जानकर हृदयको हिला देनेवाला अवर्णनीय कल्पनातीत दुःख हुआ। वह वन्दनीय पवित्र देहधारी चले गये ॥८८॥

सर्वंसहा भगवती मतिरास्त यस्य,
सत्प्रेरणाप्रबलशाश्वतवारिधारा ।
निर्दोषतावनिमहीपतिरार्यवर्यः,
सोप्याहतश्च निहतश्च विचित्रमेतत् ॥८९॥

जिनकी बुद्धि भगवती सबको सहन कर लेती थी, जो सच्ची प्रेरणाके लिये प्रबल नित्य वारिधारा थे, जो निर्दोषताके केन्द्र थे, वह आर्यवर्य भी घायल किये गये और मारे गये, यह विचित्र है ॥ ८९ ॥

विद्वच्छिरोमणिसमर्च्यपयोजपाद—
श्रीमोहनोरसि यदि क्षतिसंविधाता ।
अस्मिन्युगेप्यधिधरं श्वसिति क्षणेन,
सुक्रातयीशुबलिकर्तृगणोस्ति जीवन् ॥ ९० ॥

यदि परमविद्वानोंसे भी पूज्यपाद श्रीमहात्माजीकी छातीमें गोली मारनेवाला इस युगमें भी है तो यह कहना होगा कि सुकरात, यीशुको बलिदान देनेवालोंका गण अभी भी सुखसे जी रहा है ॥ ९० ॥

आसीदतीतयुगजीवितधर्मरूप-
स्तद्देहहानिमपि मोहपरा अकुर्म ।
ज्योतिः परं तदवदत्तमिह स्थितं स-
त्पद्यां प्रकाशपदवीमुपनेष्यते नः ॥ ९१ ॥

वह तो अतीतकालके जीते धर्मके रूप थे । अज्ञानवश हमने उनके भी देहकी हानि कर डाली । उनकी दी हुई महान् ज्योति यहाँ रहकर हमको प्रकाशमय मार्गमें ले जायगी ॥ ९१ ॥

विश्वं समस्तमिह जीवितकाममद्य,
यद्यस्ति तर्हि तददर्शितवर्त्म हित्वा ।
हिंसामपास्य नितरां तदुपास्य सत्यं,
शुद्धिं व्रजेदिति परः परिनिष्ठितोध्वा ॥ ९२ ॥

यदि समस्त जगत् जीनेकी इच्छा रखता हो तो जो मार्ग उन्होंने नहीं बताया है उसे छोड़कर, हिंसाका त्यागकरके, सत्यका ग्रहणकरके शुद्धि प्राप्त करे, यही अन्तिम मार्ग है ॥ ९२ ॥

तद्धानयानविकलो विवशोतिदुःखै-
विद्यामहाजलनिधिः किल सर्वपल्ली ।
सज्ज्योतिराकरयतिक्षितिपस्य राधा--
कृष्णन्नुवाद सुगुणानिति वस्तुविज्ञः ॥ ९३ ॥

महात्माजीके नाश और गमनसे विकल, दुःखसे पराधीन, विद्यासागर, सर्वपल्ली श्रीराधाकृष्णन्ने सत् ज्योतिके आकर महात्माजीके गुणोंका इस प्रकार वर्णन किया ॥ ९३ ॥

## आचार्यः जे० बी० कृपलानी

भवतीह तस्य न शरीरमुज्ज्वलं निखिलस्य निस्स्वकजनस्य दुःखहृत् ।
उपदिष्टमस्य सुखवर्त्म चेद्वयं न कदापि संपरिहरेम शं भवेत् ॥९४॥

समस्त गरीबोंके दुःखोंका नाश करनेवाला महात्माजीका शरीर तो अब नहीं रहा है। परन्तु उन्होंने जिस कल्याणपथका उपदेश किया है, उसका यदि हम त्याग नहीं करें तो हमारा कल्याण होगा ही ॥९४॥

मरणं तदीयमिति बोधनक्षमं न वयं तदीयशमशिक्षणोत्सुकः ।
अथ केन दुःखदमिदं कृतं भवेत्क च वृद्धता क च कृशानुगोलिका ॥९५॥

उनका अवसान यह सूचित करता है कि हम उनकी शान्तिकी शिक्षाकेलिये उत्सुक नहीं हैं। अन्यथा यह दुःखद कार्य क्यों होता ? कहाँ तो वृद्धता और कहाँ आगकी गोलियाँ !! ॥ ९५ ॥

यदि सत्यमस्तु शरणं सदा नृणां तदहिंसनव्रतमपि श्रयन्तु ते ।
ऋषिधर्म एष भविता सनातनो विपरीतता च विपदां निमन्त्रणम् ॥९६॥

यदि मनुष्योंका आश्रय सत्य हो तो उन्हें चाहिये कि अहिंसाके व्रतका

भी वह पालन करें। यही सनातन ऋषिधर्म होगा। इससे विपरीत तो विपत्तियोंको आमन्त्रित करने जैसा ही है ॥ ९६ ॥

**उपदिष्टमत्र जनतासु यन्मुनिः स्वयमप्यनिद्रमभजत्तदेव सः।**
**जगता परीक्षणमिदं स्म गृह्यते गतवान्स पारमिति नात्र संशयः ॥९७॥**

श्री महात्माजीने जनताको जिस तत्त्वका उपदेश दिया है और जिसका वह स्वयं भी आचरण करते थे, जगत् उसकी परीक्षा ले रहा था। महात्माजी उत्तीर्ण हो गये, इसमें सन्देह नहीं था ॥ ९७ ॥

**अविजातशत्रुरपि यत्र घातितो,**
**हतभाग्यमेव भरतक्ष्मातलम् ।**
**न विदेशिराज्यमपि यत्कृतं क्वचित्त-**
**दकारि भारतसुतेन केनचित् ॥९८॥**

जहाँ अजातशत्रु भी मारा जाता है वह देश वस्तुतः हतभाग्य ही है। विदेशी शासनने भी जो काम नहीं किया वही काम भारतके एक पुत्रने कर दिया ॥ ९८ ॥

**शुभभाग्यभाजनमिमे वयं यतो,**
**यतिरागमत्स कृपयास्मदादिषु ।**
**परतन्त्रतातिमथितान्त्रनाडिषु,**
**पतनानुभूतिविकलातिमानुषः ॥९९॥**

हमारा धन्य भाग्य है कि श्री महात्माजी कृपाकर हमारे बीचमें पधारे थे। हमारी आन्त्र नाडियाँ परतन्त्रतासे निचो ली गयी थीं। महात्माजी हमारे पतनको देखकर बहुत व्याकुल थे ॥ ९९ ॥

**अभवद्विनाशपथिकाश्रयाश्रमो,**
**बतदेश एष हृदयानुभञ्जनम् ।**
**इदमस्ति तेन सकलैः समन्वितै-**
**र्यतिदर्शितेन हि पथा प्रयायताम् ॥१००॥**

यह देश विनाशरूप पथिकके आश्रयके लिये आश्रम बन गया है। यह जो बन गया है वह हृदयको तोड़ डालनेवाला कृत्य है। सबको इकट्ठे होकर श्रीमहात्माजीके बताये मार्गसे ही चलना चाहिये ॥ १०० ॥

गलितादरा अपि वयं धरातले,
कृपया हि यस्य परिवेष्टितादराः।
स गुरुः पिता स सुहृदार्तरक्षको,
गतएव हन्त निखिलान्विहाय नः ॥१०१॥

पृथिवीपर हमारा कोई मान नहीं था। जिसकी ही कृपासे हम मानवान् बने वह हमारा गुरु, हमारा पिता, हमारा मित्र, दीनबन्धु हम सबको छोड़कर चला गया ॥ १०१ ॥

अथ धर्मजातिगतभेदमर्दना-
त्कुटिलप्रवृत्तिपरिवृत्तिसेवनात्।
यतिराजशिक्षणशिरोवधारणा-
न्निजमातृभूमिगुरुतामवामहै ॥१०२॥

धर्म और जातिके भेदको मिटा देनेसे, कुटिल प्रवृत्तिको बदल डालनेसे, तथा यतिराजकी शिक्षाको शिरोधारण करनेसे हम मातृभूमिके गौरवकी रक्षा करें ॥ १०२ ॥

मृतिजीवने समतया मते मते
यतिशेखरस्य विजरामरस्य हि।
मृतिमाप्य सर्वविधवेदनाबहि-
र्निजरूपमापदविलम्बमीश्वरः ॥१०३॥

श्री महात्माजी अजर और अमर थे। उनकी दृष्टिमें मरण और जीवन दोनों ही समान थे। मृत्युके पश्चात् वह तो शीघ्र ही सब प्रकारकी वेदनासे अलग जो उनका स्वरूप था उसे प्राप्त हो गये ॥१०३॥

क्षतिरेव नाभवदितस्य तस्यका-
प्यथ भारतं प्रतिगतं समुन्नतेः।

सकलाश्रयः श्रुतिवचः प्रबोधितं,
गत एव धाम स तु रामनामतः ॥१०४॥

उनकी तो कोई क्षति हुई ही नहीं। वह तो श्रीरामनामके प्रतापसे वेदप्रतिपादित नित्य धामको चले गये। परन्तु भारत उन्नतिसे पीछे हट गया ॥ १०४ ॥

कृपलानिरेवमनिशं हृदा तप-
न्नुपदेशनामुपदिशञ्जगद्गुरोः ।
कथमप्यपारविपदः पथः सदा,
शिवतां च भारतभुवं निनीषति ॥१०५॥

आचार्य कृपलानी इस प्रकार हृदयमें सन्तप्त होते हुए तथा जगद्गुरुके उपदेशोंको लोगोंको उपदेश करते हुए किसी प्रकारसे भी भारतभूमिको अपार विपत्तिके मार्गको कल्याणकी ओर ले जाना चाहते हैं॥ १०५ ॥

## अचार्य नरेन्द्रदेवः

लीलां समापयदहो महितः स्वकीयां,
पुण्यात्मभिर्विबुधचारुचयैः सदैव।
एतद्युगस्य स महापुरुषोभिवन्द्यः,
श्रद्धाभृतैर्निखिलविश्वबुधप्रकाण्डैः ॥१०६॥

पुण्यात्माओं, विद्वानोंके समूहों से सदा ही पूजित तथा विश्वके श्रद्धापूर्ण समस्त विद्वानोंके वन्दनीय इस युगके महापुरुष श्रीमहात्माजीने अहो, अपनी लीला समाप्त की ॥ १०६ ॥

आध्यात्मिकीः प्रियतरा उपदेशमालाः,
सामाजिकीर्नवनवा व्यवहाररीतीः।
सोशिक्षयज्जगदनन्तकलामहेशः,
सोद्योतयत्पुनरपि द्युतिमात्मनीनाम् ॥१०७॥

उन्होंने जगत्को आध्यात्मिक उपदेश और नवीन नवीन सामाजिक व्यवहारकी रीतियोंका शिक्षण दिया। अनन्तकलाके अधिष्ठाता उन्होंने आत्मकल्याणके प्रकाशको पुनः प्रकाशित किया ॥ १०७ ॥

संत्यज्य दिव्यविभवो यदि मृत्युशय्यां,
पुण्यानुभाव इह राष्ट्रपिता श्वसेत्सः ।
देहास्थिरत्वमखिलान्परिबोध्य शिष्या-
न्भूयोपि भव्यपदवीं प्रतिपादयेत ॥ १०८ ॥

दिव्यविभूतिवाले वह राष्ट्रपिता यदि मृत्युशय्याको छोड़कर पुनः जीवन धारण करते तो फिरसे सब मानवोंको देहकी अस्थिरताका उपदेश करके भव्यमार्गका प्रतिपादन करते ॥ १०८ ॥

प्रेम्णा शमेन गुरुणा रचिते चितेन,
सत्येन वर्त्मनि परे जगदर्पयेत ।
पादं यदि क्वचिदपि स्खलतिं न पश्ये-
त्पश्येत्परात्मपदवीं गतरोषरागम् ॥ १०९ ॥

श्री महात्माजीने प्रेम, शान्ति और सत्यसे जिस मार्गका निर्माण किया है यदि जगत् उसमें पादार्पण करे तो वह कभी स्खलित न हो प्रत्युत राग दोष आदिसे रहित होकर मोक्षको प्राप्त करे ॥ १०९ ॥

उत्थानवर्त्मनि रता निरता अजस्रे,
सत्ये निरञ्जनगुरुप्रतिपादितेर्थ्ये ।
भूयास्म तस्य कृपयेति नरेन्द्रदेव,
आचार्य आह यतिराजवियोगतप्तः ॥ ११० ॥

श्रीमहात्माजीके वियोगसे संतप्त होकर आचार्य श्रीनरेन्द्रदेवजीने कहा कि उत्थानमार्गमें लगे हुए हम सब उन्हींकी कृपासे उन्हींके बताये हुए श्रेष्ठ, अविनाशी, सत्यमें निरत रहें, ऐसी प्रार्थना है ॥ ११० ॥

## भारत सर्कार

सातत्येन जगदुपादिशन्महात्मा,
सत्यं धर्ममविचलं तथातिपुण्यम्।
नीचानीचविभिदया प्रणङ्क्ष्यति श्रीः,
सर्वे सन्ति सपितृका इति प्रबोधम् ॥ १११ ॥

श्री महात्माजीने हमें सदा अतिपवित्र, अविचल सत्यका उपदेश दिया है। उन्होंने यह उपदेश भी दिया है कि नीच, ऊँचके भेदसे श्रीका नाश हो जायगा। हम सब एक ही पिताके पुत्र हैं ॥ १११ ॥

सर्वस्यां व्यपगलदुच्चनीचतायां,
लक्षाधीशधनजनाद्यभावभाजि ।
विद्याहीनसकलशास्त्रमण्डिते च,
साम्यं दत्त्वा गत इतो मनुष्यजातौ ॥ ११२ ॥

जिसमेंसे ऊँच नीच भाव निकला जा रहा है उस मनुष्य जातिमें, चाहे कोई लक्षाधीश हो अथवा धनजन आदिसे रहित हो, चाहे विद्याहीन हो, चाहे सकलशास्त्रसे मण्डित हो-समानता देकर वह यहाँसे चले गये ॥११२॥

प्रागाद्भारतभुवि जन्मना निजस्य,
पावित्र्यं सुशुचिमना विधाय सम्यक्।
निर्दोषं शमसमतादिपुण्यकार्यं,
कृत्वा कर्तुमपि भुवि प्रबोध्य सर्वान् ॥ ११३ ॥

अत्यन्त पवित्रमनवाले श्रीमहात्माजी भारतभूमिमें अपने जन्मसे पवित्रता पैदा करके निर्दोष, शान्ति और समता आदि पुण्यकार्य करके पृथ्वीपर सबको वही सब करनेकेलिये भी उपदेश देकर चले गये ॥११३॥

तस्य प्रयततपोबलेन भारतीयं,
राज्यं जातमिह ततस्तदीयकामम् ।
सर्वांशेन सफलमाविधातु मद्य,
प्रतिज्ञा क्रियत उदात्तशासनेन ॥ ११४ ॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
एकोनविंशः सर्गः

उन्हींके संयत तपोबलसे यहाँ भारतीय शासन स्थापित हुआ है। अतः उनकी इच्छाको सर्वांशमें सफल करनेके लिये आज भारतसर्कार प्रतिज्ञा करती है ॥ ११४ ॥

इति श्रीपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायां
एकोनविंशः सर्गः



# विंशः सर्गः

विरलाभवने तस्मिन्यस्मिन्यतिरुपावसत् ।
द्वादशवासरात्पूर्वं तस्य देहमशाययत् ॥१॥

१२ दिन ही पूर्व जिस विरलाभवनमें श्रीमहात्माजीने उपवास किया था उसीमें उनके शरीरको सुला दिया गया ॥ १ ॥

समाचारं निशम्यैव श्रीजवाहरनेहरूः ।
वल्लभोश्च ययतुस्तत्र नितरां बापुवल्लभौ ॥२॥

समाचारको सुनते ही बापूजीके अतिप्रिय पण्डित श्रीजवाहिरलालजी नेहरू और सर्दार श्रीवल्लभभाई वहाँ गये ॥ २ ॥

भारतराष्ट्रजनकः सर्वभूक्षेमसाधकः ।
श्रीमोहनो गतः स्वस्य लौकैर्लोकमिति श्रुतम् ॥३॥

लोगोंने यह सुना कि भारतराष्ट्रपिता, सर्व जगत्‌के कल्याण करनेवाले श्रीमहात्माजी अपने लोकको पधार गये ॥ ३ ॥

हाहाकारेण निखिलं जगदभ्रं प्रपूरितम् ।
दिशोपि विदिशः पूर्णाः शोकोच्छ्वाससमीरणैः॥४॥

हाहाकारसे समस्त जगदाकाश भर गया । दिशाएँ और विदिशाएँ शोककी आहोंसे भर गयीं ॥ ४ ॥

अद्याभवन्निराधारा हा हा हन्त वसुन्धरा ।
अभिव्याप्तो भवश्चाद्याभव्यैः सन्तमसैर्बत ॥५॥

आज वसुंधरा निराधार बन गयी । संसार आज अन्धकारसे व्याप्त हो गया ॥ ५ ॥

अवाग् जवाहरो जातः रसनातो रसो गतः ।
वल्लभोपि पराधीनस्तदानीमभवच्छुचः ॥६॥

उस समय प० जवाहिरलालजी बोल नहीं सकते थे। उनकी जीभ सूख गयी थी। सर्दारवल्लभभाई भी उस समय शोकपराधीन हो गये थे ॥ ६ ॥

वेपमानस्वरः श्रीमान्वाचया कम्पमानया।
जवाहरो वृत्तमेतद्भारते समजूघुषत् ॥७॥

काँपते हुए आवाजवाले पण्डितजीने काँपती हुई जीभसे इस समाचारको भारतमें घोषित किया ॥ ७ ॥

तत्रारात्रि जनाः सर्वे वीतनिद्रा अजागरुः।
द्वितीये दिवसे देहं पुत्रस्तस्य समस्कृत ॥८॥

वहाँ सबकी नींद उड़ गयी थी। सभी रातभर जागते रहे। दूसरे दिन महात्माजीके पुत्र श्रीदेवदासगांधीने उनके देहका संस्कार किया ॥ ८ ॥

देहो महात्मनस्तस्य खट्वायां शायितोभवत्।
नेत्रे निमीलिते आस्तामनावृतमुरः क्षतम् ॥९॥

महात्माजीके देहको पलंगपर सुला दिया गया। आँखें बन्द थीं और घायल छाती उघाड़ी थी ॥ ९ ॥

पावने तस्य कण्ठे च खादीमाला व्यशोभत।
अद्यापि वदनं चारु पद्मशोभामचूचुरत् ॥१०॥

पवित्र गलेमें खादीकी माला शोभा देती थी। मुख तो अभी भी कमलसे भी अधिक सुन्दर था ॥ १० ॥

तत्रत्या मेदिनी सर्वा पुष्पराजैः समावृता।
घृतदीपोज्ज्वलत्तत्र चन्दनागुरुधूपितः ॥११॥

वहाँकी पृथिवी गुलाबसे ढँक गयी थी। चन्दन, अगरसे धूपित घृतदीप वहाँ जल रहा था ॥ ११ ॥

सर्दारवल्लभो राजकुमार्यमृतकोरका ।
गोविन्दवल्लभः पन्तः समतिष्ठन्त भूरिभिः ॥१२॥

सर्दारवल्लभभाई, श्रीराजकुमारी अमृतकोर, पण्डित गोविन्दवल्लभपन्त बहुत लोगोंके साथ वहाँ बैठे थे ॥ १२ ॥

सर्वेषामेव देशानां प्रातिनिध्यं हि बिभ्रतः ।
पुष्पमाला यतीशस्य तदा देहे समार्पिपन् ॥१३॥

सब देशोंके प्रतिनिधियोंने उस समय महात्माजीके शरीरपर पुष्पमालाएँ अर्पण कीं ॥ १३ ॥

ब्रिटिश्राज्यप्रतिनिधिर्लार्ड माउन्ट बेटनः ।
उभाभ्यां स्वीयकन्याभ्यां कृष्णवस्त्रः समागमत् ॥१४॥

ब्रिटिशराज्यके प्रतिनिधि वाइसराय लार्ड माउन्ट बेटन अपनी दोनों कन्याओंके साथ काले वस्त्रके साथ आए ॥ १४ ॥

चम्वा श्रीभारतीयस्य शासनस्य सुमोटरम् ।
आनीतं तत्र मञ्चं च समुन्नतमकारयत् ॥१५॥

भारतसर्कारकी सेना मोटर ले आयी थी । उस पर ऊँचा मंच बनाया गया था ॥ १५ ॥

श्वेतेन खादिवस्त्रेण मोटरं तत्समावृतम् ।
पुष्पैर्नानाविधैस्तत्रोपरिभागः समावृतः ॥१६॥

सफेद खादीसे वह मोटर ढाँक दी गयी थी । उसके ऊपर नाना प्रकारके फूल बिछाए गये थे ॥ १६ ॥

तत्रैव जगदर्च्यस्य शवः संस्थापितोभवत् ।
संनिधौ पादयोः श्रीमान् वल्लभः समतिष्ठत ॥१७॥

उसी पर जगत्पूजनीय महात्माजीका देह रखा गया । चरणोंके पास श्रीवल्लभभाई बैठे हुए थे ॥ १७ ॥

पादोने द्वादशहोरे मध्याह्ने निरगाद्रथः।
विरलाभवनाद्दिल्यां जयकारपुरस्सरः ॥१८॥

पौने बारह बजे दोपहरको दिल्लीमें विरला भवनसे जयजयकारके साथ रथ निकला ॥ १८ ॥

सोसौ शवरथः श्रीमानकृष्यत मिलद्भुजैः।
वायुस्थलजलादीनां सैनिकैः श्रद्धया ततः ॥१९॥

उस रथको वायुसेना, स्थलसेना, जलसेनाके सैनिक श्रद्धाके साथ खींचते थे ॥ १९ ॥

वल्लभो बलदेवश्च नेहरूश्च जवाहरः।
गांधिर्देवदासश्च तं शवं पर्यवारयन् ॥२०॥

पण्डित जवाहिरलालजी, सर्दारवल्लभभाई, सर्दार बलदेवसिंह तथा श्रीदेवदासगांधी शवके चारों ओर बैठे थे ॥ २० ॥

राजेन्द्रः कृपलानी च पन्तगोविन्दवल्लभः।
बहवोन्ये च नेतारः समावृण्वन्यतेः शवम् ॥२१॥

बाबू श्रीराजेन्द्रप्रसादजी, आचार्य जीवतराम भगवान्दास कृपलानी, पण्डित गोविन्दवल्लभपन्त और दूसरे बहुतसे नेता शवके चारों ओर बैठे थे ॥ २१ ॥

गोरखासैनिकाः सर्वे पादाताः सैनिकास्तथा।
व्यापृतास्त्वरिताः सर्वे रथमार्गसमीकृतौ ॥२२॥

गोरखा सैनिक और पैदल सैनिक रथके मार्गको बराबर करनेमें झट लग गये थे ॥ २२ ॥

गव्यूतिमितमार्गेषु गृहा गृहतलानि च।
विद्युत्स्तम्भा उपपथास्तरवो जनविप्लुताः ॥२३॥

चार माइलके रास्ते भर घर, घरका ऊपरी भाग, बिजलीके खम्भे, उपमार्ग और वृक्ष सब आदमियोंसे भरे हुए थे ॥ २३ ॥

मृतोपि स महानात्मा जीवन्निव निरन्तरम् ।
मनुष्यसागरं कर्षन्पुरो याति स्म धीश्वरः ॥२४॥

जैसे जीवित अवस्थामें वह मनुष्योंको अपने पीछे खींचते थे वैसे ही मृतावस्थामें भी वह मनुष्यसागरको खींचते हुए जा रहे थे ॥ २४ ॥

जना अगणिता आसञ्शान्तिरासीदपूर्विका ।
आकाशं पूरितं सम्यग्जयशब्दैर्महात्मनः ॥२५॥

मनुष्य तो पार विनाके थे, शान्ति अपूर्व थी, और "महात्मागांधीका जय" इन शब्दोंसे आकाश भर गया था ॥ २५ ॥

विहगा नीरवा आसन्निष्कम्पा अनोकहाः ।
सहस्ररश्मिर्निस्तेजा वायुरासीद्गलद्गतिः ॥२६॥

पक्षी चुप थे । वृक्ष निष्कम्प खड़े थे । सूर्य निस्तेज था और वायुकी गति क्षीण हो गयी थी ॥ २६ ॥

नभो नीलाम्बरवृतं शोकसंवेगमूर्छितम् ।
जयध्वनिभिराकीर्णं स्वयं दुःखेन नीरवम् ॥२७॥

आकाश कालावस्त्र पहिने हुए था । शोकके वेगसे मूर्च्छित था । जयध्वनिसे पूर्ण था परन्तु स्वयं दुःखसे चुपचाप था ॥ २७ ॥

देहलीद्वारसविधे वायुसेनाः खयानतः ।
अल्पकालान्तरालेन कुसुमानि समाकिरन् ॥२८॥

दिल्लीदर्वाजेके पास वायुसेनायें आकाशयानसे थोड़ी-थोड़ी देरमें फूल बर्साती थीं ॥ २८ ॥

नभसो नीलिमा तस्मिन्काले मिथ्यात्वमाभजत् ।
पुष्परेणुमयं भातं निखिलं व्योममण्डलम् ॥२९॥

उस समय आकाशका नीलापन झूठा पड़ गया था । सम्पूर्ण आकाश-मण्डल पुष्परेणुमय हो गया था ॥ २९ ॥

चतुर्होरावसरेसौ विंशत्या चाधिकैः पलैः ।
राजघाटं रथः प्राप यमुनायास्तटोत्तमम् ॥३०॥

चार बजकर बीस मिनटपर वह रथ यमुनाजीके राजघाट तटपर पहुँच गया ॥ ३० ॥

पूर्वस्यां यमुनासेतोः रक्तदुर्गस्य पृष्ठके ।
यतिराजशवं दग्धुं वेदिका निर्मिताभवत् ॥३१॥

यमुनापुलकी पूर्व दिशामें, लाल किलेके पीछे, महात्माजीके शवका दाह करनेके लिये वेदी बनायी गयी थी ॥ ३१ ॥

अष्टहस्तमिता दीर्घा विस्तृतापि तथैव च ।
हस्तद्वयमिता चोच्चैर्वेदिरासीदनुत्तमा ॥३२॥

वह सुन्दर वेदी आठ हाथ लम्बी, आठ हाथ चौड़ी और दो हाथ ऊँची थी ॥ ३२ ॥

होरार्धेन चतुर्होरे तस्यां वेदौ महामुनेः ।
अवतार्य रथात्तस्मात्पवित्रः शायितः शवः ॥३३॥

साढ़ेचार बजे महात्माजीका पवित्र शव उस रथसे उतारकर उस वेदिपर सुलाया गया ॥ ३३ ॥

शर्मा रामधनो विद्वानस्नपयच्छवं तदा ।
यामुनेन जलेनापि वेदौ तस्यां महात्मनः ॥३४॥

विद्वान् रामधनशर्माजीने उस वेदीपर महात्माजीके शरीरको यमुना जलसे स्नान कराया ॥ ३४ ॥

मणानां पञ्चदशकं चान्दनं काष्ठमास्थितम् ।
कपूरं सेटकाः पञ्चदशैकमणलाङ्गली ॥३५॥
द्रव्याण्यन्यानि योग्यानि चतुर्मणमितं घृतम् ।
एतैः सुवस्तुभिस्तस्य शर्मान्त्येष्टिमकारयत् ॥३६॥

पन्द्रह मन ( बंगाली तौल ) चन्दनकी लकड़ी, पन्द्रह सेर कपूर, एक मन नारियल, चारमन घी, दूसरे भी सुगन्धित द्रव्य इन सब वस्तुओं से रामधनशर्माने अन्त्येष्टि संस्कार कराया ॥ ३५-३६ ॥

पलैः पञ्चभिरूने पञ्चहोरे व्रजद्दिने ।
सायाह्ने च सुतस्तस्य देवदासो गुणान्वितः ॥३७॥
सर्वेषामग्निशमने यतिराजशवे तदा ।
ध्वनिभिर्वेदमन्त्राणामग्निं प्रावेशयद्द्रुत ॥३८॥

सायङ्काल जब दिन ढल रहा था तब चार बजकर पंचावन मिनटपर महात्माजीके ( छोटे ) पुत्र श्रीदेवदास गांधीने वेदमन्त्रोंके साथ महात्मा जीके उस शरीर ( मृत ) में अग्निप्रवेश कराया जो मृत होकर भी सबकी आगको शान्त कर रहा था ॥३७॥३८॥

अस्तंगते दिवानाथे प्रजानाथशवस्तथा ।
भस्मीभूय प्रकाशाढ्यस्तमोहन्ता बभौ पुनः ॥३९॥

जब सूर्य अस्त हो गया था तब महात्माजीका शव भी भस्म होकर प्रकाशपुञ्ज बनकर अन्धकारका नाश करनेवाला होकर फिरसे शोभित होने लगा ॥ ३९ ॥

साश्रुकण्ठा गलद्वाणी गतरत्ना गताश्रया ।
निष्प्रकाशमनाः सर्वा जनता संन्यवर्तत ॥४०॥

गला भरा हुआ था, वाणी लड़खड़ा रही थी, रत्न चला गया था, आश्रय टूट चुका था, मन प्रकाशहीन था, ऐसी जनता लौट आयी ॥४०॥

चितारक्षाकृते तत्र सैनिकाः स्थापितास्तदा ।
प्रातःकाले पुनर्लोकाश्चितास्पर्शाय वव्रजुः ॥ ४१ ॥

चिताकी रक्षा करनेकेलिये सर्कारने वहाँ सैनिक तैनात कर दिये। प्रातःकाल होते ही फिर लोग चितास्पर्श करनेको वहाँ गये ॥४१॥

श्रीमाञ्जवाहरस्तत्र चितावेद्यां हतप्रभः ।
मालां समर्पयामास पुष्पराजविनिर्मिताम् ॥ ४२ ॥

पण्डित जवाहरलालजीने प्रभाशून्य होकर चिताकी वेदीपर गुलाबका हार चढ़ाया ॥ ४२ ॥

विधिवद्वेदवाणीभिः पूजां कृत्वा च भस्मनः ।
तृतीयस्मिन्दिने सोमवारेभूत्संचितं हि तत् ॥ ४३ ॥

तीसरे दिन सोमवारको (जो श्रीमहात्माजीका मौनवार था,) वेदमन्त्रोंसे श्रीभस्मकी विधिवत् पूजा करके भस्मसंचय किया गया ॥४३॥

गाङ्गेयेन जलेनैतद्वेदपाठपुरस्सरम् ।
अभिषिच्य व्यधात्ताम्रपात्रे पावित्र्यसंमते ॥ ४४ ॥

वेदपाठ करके गङ्गाजलसे उस भस्मका अभिषेक करके पवित्र ताम्रपात्रमें पधरा दिया गया ॥ ४४ ॥

भस्मसंग्रहकालेपि राजदूता विदेशिनः ।
पत्रसम्पादकाः सर्वे देशदेशान्तरागताः ॥ ४५ ॥

भस्मके संग्रह करनेके समय भी विदेशीय राजदूत तथा देश-देशान्तरसे समाचार पत्रोंके सम्पादक सब आ गये थे ॥ ४५ ॥

बहवो हिन्दवस्तत्र नेतारो मुस्लिमास्तथा ।
निखिलाः प्रान्तपालाश्च सर्वे एव उपस्थिताः ॥ ४६ ॥

वहाँपर बहुतसे हिन्दूनेता, मुस्लिमनेता, और सब गवर्नर, यह सब उपस्थित थे ॥ ४६ ॥

द्वादश्यां फर्वरीमासे भस्मनोंशः कियानपि ।
महता सुप्रबन्धेन प्रक्षिप्तो यमुनाजले ॥ ४७ ॥

ता० १२ फरवरी १९४८ ई० गुरुवारको बड़े भारी प्रबन्धके साथ उस भस्मका थोड़ा-सा भाग यमुनाजीमें डाला गया ॥ ४७ ॥

महापुण्यात्मनस्तस्य द्रष्टुं भस्मविसर्जनम् ।
पौरा वैदेशिका लोका यमुनासेतुसंस्थिताः ॥ ४८ ॥

श्रीमहात्माजीके भस्मविसर्जनका दर्शन करनेकेलिये नागरिक और विदेशीय लोग यमुनापुलपर खड़े थे ॥ ४८ ॥

तीर्थराजे प्रयागे च मुनिवृन्दाभिपूजिते ।
त्रिवेण्यां भस्म विस्रष्टुं प्रबन्धोनुत्तमोभवत् ॥ ४९ ॥

मुनियोंसे सेवित तीर्थराजप्रयागमें त्रिवेणीमें भस्मविसर्जन करनेके लिये बहुत सुन्दर प्रबन्ध हुआ था ॥ ४९ ॥

विशिष्टधूमयानेन पताकाभूषितेन च ।
प्रयागं भस्म तन्नेतुं प्रातिष्ठन्त च नायकाः ॥ ५० ॥

पताकाओंसे सजायी हुई रेलगाड़ीके द्वारा उस भस्मको प्रयाग लेजानेके लिये नेता लोगोंने प्रस्थान किया ॥ ५० ॥

धूमयानं हरिद्वर्णं सर्वशोभाकरं परम् ।
लसद्राष्ट्रपताकाभिः पुष्पमालाविभूषितम् ॥ ५१ ॥
चतुर्भिश्च शतैर्लोकैः परिपूर्णं समन्ततः ।
देहलीस्टेशने द्रष्टुं जनानां कोटयः स्थिताः ॥ ५२ ॥

जिसका रंग हरा था, शोभा अपार थी, राष्ट्रझंडोंसे जो शोभित थी, फूलोंकी मालासे जो सजायी गयी थी, चार सौ मनुष्य जिसमें बैठे थे, उस रेलगाड़ीको देखनेकेलिये करोड़ों आदमी दिल्ली स्टेशनपर उपस्थित हुए ॥५२॥

अङ्कितेशोकचक्रेण सिंहमुद्राभिरङ्किते ।
महाभाग्ये च तद्याने शासनस्था यशस्विनः ॥ ५३ ॥
स्वदेशीयविदेशीयाः पत्त्रकाराश्च सैनिकाः ।
उच्चाधिकारिणः भस्म संरक्षाधिकृताः समे ॥ ५४ ॥

उस गाड़ीमें अशोकचक्र लगा हुआ था, सिंहकी मुद्राएँ लगी थीं। उसमें बैठनेवाले शासनके लोग थे, स्वदेशीय और विदेशीय पत्रकार

थे, सैनिक थे, उच्च अधिकारी थे। वह सब भस्मकी रक्षाकेलिये नियुक्त थे ॥ ५३ ॥ ५४ ॥

व्यवस्थां वह्नियानस्य निरीक्ष्य च परीक्ष्य च ।
जवाहरो जवेनागात्तीर्थराजं खवर्त्मना ॥ ५५ ॥

पण्डित जवाहिरलालजी रेलगाड़ीकी व्यवस्था देखकर और परीक्षा करके विमानसे प्रयाग चले गये ॥ ५५ ॥

अग्नियानविभागस्याध्यक्षजानमथायिना ।
प्रबन्धोक्रियत श्रेष्ठः तस्यया नस्य भस्मनः ॥ ५६ ॥

रेलविभागके अध्यक्ष श्री जानमथायीने उस भस्मकेलिये गाड़ीका उत्तम प्रबन्ध किया था ॥ ५६ ॥

तत्रैकस्मिन्महाभागे विभागे यानमध्यगे ।
चतुष्पादमधिष्ठाय चतुष्पादं व्यराजत ॥ ५७ ॥

गाड़ीके बीचों बीच एक विभागमें, एक चौकी रखी गयी थी और उसके ऊपर दूसरी चौकी शोभा देती थी ॥ ५७ ॥

वस्त्रेण खद्दरेणेमे चतुष्पादे स्तृते उभे ।
उपरिष्ठे चतुष्पादे भस्मपात्रं न्यधीयत ॥ ५८ ॥

दोनों ही चौकियाँ खद्दरसे ढंकी हुई थीं। ऊपरकी चौकीपर भस्मपात्र रखा हुआ था ॥ ५८ ॥

रक्षायै तस्य पात्रस्य सैनिकानां चतुष्टयी ।
प्रामाणिकी च सश्रद्धा शासनेन न्ययुज्यत ॥ ५९ ॥

उस भस्मपात्रकी रक्षाकेलिए सर्कारकी ओरसे प्रामाणिक और श्रद्धालु चार सैनिक तैनात किये गये थे ॥ ५९ ॥

अग्नियानस्थितिस्थानेष्वखिलेषु च सैनिकाः ।
पण्णियुक्ताः स्थिता आसन्रक्षितुं भस्म भास्वरम् ॥ ६० ॥

सभी स्टेशनोंपर छ छ सैनिक भस्मकी रक्षाकेलिये नियुक्त थे ॥ ६० ॥

**सर्वत्रैव पथि प्रेष्ठदेहभस्मानुदर्शनम् ।**
**कर्तुं संगता आसन्नसंख्येया महाजनाः ॥ ६१ ॥**

रास्तेमें सभी जगह उस परमप्रियदेहके भस्मका दर्शन करनेकेलिये अगणित लोग इकट्ठे होते थे ॥ ६१ ॥

**दिल्लीतो गाजियाबादं वह्नियानमुपागमत् ।**
**अलीगढं ततः प्रापत् टूंडलां च ततः परम् ॥ ६२ ॥**

गाड़ी दिल्लीसे गाजियाबाद, अलीगढ़ होकर टूंडला पहुँची ॥ ६२ ॥

**कानपूरं ततः प्रागात्प्रयागं यज्ञपावितम् ।**
**इदानीं भस्मना तेन पुपूषन्तं स्वमादरात् ॥ ६३ ॥**

टूंडलासे गाड़ी कानपुर पहुँची । वहाँसे प्रयागमें गाड़ी पहुँच गयी । प्रयाग यज्ञोंसे तो पवित्र ही था और अब उस भस्मसे अपनेको पवित्र करना चाहता था ॥ ६३ ॥

**तद्द्रष्टुं श्रीमहादेवभस्म पूतं परं जनाः ।**
**दूर दूरतरात्प्रापुः प्राप्तुमेव कृतार्थताम् ॥ ६४ ॥**

उन महान् देवके परम पवित्र भस्मका दर्शन करनेकेलिये और कृतार्थ होनेकेलिये दूर दूरसे लोग वहाँ आये थे ॥ ६४ ॥

**संगताः पूर्वमेवासन्प्रयागे कुम्भपर्वणि ।**
**बहवस्तेन संमर्दः कल्पनातीत उत्थितः ॥ ६५ ॥**

प्रयागमें कुम्भका पर्व था अतः पहिलेसे ही बहुतसे लोग इकट्ठे थे । अतः भस्म के समय कल्पनातीत भीड़ इकट्ठी थी ॥ ६५ ॥

**एको रथो महांस्तत्र दारवः सुविभूषितः ।**
**पताकाभिर्ध्वजैश्चैव दर्शनीयो व्यतिष्ठत ॥ ६६ ॥**

वहाँ स्टेशनपर पताकाओं और ध्वजोंसे विभूषित अत एव दर्शनीय एक लकड़ीका महान् रथ तैयार था ॥ ६६ ॥

भस्मपात्रं महामूल्यमवतार्य रथात्ततः ।
स्थापयामासतुस्तस्मिन्रथे नेहरुवल्लभौ ।। ६७ ।।

उस गाड़ीपरसे महामूल्य भस्मपात्रको उतारकर पं० जवाहिरलालजी और सर्दारवल्लभभाई पटेल, दोनोंने उस रथपर स्थापित किया ।। ६७ ।।

रथो महान् पुनस्तत्र मण्डपो निरमीयत ।
मध्येमण्डपं भव्यं सिंहासनमुपस्थितम् ।। ६८ ।।

एक तो रथ ही बहुत बड़ा था उस पर मण्डपके मध्यभागमें एक सिंहासन रखा हुआ था ।। ६८ ।।

तस्मिन्सिंहासने देवदेवस्य तनुभस्मनः ।
कियानेवांश उत्क्षेप्तुं त्रिवेण्यां संन्यधीयत ।। ६९ ।।

उस सिंहासनपर महात्माजीके भस्मका थोड़ासा भाग त्रिवेणीमें पधरानेके लिये रखा गया ।। ६९ ।।

अहो रथस्य वैशाल्यमहो शोभा महीयसी ।
पुष्पहारमहाराजिराजितस्य पताकिनः ।। ७० ।।

पुष्पहारों और पताकाओंसे सुशोभित उस रथकी विशालताकी क्या कहें ? उसकी बड़ी शोभाका कैसे वर्णन हो ? ।। ७० ।।

जनानां कोटयस्तत्र मार्गे भस्म दिदृक्षवः ।
चिरेण समतिष्ठन्त विगतस्पन्दचक्षुषः ।। ७१ ।।

भस्मके दर्शनके लिये रास्तेमें निर्निमेष ( आँखकी पलक गिराये बिना ही ) देरसे लोग खड़े थे ।। ७१ ।।

भस्मोद्धूलितसद्गात्रः कैलासशिखरे स्थितः ।
महादेव इव ध्यातं मण्डपस्थं च भस्म तत् ।। ७२ ।।

जैसे कैलासके शिखरपर भस्म लगाये हुए शङ्करजी ही न हों, इस प्रकारसे उस मण्डपमें स्थित भस्मको लोगोंने समझा ।। ७२ ।।

सर्वेषामग्रतो गच्छन्मोटरं ध्वनिवर्धकम् ।
हृदये संनिधायैव श्रावयद्वृत्तमन्तिमम् ॥ ७३ ॥

सबसे आगे एक मोटर थी। उसमें लाउड स्पीकर रखा हुआ था। अब कहाँ क्या होगा उसकी सूचना वह ध्वनिवर्धक यन्त्र दे रहा था ॥७३॥

पादातैर्गोरखासैन्यैरश्वारोहैश्च सैनिकैः ।
अनुयातो रथो यातस्त्रिवेणीसंगमं तदा ॥ ७४ ॥

रथके पीछे-पीछे गोरखा फौज थी, घोड़ेसवार सैनिक थे। वह रथ त्रिवेणीसंगमपर पहुँच गया ॥ ७४ ॥

गङ्गा च यमुना चैव महाभागा सरस्वती ।
भस्मरूपमुपायान्तमपश्यन्विष्णुमीहितम् ॥ ७५ ॥

गङ्गा, यमुना और सरस्वतीने भस्मरूपसे आते हुए भगवान् विष्णुको देखा ॥ ७५ ॥

तद्दर्शनेन सर्वासां हृदयं शैत्यमस्पृशत् ।
तच्च स्वहृदये धातुं सर्वा एव तरङ्गिताः ॥ ७६ ॥

भस्मदर्शनसे ही तीनों पवित्र नदियोंका हृदय शीतल हो गया। उस भस्मको अपने हृदयमें धारण करनेके लिये सभी तरङ्गित हो गयी थीं ॥ ७६ ॥

अनन्तादेव कालात्सा सुगुप्तापि सरस्वती ।
प्राकट्यमुपगत्यैव भस्म सश्रद्धमग्रहीत् ॥ ७७ ॥

अनन्तकालसे गुप्त रही हुई सरस्वतीने प्रकट होकर श्रद्धाके साथ उस भस्मको ग्रहण कर लिया ॥ ७७ ॥

आगता च महानौका सर्वपुण्यमहेश्वरी ।
महापुण्यं महादेवभस्म तद्धृदये न्यधात् ॥ ७८ ॥

सर्वपुण्योंकी रानी जैसी एक बड़ी नाव आयी और वह भस्म उसमें रखा गया ॥ ७८ ॥

शनैः शनैश्चचालाशु नृत्यन्तीव कृतार्थिता ।
देवदुर्लभदेहस्य भस्मस्पर्शमुदान्विता ॥ ७९ ॥

कृतार्थ होकर नाचती हुईके समान वह नौका देवोंको भी दुर्लभ महात्माजीके देहके भस्मके स्पर्शसे प्रसन्न होकर धीरे-धीरे चली ॥७९॥

वेदमन्त्राक्षरारावैः प्रार्थनागीतिकारवैः ।
रामनाम समुच्चार्य भस्मपात्रं जलेर्पितम् ॥ ८० ॥

वेदमन्त्रोंके घोषके साथ, प्रार्थना गानके साथ, श्रीरामनामका उच्चारण करके वह भस्मपात्र त्रिवेणीमें रख दिया गया ॥ ८० ॥

आसीदुन्मना गंगा हरेः पादसरोजजा ।
निरस्तशोकसन्तापा तदाभूद्भस्मसंगतः ॥ ८१ ॥

विष्णुभगवान्‌के चरणकमलसे निकली हुई गङ्गा व्याकुल बन गयी थी। परन्तु उस भस्मके सम्पर्कसे उसके शोक और सन्ताप दूर हो गये ॥ ८१ ॥

कृष्णसंगात्कृष्णजला सा कृष्णान्तर्मनाः सदा ।
यमस्वसा क्षणं जाता सिता तद्भस्मसंगतेः ॥ ८२ ॥

श्रीकृष्णके संगसे कृष्ण जलवाली और कृष्ण अन्तःकरणवाली यमराजकी बहिन यमुना भी क्षणभरके लिये महात्माजीके भस्मके संयोगसे श्वेत-निर्मल बन गयी ॥ ८२ ॥

सरस्वती चिरेणासीत्तत्र गुप्ता प्रियंवदा ।
नराकारा बहिर्याता भस्मपिस्पृक्षयाथ सा ॥ ८३ ॥

प्रियभाषिणी सरस्वती अनन्त वर्षोंसे वह गुप्त थी। वह भी मनुष्योंके रूपमें भस्मस्पर्श करनेकी इच्छासे बाहर आ गयी ॥ ८३ ॥

विद्यन्ते भारते पुण्या यावत्यः सरितो नदाः ।
संभेदाः पुण्यकासारा भस्मना पाविताश्च ते ॥ ८४ ॥

भारतमें जितनी पवित्र नदियाँ हैं, नद हैं, संगम हैं, पवित्र सरोवर हैं, वह सभी उस भस्मसे पवित्र किये गये ॥ ८४ ॥

सर्वङ्कषायां श्रीकाश्यां हरिश्चन्द्रस्य घट्टके ।
गङ्गायां पूतपापायां यतेर्भस्म न्यधीयत ॥८५॥

श्री काशीमें गंगाके हरिश्चन्द्र घाटपर महात्माजीका भस्म विसर्जित हुआ ॥ ८५ ॥

हरद्वारे भवद्वारविभेदकुशले पुनः ।
नरपौड्यां महापूज्यमभवन्निहितं च तत् ॥८६॥

संसारको दूर करनेवाले हरद्वारमें हरकी पैड़ीमें वह महापूज्य भस्म पधरा दिया गया ॥ ८६ ॥

गढमुक्तेश्वरे गङ्गा यमुना मथुरापुरे ।
श्रीमतो देवदेवस्य निदधाते च भस्म तत् ॥८७॥

गढ़मुक्तेश्वरमें गंगाने और मथुरामें यमुनाने देवोंके देव महात्माजीके भस्मको रख लिया है ॥ ८७ ॥

देहरादूननगरे त्रिवेणीघाटनामके ।
श्रीमीरा विदुषी वीरा प्रावाहयत तत्पुनः ॥८८॥

देहरादूनमें त्रिवेणी घाटपर उस भस्मको विदुषी श्री मीरा बहिनने पधरा दिया ॥ ८८ ॥

श्रीसोरोघाट्टकेत्याख्ये तीर्थस्थानेधिभीष्मसु ।
अयोध्यायां सरय्वां तन्न्यक्षिप्यत महच्छुचि ॥८९॥

सोरोघाटमें गंगाजीमें, अयोध्यामें, सरयूजीमें वह महत् पवित्र वस्तु पधरा दी गयी ॥ ८९ ॥

रामपूरनवाबेन सभार्येण प्रवाहितम् ।
देहलीतस्तदानीतं सङ्गमे कोसिमल्लयोः ॥९०॥

अपनी बेगमके साथ रामपुरके नवाबने दिल्लीसे लाये गये हुए भस्मको कोसी और मल्लके संगममें प्रतिष्ठित किया ॥ ९० ॥

दाण्ड्यां तस्यां महासिन्धौ वारडोल्यां यतेस्तनोः ।
मिढीलायां च सरिति पावनं भस्म राजते ॥९१॥

उस प्रख्यात दांडीमें, महासागरमें और वारडोलीमें मिढीला नदीमें वह पवित्र भस्म आज भी शोभित है ॥ ९१ ॥

गोधरानगरे मह्यां गोहाट्यां सुखलेश्वरे ।
घट्टे च निदधे श्रीमान् भस्माकबर हैदरी ॥९२॥

गोधरामें, महीनदीमें तथा श्री अकबर हैदरीने गोहाटीमें सुखलेश्वर घाटपर उस भस्मको पधराया ॥ ९२ ॥

धुब्री च गोलपाडा च तेजपूरं च सादिया ।
डिब्रूगढं सिलहटं शिलोंगं शिवसागरम् ॥९३॥
कुकीलमुखदेसंगमुखे च कोहिमा तुरा ।
इम्फालं जोरहाटं चेत्याद्येषु नगरेषु च ॥९४॥
महात्मनः शरीरस्य भास्वरं भस्म पावनम् ।
ब्रह्मपुत्रे जनैर्भव्यैर्निक्षिप्तं श्रद्धया मुहुः ॥९५॥

धुब्री, गोलपाडा, तेजपुर, सादिया, डिब्रूगढ़, सिलहट, शिलोंग, शिवसागर, कुकीलमुख, देसंगमुख, कोहिमा, तुरा, इम्फाल, जोरहाट आदि नगरों और स्थानोंमें ब्रह्मपुत्र नदमें महात्माजीके शरीरका पवित्र भस्म भावुक लोगों द्वारा रख दिया गया ॥ ९३-९४-९५ ॥

उदीच्यां कालिकाताया दिशि हुगूली पयस्विनी ।
तस्यामपि च तद्भस्म राजते सर्वपावनम् ॥९६॥

कलकत्तेकी उत्तर दिशामें हुगली नदी है, उसमें भी यह पवित्र भस्म पधरा दिया गया ॥ ९६ ॥

त्रिवेण्यां वङ्गदेशेषु हुगलीनगरान्तिके ।
कंसावत्यां च तत्रैव नगरे मेदिनापुरे ॥९७॥

वीरभूमे च सूरौ च सतीघाटे महौजसि।
श्रीमौराक्ष्यां महानद्यां भस्मतेजः प्रकाशते ॥९८॥

बङ्गालमें हुगली शहरके पास त्रिवेणीमें, मेदिनापुरमें, कंसावती नदीमें, वीरभूम जिलेमें सूरि टाउनके पास मौराक्षी नदीके सतीघाट पर उस भस्मका तेज प्रकाशित होता है ॥९७-९८॥

अधिब्राह्मणपाडेपि कुवोनद्यां विराजते।
ब्रह्मतत्त्वविदस्तस्य श्रीयतेर्भस्मनो लवः ॥९९॥

ब्राह्मणपाडाके Kuo कुवो नदीमें ब्रह्मतत्त्ववेत्ता श्रीमहात्माजीका भस्म शोभित हो रहा है॥ ९९ ॥

रामपुरहट्टपार्श्वे संघाटायां च तद्यतेः।
ब्रह्मपुत्रनदे लाङ्गलबन्धे तद्भस्म शोभते ॥१००॥

Rampurhat रामपुरहाटके पास Shanghata शंघाटा नदीमें और नारायणगंज के पास ब्रह्मपुत्र नदीके Langalbandh लाङ्गल-बन्धमें वह भस्म सुशोभित है ॥ १०० ॥

सरमाया सिलहटे भारतीयमहागुरोः।
भस्मतवत्त्मनन्ताय कालाय च विशोभते ॥१०१॥

सिलहटमें Surma सरमा नदीमें भारतके महागुरुका वह भस्म अनन्त कालके लिये शोभा दे रहा है ॥ १०१ ॥

खाशी-लुशाजी-तिनाम्नोः पर्वतयोर्यतस्ततः।
नदीषु प्रवहन्तीषु प्रस्रवणीषु तद्गतम् ॥१०२॥

खाशी और लुशाजी नामक पर्वतोंमें जहाँ तहाँ बहती हुई नदियोंमें उस भस्मका विसर्जन हुआ ॥ १०२ ॥

परशुरामकुण्डेपि तल्लाखेश्वर बारुआ।
खामतीराज्यनृपतिर्निदधाते परैः सह ॥१०३॥

श्री० ओ० के० दास लोखेश्वर बरुआ और खामती स्टेटके राजाने अन्य लोगोंके साथ परशुराम कुण्डमें उस भस्मको पधराया ॥ १०३ ॥

धाकधाकशिने यत्र श्रीचैतन्यो व्यजायत ।
महात्मनः शरीरस्य भस्म तद्राजते शिवम् ॥१०४॥

जहाँ श्रीचैतन्यमहाप्रभुका जन्म हुआ था वहाँ धाकधाकशिनमें वह भस्म अर्पित हुआ था ॥ १०४ ॥

हैदराबादराज्ये च निजामोस्मानसागरौ ।
संगत्य दधतुर्भस्म देवदेवस्य पावनम् ।१०५॥

हैदराबादस्टेटमें दो सागर हैं—१ निजाम सागर २—उस्मानसागर इन दोनोंके संगमपर महाप्रभुका भस्म रखा हुआ है ॥ १०५ ॥

बैङ्गलोरे च पश्चिमवाहिन्यां राजघाटके ।
महीशूरेपि तस्यां तत् निहितं सार्वलौकिकम् ॥ १०६ ॥

बैंगलोरमें पश्चिमवाहिनीके राजघाटपर तथा मैसूरमें भी उसी नदीमें वह भस्म रख दिया गया ॥ १०६ ॥

भद्रायां शैवलिन्यां च संगमे तुङ्गभद्रयोः ।
ताव्यां नद्यां च काश्मीरे भस्म तद्राजते पुनः ॥ १०७ ॥

भद्रा नदीमें तथा तुङ्ग और भद्राके संगममें एवं कश्मीरमें तावी नदीमें वह भस्म शोभित हो रहा है ॥ १०७ ॥

आज्यां श्रीराजकोटे च समुद्रे पोरबन्दरे ।
श्रीदामोदरकुण्डे तत्सौराष्ट्रेस्ति जुनागढे ॥ १०८ ॥

राजकोटमें आजी नदीमें, पोरबन्दरमें समुद्रमें और जूनागढ़में दामोदर कुण्डमें वह भस्म विद्यमान है ॥ १०८ ॥

मौरव्यां धौलनाथस्य सविधे मच्छुनामिका ।
सरिद्यापि संधत्ते भस्म तद् देहजं यतेः ॥ १०९ ॥

मोरवीमें धौलनाथके पास मच्छु नदी आज भी उस भस्मको धारण कर रही है ॥ १०९ ॥

**गोण्डले जामनगरे तत्तद्भूमिपती स्वयम् ।**
**भस्मादाय महद्दिव्यं दधाते दिव्यवारिणि ॥ ११० ॥**

गोंडल और जामनगरके राजाने स्वयं उस दिव्य भस्मको लेकर दिव्य जलमें रख दिया ॥ ११० ॥

**समुद्रे भावनगरे विलखाभूपतिश्च तत् ।**
**न्यदधाद्बिल्वगङ्गायां यतिदेहस्य पावनम् ॥ १११ ॥**

भावनगरमें समुद्रमें और विलखाके ठाकुर साहेबने उस भस्मको बिल्वगङ्गामें पधरा दिया ॥ १११ ॥

**वालायां तथोन्मत्तगङ्गायां तस्य भूपतिः ।**
**माण्डव्यां चापि कच्छेषु क्रीके श्रीकृपलानिजिः ॥११२॥**

वालास्टेटमें वालाके राजाने उन्मत्तगङ्गामें और कच्छमें मांडवीमें श्रीकृपलानीजीने क्रीक नदीमें भस्म स्थापन किया ॥ ११२ ॥

**क्षिप्रायामुज्जयिन्यां च तथेन्दोरेधिनर्मदम् ।**
**धारेपि कोटेश्वरस्य नर्मदायामुपान्तिके ॥ ११३ ॥**

उज्जैनमें क्षिप्रानदीमें, इन्दोरमें नर्मदामें, धारमें कोटेश्वरके पास भस्मस्थापन किया गया ॥ ११३ ॥

**भोपाले च महाकाये राजमाने सरोवरे ।**
**सेवानाख्यायां सरिति पौनारेपि महाशुभे ॥ ११४ ॥**

भोपालके महासरोवर तथा सेवान नदीमें, एवम् पौनार स्थानमें भी भस्म पधराया गया ॥ ११४ ॥

**जबलपुरे तिल्वाराघट्टके नार्मदे यतेः ।**
**देहशेषोभवत्क्षिप्तः श्रेयसे महते नृणाम् ॥ ११५ ॥**

जबलपुरमें नर्मदामें तिलवारा घाटपर, लोगोंके कल्याणकेलिये महात्माजीका देहशेष—भस्म पधराया गया ॥ ११५ ॥

अकोलायां च वाघोलीसविधे पूर्णनामिका ।
विराजते स्रोतस्वती तस्यां तत्संन्यधीयत ॥११६॥

अकोलामें वाघोलीके पास पूर्ण नदीमें भस्म रख दिया गया ॥११६॥

हरिहरे तुङ्गभद्रा भस्मादाय तु तच्छुचि ।
प्रसन्नवदना देवी राजतेद्य कृतार्थिता ॥११७॥

हरिहरमें तुङ्गभद्रा उस पवित्र भस्मको प्राप्त करके आज कृतार्थ हो गयी है ॥ ११७ ॥

बेलगामे च कांग्रेसकूपे तन्निहितं पुनः ।
आलन्दी सविधे नद्यामिन्द्राण्यामपि तद्गतम् ॥११८॥

बेलगाँवमें कांग्रेस कूपमें और आलन्दीके पास इन्द्राणी नदीमें वह भस्म पधराया गया ॥ ११८ ॥

नरसोबावाडीस्थाने कृष्णायां पण्ढरे पुरे ।
चन्द्रभागेतिविख्यातनद्यां तद्भस्म शोभते ॥११९॥

नरसोबावाडीमें, कृष्णानदीमें तथा पण्ढरपुरमें चन्द्रभागा नदीमें वह भस्म सुशोभित है ॥ ११९ ॥

गोकर्णे कोटितीर्थे च तथा कोल्हापुरेपि तत् ।
पञ्चगङ्गे नरसिंहवाप्यामपि च राजते ॥१२०॥

गोकर्णमें कोटितीर्थके पास, कोल्हापुरमें पञ्चगङ्गा और नरसिंह बावड़ीमें वह भस्म शोभित है ॥ १२० ॥

श्रीकृष्णावर्णयोः पुण्ये संगमे मीरजे पुनः ।
सांगल्यां चापि कृष्णायां पावनं तद्विशोभते ॥१२१॥

मीरजमें कृष्णा और वर्णाके संगममें और सांगलीमें कृष्णा नदीमें वह भस्म सुशोभित है ॥ १२१ ॥

गोवायां सागरे तत्र स्थानेषु बहुषु प्रभोः।
पवित्रं परमं भस्म निक्षिप्तं देवदुर्लभम् ॥१२२॥

गोवामें समुद्रमें बहुतसे स्थानोंमें वह देवदुर्लभ पवित्र भस्म पधराया गया ॥ १२२ ॥

मद्रासे च महासिन्धौ श्रीरङ्गेपि च धार्मिके।
कावेर्य्यामम्मापट्टणघट्टे तत्स्थापितं महत् ॥१२३॥

मद्रासमें महासागरमें और श्रीरङ्गम्में कावेरीमें अम्मापट्टण घाटपर वह महनीय भस्म पधराया गया ॥ १२३ ॥

रामेश्वरे रत्नाकरमहोदध्योश्च संगमे ।
सविधे च रामसेतोस्तदासीन्निहितं शुचि ॥१२४॥

रामेश्वरमें रत्नाकर और महोदधिके संगममें सेतुके पास वह पवित्र भस्म पधराया गया ॥ १२४ ॥

कन्याकुमारीसंस्थाने सिन्धूनां संगमे पुनः।
त्रयाणां निहितं भस्म जयत्यद्यापि सर्वदम् ॥१२५॥

कन्याकुमारीमें तीन समुद्रोंके संगममें वह भस्म पधराया गया और आज भी वह विजयी है ॥ १२५ ॥

तिरुकोईलुरे पुण्ये पेन्नारेधिभवानि च।
नेत्रवत्याः पुलान्याश्च संगमे मैङ्गलोरके ॥१२६॥

पवित्र तिरुकोइलुरमें पेन्नार और भवानी नदियोंमें तथा मैंगलोरमें नेत्रवती और पुलानीके संगममें ॥ १२६ ॥

कालीकटे च भारतपुझायां नोयले तथा।
कृष्णायां विजयवाडानगरे तत्समर्पितम् ॥१२७॥

कालीकटमें भारतपुझा और नोयल नदियोंमें तथा बेजवाडा (विजयवाड) में कृष्णा नदीमें वह भस्म समर्पित हुआ ॥ १२७ ॥

गोदावर्यां तथा राजमाहेन्द्र्यां नासिके तथा।
रामकुण्डेभवत्क्षिप्तं पावनं भस्म तत्पुनः ॥१२८॥

राजमहेन्द्रीमें गोदावरी नदीमें तथा नासिकमें भी गोदावरीमें रामकुण्डमें वह भस्म पधराया गया ॥ १२८ ॥

चौपाट्यां मोहमय्यां च सागरे च जुहुस्थले।
जलन्धरे सतलजे तदासीत्तत्समर्पितम् ॥१२९॥

बम्बईमें समुद्रमें चौपाटीपर, जुहूमें—जहाँ महात्माजी बहुत वार शान्तिके लिये निवास करते थे—समुद्रमें, और जलन्धरमें सतलज नदीमें उस समय वह भस्म पधराया गया ॥ १२९ ॥

कपूरथलानगरे व्येनाख्ये निर्झरे पुनः।
निहितं तच्च संम्मान्यमजमेरे च पुष्करे ॥१३०॥

कपूर्थलामें व्येन झरनेमें और अजमेरमें, पुष्कर सरोवरमें वह भस्म पधराया गया ॥ १३० ॥

बनास-चम्बल-सीपाख्यनदीनां संगमे शुचौ।
जयपुरे जगन्नाथदेहभस्म विराजते ॥१३१॥

जयपुरमें बनास, चम्बल और सीप नदियोंके संगममें महात्माजीका देहभस्म शोभित हो रहा है ॥ १३१ ॥

बीकानेरे च सुभगे कोलायतसरोवरे।
चन्द्रभागायां च व्रजनगरेप्यस्ति शोभितम् ॥१३२॥

बीकानेरमें कोलायत सरोवरमें और व्रजनगरमें चन्द्रभागामें वह भस्म सुशोभित है ॥ १३२ ॥

अर्बुदे च नखीनाम्नि महापुण्ये सरोवरे।
देवयान्यां च निहितं तत्सांभरसरोवरे ॥१३३॥

अर्बुद (आबू) में नखी तालाबमें और साँभर सरोवर—देवयानीमें वह भस्म पधराया गया ॥ १३३ ॥

झाबुवाराज्ये शुचि तद्देवझारीसरिज्जले ।
मुचुकुन्दे धौलपुरे संनिहितं सरोवरे ॥१३५॥

झबुआ स्टेटमें देवझारी नदीमें और धौलपुरमें मुचुकुन्द सरोवरमें वह भस्म निहित है ॥ १३५ ॥

ओरछायां च बेतवानद्यां कलकतापुरे ।
गङ्गायां सर्वदारिद्र्यदारिण्यां तन्न्यधीयत ॥१३५॥

ओड़छामें बेतवानदीमें और कलकत्तामें भागीरथी नदीमें उसे पधराया गया ॥ १३६ ॥

गङ्गागण्डकयोः पुण्ये संगमे पटनापुरे ।
गयायां फल्गुसरिति राच्यां दामोदरे पुनः ॥१३७॥

पटनामें गङ्गा और गण्डकके संगमपर, गयामें फल्गु नदीमें और राचीमें दामोदर नदीमें ॥ १३७ ॥

मोतीहार्यां नारायण्यां पिपराख्ये च घट्टके ।
श्रीमद्गोदावरीगंजघाटे तदधिशोभते ॥१३८॥

मोतीहारीमें नारायणी नदीमें, पिपराघाट और गोदावरीगंज घाटपर वह भस्म सुशोभित है ॥ १३८ ॥

पालनपुरे बनासे पालनपुरभूभुजा ।
नवाबाख्येन तद्भस्म लोकैः सार्धं न्यधीयत ॥१३९॥

पालनपुरमें वहाँके नवाब साहेबने लोगोंके साथ उस भस्मको बनास नदीमें पधरा दिया ॥ १३९ ॥

लूणावालाभिधे स्थाने केदारेश्वरपार्श्वगे ।
सरितां तिसृणां चापि संगमे भस्म शोभते ॥१४०॥

लूणावालामें केदारेश्वरके पास तीन नदियोंके संगममें वह भस्म शोभित है ॥ १४० ॥

सुरते नगरे ताप्यां खम्भाते च महोदधौ ।
महापुरुषदेहस्य भस्मलेशो विशोभते ॥१४१॥

सुरत शहरमें तापी नदीमें, खंभातमें समुद्रमें उन महापुरुषका देहभस्म शोभित हो रहा है ॥ १४१ ॥

डेरा इस्माइलखानसविधे सिन्धुवारिणि ।
ढाकानगरे लांगलबुन्दे भस्माधिराजते ॥१४२॥

डेरा इस्माइलखानके पास सिन्धु नदीमें और ढाकामें लांगल बुन्दमें भस्म शोभा दे रहा है ॥ १४२ ॥

कटके च खातजुर्यां श्रीपुर्यां च महोदधौ ।
मयूरभंजनगरे वैतरण्यां विराजते ॥१४३॥

कटकमें खातजुरीमें, पुरीमें समुद्रमें, मयूरभंजमें वैतरणीमें वह भस्म शोभा दे रहा है ॥ १४३ ॥

केयोंजरेपि तस्यां च चांडोदे चाधिनर्मदम् ।
कोलम्बोसविधे सिन्धौ बुद्धस्नाते च घट्टके ॥१४४॥
कातरगामासविधेप्यधिमाणिकगङ्गके ।
त्रिकोमालीसविधेपि सागरे भस्म राजते ॥१४५॥

केयोंजरमें भी वैतरणी नदीमें, चांडोदमें नर्मदामें, कोलम्बोके पास समुद्रमें—जहाँ बुद्ध भगवान् स्नान करते थे उस घाटपर, कातरगामाके पास माणिक गङ्गामें, त्रिकोमालीके पास समुद्रमें भस्म विराजमान है ॥ १४४–१४५ ॥

केण्ड्यामादमशिखरे जाफनासविधे तथा ।
किरिमल्लाइसलिले भस्म तन्निहितं तदा ॥१४६॥

कोण्डीमें आदमके शिखरपर, जाफनाके पास किरिमलाइमें उस समय वह भस्म पधराया गया है ॥ १४६ ॥

पुण्ये चाहमदाबादे यत्र साक्षाद्यतीश्वरः ।
वर्षपूगान्निवासेन जनतां समशिक्षयत् ॥१४७॥

और जहाँपर बहुत वर्षोंतक महात्माजीने साक्षात् रहकर लोगोंको उपदेश दिया था उस अहमदाबाद में—॥१४७॥

अन्यत्रापि गतं भस्म भारतीयभुवो बहिः ।
आफरीकाधरायां च भगवद्भस्म शोभते ॥१४८॥

भारतवसुन्धरा के बाहर भी श्रीमहात्माजी का भस्म गया है। अफ्रिका में भी वह शोभा दे रहा है ॥ १४८ ॥

मोम्बासानगरे श्रीमान्पुरुषोत्तम उत्तमः ।
श्रीमद्विनयिनीजानिर्वर्तते धर्ममर्मवित् ॥१४९॥

मोम्बासा शहर में श्रीमान पुरुषोत्तमदासजी निवास करते हैं जिनकी पत्नी विनयिनी ( विनु बहिन ) हैं। वह धर्म क्या है, इसके मर्मको जानते हैं ॥ १४९ ॥

दिव्यं तद्भस्म संगृह्य विनयिन्या ययौ सह ।
यौगाण्डं जिञ्जानगरं मोटरेण स वर्त्मना ॥१५०॥

वह श्रीमती विनुबहिनके साथ भस्म लेकर मोटरके मार्गसे युगाण्डा प्रान्तके जिंजा नगरमें गये ॥ १५० ॥

जलप्रपातान्विविधान् रम्याणि च वनानि च ।
गव्यूतीनां परिक्राम्यञ्छूद्वारत्नः शतद्वयम् ॥१५१॥
अन्यानपि समादाय मोम्बासीयजनान्बहून् ।
मार्गेष्वपि संमिलितान्कर्षञ्जिञ्जां स आप्तवान् ॥१५२॥

बहुत से झरने आदिको, रमणीय जङ्गलोंको हजार माइल पारकर के, मोम्बासा के और भी बहुतसे लोगों को लेकर तथा मार्ग में संमिलित होनेवालों को खींचते हुए वह जिंजा पहुँच गये ॥ १५१ ॥ १५२ ॥

विस्मृता तत्र चास्माकं वैदिकानां महाप्रिया ।
भारताच्च पृथग्भूय नीला वहति शोभना ॥१५३॥

हमने जिसे भुला दिया है और जो वैदिकों को अतिप्रिय थी वह नीला नदी वहाँ भारतसे अलग होकर बह रही है ॥ १५३ ॥

महासरोवराद्भूमौ मधुरादतुलादपि ।
लब्धजन्मा महायामा सरिन्नीला प्रकाशते ॥१५४॥

जिसकी तुलना नहीं हो सकती ऐसे एक विशालकाय सरोवरसे वह लम्बी चौड़ी नीला नदी जन्म लेकर प्रकाशमें आती है ॥१५४॥

अभूतपूर्वसंमर्दो भस्माधानाहनि प्रियः ।
नारीणां च नराणां च नीलायाः प्राञ्जले तटे ॥१५५॥

नीलाके विशाल तटपर स्त्री पुरुषोंका एक बड़ा भारी समुदाय, भस्म पधरानेके दिन वहाँ इकट्ठा हुआ था ॥ १५५ ॥

त्रयाणामेव पूर्वीयाफ्रिकायास्तु समागताः ।
प्रान्तानां प्रान्तपालाश्च समालाकुसुमाकराः ॥१५६॥

पूर्वीय अफ्रिकाके केनिया, टांगानिका और युगाण्डा तीनों ही प्रान्तोंके गवर्नर हाथमें फूल-माला लेकर वहां पहुँच गये थे ॥ १५६ ॥

अञ्जलयः सुमनसां ते सर्वे भस्मसम्पुटे ।
अर्घ्यामासुराह्लादादपारादादरादपि ॥१५७॥

उन सब लोगोंने अपार आनन्द से और आदर से भस्म-पात्र-पर फूलों की अञ्जलियां चढ़ायीं ॥ १५७ ॥

श्रीनीलापीति विज्ञाय सर्वेषां च महागुरोः ।
भारताद्भस्म सविधे तस्या एति जहर्ष सा ॥१५८॥

श्री० नीला को जब यह पता लगा कि सब के महागुरु श्रीमहात्माजीका भस्म भारतसे मेरे पास आ रहा है तब वह प्रसन्न हो उठी ॥ १५८ ॥

सरावा सप्रमोदा च सवेगा साभिलाषिका।
कूर्दमाना च नृत्यन्ती विववार मनोमुदम् ॥१५९॥

आवाज के साथ, आनन्द के साथ, वेगके साथ, इच्छाओंके साथ, नाचती और कूदती हुई उसने अपने मानसिक आनन्दको प्रकट किया ॥ १५९ ॥

विनयिन्याः कराभ्यां तद्भस्मपात्रं महाधनम्।
शिवाभाईपटेलेन गृहीत्वा मुमुदे चिरम् ॥१६०॥

श्री० विनयिनी ( विनु ) बहिनके हाथोंमेंसे महान् धनरूप उस भस्ममात्रको श्री शिवाभाईपटेल ( बैरिस्टर ) ने ले लिया और वह प्रसन्न हुए ॥ १६० ॥

जयतात्सर्वदा श्रीमान्महात्मा मोहनः प्रभुः।
इति घोषाः सहस्रेभ्यो मुखेभ्यो बहिरराययुः ॥१६१॥

श्रीमान् महात्माजी सदा विजयी रहें, यह घोष हजारों मुखों से निकलने लगा ॥ १६१ ॥

शिवाभाई गतस्तीरं नीलायाः सर्वशम्पुषः।
भस्मपात्रकरः श्रीमान्गौरवेण शनैः शनैः ॥१६२॥

श्रीशिवाभाई पटेल हाथमें भस्ममात्र लिये हुए आदर के साथ धीरे धीरे सर्व कल्याणकारी नीलाके तटपर गये ॥ १६२ ॥

धन्यस्य लोकवित्तस्य मोहनस्य महात्मनः।
सपात्रं हृदये तस्यास्तेन भस्म न्यधीयत ॥१६३॥

धन्य और जगत् के धनसमान महात्माजी के उस भस्मके पात्रके सहित नीलाके हृदय में उन्होंने रख दिया ॥ १६३ ॥

महता हर्षभारेण नृत्यन्ती पुण्यवारिका।
गभीरा दर्शनीया सा तदादायाद्रवद्द्रुतम् ॥१६४॥

बड़े भारी हर्षके साथ पवित्रजल वाली, गंभीर और दर्शनीय वह नीला भस्मको लेकर नाचती हुई शीघ्र ही दौड़ गयी ॥ १६४ ॥

तस्मिन्नेवाफ्रिकादेशे जिंगीनाम्नो महागिरेः ।
हृद्ये रूपगुणाभ्यां द्वे कन्ये रन्तुं बहिर्गते ॥१६५॥

उसी पूर्व अफ्रिकामें जिंगीनामक महान् पर्वतकी रूप और गुणोंसे युक्त मनोहर दो कन्याएं खेलनेकेलिये बाहर निकलीं ॥ १६५ ॥

रममाणे अरण्येषु बहून्पुष्पलताद्रुमान् ।
सस्मरतुः संगते ते न चिरं पितुरालयम् ॥१६६॥

जंगलोंमें खेलती हुई वह दोनों बहिनें बहुत से फूल, लता और वृक्षोंके साथ मिलती रहीं और चिरकाल तक पिताके घरका स्मरण नहीं किया ॥ १६६ ॥

स्वसारौ भिन्नवर्त्मानौ वने सम्प्राप्तयौवने ।
विहरन्त्यौ यथाकामं पुनरेकत्र संगते ॥१६७॥

जङ्गल में दोनों बहिनें युवावस्थाको प्राप्त हुईं । दोनोंने अलग अलग मार्ग पकड़े । यथेच्छ विहार करती हुई दोनों फिर एक जगह आकर मिल गयीं ॥ १६७ ॥

एकीभूते च यत्रोभे प्रेम्णा थीका च योनिया ।
तत्रापि यतिराजस्य भस्मलेशोभवद्धितः ॥१६८॥

वह थीका और योनिया यह दोनों नदियां प्रेमसे जहाँपर एक हो जाती हैं वहां भी—उस सङ्गमस्थानमें भी यतिराजका भस्म पधराया गया ॥ १६८ ॥

देशे देशे सर्वस्मिंस्तस्याढ्यं शान्त्याढ्यं भस्म,
नद्यां नद्यां पुण्यायां कासारे वा वाप्यां सद्यः ।
नीत्वा नीत्वा लोकाः स्नेहश्रद्धाकाराः सोत्कास्ते,
धन्यं गण्यं पुण्यं रम्यं ग्राह्यं स्थाप्यं संम्प्रास्यन् ॥१६९॥

स्नेह और श्रद्धाकी मूर्तिके समान उत्सुक लोगोने उस धन्य, गण्य, पवित्र, रम्य, ग्राह्य, स्थाप्य भस्मको ले लेकर सभी देशों में पवित्र नदियों में, पवित्र तालाबों में और पवित्र बावड़ियों में अर्पण कर दिया ॥ १६९ ॥

तन्त्रैः प्रामाणिकैरेव ग्रन्थोयं सौरभाभिधः ।
मया भगवदाचार्ययतिना यत्नतः कृतः ॥१७०॥

मैंने इस ग्रंथको प्रामाणिक साधनोंके द्वारा यत्नपूर्वक बनाया है ॥ १७० ॥

एकमप्यक्षरं मात्रा नैकात्रास्त्यप्रमाणिता ।
सर्वथा शुद्धरूपोयं महाग्रन्थो विभाव्यताम् ॥१७१॥

इसमें न तो एक भी अक्षर अप्रामाणिक है और न एक मात्रा अप्रामाणिक है । अतः इस महाग्रन्थ को सब प्रकार से शुद्धरूप समझना चाहिये ॥ १७१ ॥

वसुव्योमनभोनेत्रमिते वैक्रमवत्सरे ।
वैशाखे च सिते पक्षे तृतीयायां पूर्तिमागमत् ॥१७२॥

वैशाख शुक्लपक्ष तृतीया ( अक्षय्य तृतीया ) सं० २००८ वि० में यह ग्रन्थ पूर्ण हुआ ॥ १७२ ॥

पूर्वीय आफ्रिकादेशे मोम्बासाख्ये महापुरे ।
श्रीमन्मेघजिसत्सूनू रामजिः .कानजिस्तथा ॥१७३॥

पूर्वीय अफ्रिका के मोम्बासा शहर में श्रीमान् मेघजी भाई के श्रीरामजी और श्रीकानजी दो पुत्र हैं ॥ १७३ ॥

कनीयान्कानजिः श्रीमान्पृष्ट्वा ज्यायांसमात्मनः ।
आज्ञामादाय पूज्याया जनन्या आत्मनः शिवाम् ॥१७४॥

श्रीकानजीभाईने अपने बड़े भाई श्रीरामजी भाईको पूछकर और अपनी पूज्य माताजीकी पवित्र आज्ञा लेकर—॥ १७४ ॥

एतद्ग्रन्थप्रकाशाय सर्वं सच्छ्रद्धया व्ययम् ।
अकरोद्देशसेवायै वादान्यं पूजयञ्छ्रिया ॥१७५॥

देशकी सेवाके लिये तथा अपनी उदारताका ध्यान रखकर इन ग्रन्थोंके प्रकाशित करनेका सब व्यय किया है ॥ १७५ ॥

धन्या माता पिता धन्यो धन्यः स परमः पुमान् ।
गांधेर्महात्मनो दिव्ये चरिते यन्मनोभवत् ॥१७६॥

उनकी माता भी धन्य हैं, पिता भी धन्य हैं और वह स्वयं भी धन्य हैं, जिनका मन महात्मागांधीजी के पवित्र चरितमें लगा है ॥ १७६ ॥

जयन्तु गुरुपादाब्जरेणवः सुप्रकाशिताः ।
जनुषान्धोऽपि याञ्छ्रित्वा गन्तव्यं याति निर्भयम् ॥१७७॥

श्रीगुरुदेवके चरणों के रेणुओंका विजय हो जिनका आश्रय लेकर जन्मान्ध भी अपने गन्तव्य स्थानपर निर्भय पहुँच जाता है ॥ १७७ ॥

श्रीसाकेतपुरीललामललनालीलैकसत्साधनं
श्रीमद्राममनोहरार्यचरणाम्भोजेषु भृङ्गायितः ।
रागद्वेषकुलानलो भगवदाचार्यः सुधीः सद्व्रती ।
कृत्वा काव्यमिदं यतिः स्वहृदयं शान्तिं परां प्रापयत् ॥१७८॥

ॐ शान्तिः शान्तिः शान्तिः

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते

पारिजातसौरभे

विंशः सर्गः

ॐ

# एकविंशः सर्गः

महापुरुषरत्नस्य श्रीमद्गान्धिमहात्मनः।
संक्षिप्याधीयते सद्भिः पीयतां चरितामृतम् ॥१॥

महापुरुषोंमें श्रेष्ठ श्रीमहात्मागांधीजीका संक्षेपमें चरितामृत अपर्ण किया जाता है। सज्जन अिसका पान करें-सेवन करें ॥ १ ॥

संवत्सरस्तु बोद्धव्यः सर्वत्रैवात्र यैशवः।
मासनाम तिथेर्नाम वेद्यं तस्यैव पाठकैः ॥ २ ॥

इस प्रकरणमें सर्वत्र ईसवी सन् ही संवत्सर समझना चाहिये। तथा अंग्रजी महीनेकी ही संख्या और तिथि संख्या जाननी चाहिये ॥ २ ॥

ग्रहतर्कगजब्रह्ममिते संवत्सरे महान्।
मासे च दशमे देवो द्वितीयायामवातरत् ॥ ३ ॥

ता० २ अक्टूबर सन् १८६९ ई० को महात्माजीका अवतार हुआ। अवतार अर्थात् जन्म ॥ ३ ॥

लोकहस्तिवसुब्रह्मसंमिते वत्सरे मुनिः।
श्रीमत्कस्तूरिकां देवीं पर्यणेष्ट यशस्विनीम् ॥ ४ ॥

सन् १८८३ ई० में श्रीमती कस्तूरबाके साथ अुनका विवाह हुआ ॥ ४ ॥

वसुवसुवसुब्रह्ममिते संवत्सरेथ सः।
चतुर्थ्यां नवमे मासे लन्दनेध्येतुमभ्यगात् ॥ ५ ॥

ता० ४ सितम्बर १८८८ ई० में अध्ययन करनके लिये वह लण्डन गये ॥ ५ ॥

**ग्रहवसुवसुब्रह्ममिते संवत्सरे यतिः।**
**निरामिषाशिनां मध्ये तत्र व्याख्यानमातनोत् ॥ ६ ॥**

१८८९ ई० में लण्डनमें मांसाहार न करनवालोंके बीचमें महात्माजीने (प्रथम) व्याख्यान दिया ॥६॥

**ब्रह्मग्रहवसुब्रह्ममिते संवत्सरेभवत्।**
**षष्ठे मासे दशम्यां च बैरिष्टरपदान्वितः ॥ ७ ॥**

ता० १० जून १८९१ ई० में वह बैरिष्टर बने ॥ ७ ॥

**लोकग्रहवसुब्रह्ममिते संवत्सरेगमत्।**
**दाक्षिणात्याफ्रिकां षष्ठे मासि भारतवर्षतः ॥ ८ ॥**

जून सन् १८९३में महात्माजी भारतसे दक्षिण अफ्रिका गये ॥ ८ ॥

**अभियोगं च यं जेतुं जगाम यतिरफ्रिकाम्।**
**समाधानं च तस्याभूदग्रिमे वत्सरे शुभम् ॥ ९ ॥**

जिस मुकदमेको जीतनके लिये वह दक्षिण अफ्रिका गये थे अुसका अगले वर्ष अर्थात् १८९४ ई० में समाधान हुआ ॥ ९ ॥

**ततोपि सोग्रिमे वर्षे नैटाले मोहनोभवत्।**
**महान्यायालये मान्यः प्राड्विवाकः सदाशिवः ॥ १० ॥**

उसके अग्रिम सर्षमें अर्थात् १८९५ ई० में वह नैटालके सुप्रीम कोर्टमें ऐडवोकेट हुए ॥ १० ॥

**तस्मिन्नेवाब्दके श्रीमान्नैटाले वसतां सताम्।**
**भारतीयजनानां स निर्ममौ महतीं सभाम् ॥ ११ ॥**

उसी सालमें नैटालमें रहनेवाले भारतीयोंकी एक बड़ी सभा (नेटाल-भारतीय-कांग्रेस) का निर्माण किया ॥ ११ ॥

**रसग्रहवसुब्रह्ममिते संवत्सरे मुनिः।**
**षष्ठे मासे क्रियायोगी भारते स न्यवर्तत॥ १२॥**

जून सन् १८९६ ई० में कर्मयोगी महात्माजी भारत लौटे ॥ १२ ॥

**निखिलैर्भारतीयैः स समाहूतः पुनर्ययौ।**
**नवम्बरे च नैटालं दारपुत्रसमन्वितः॥ १३॥**

नैटालनिवासी भारतीयोंके बुलानेसे महात्माजी नवम्बर महीनेमें बाल बच्चोंके साथ पुनः नैटाल गये ॥ १३ ॥

**ऋषिग्रहवसुब्रह्ममिते तं वत्सरे सिताः।**
**डर्बने द्वेषसन्दग्धाः प्राहरन्निष्टकादिभिः॥ १४॥**

सन् १८९७ ई० में द्वेषसे भरे हुए अंग्रेजोंने महात्माजीको ईंटों और पत्थरोंसे मारा ॥ १४ ॥

**ग्रहग्रहवसुब्रह्ममितेसौ वत्सरे प्रभुः।**
**चक्रे बोवरसंग्रामे सिताङ्गानां सहायताम्॥ १५॥**

सन् १८९९ ई० में महात्माजीने बोवर-युद्धमें अंग्रेजोंको मदद की ॥ १५ ॥

**ब्रह्मव्योमग्रहब्रह्ममितेब्दे भारतं पुनः।**
**आगादस्य दशां ज्ञातुं पर्याटत्सपरिश्रमम्॥ १६॥**

सन् १९०१ ई० में महात्माजी पुनः भारत आये और इसकी स्थिति जाननेके लिये परिश्रमपूर्वक उन्होंने भारत-भ्रमण किया ॥ १६ ॥

**गुणव्योमग्रहब्रह्ममितेब्दे भारतैः पुनः।**
**प्रार्थितो दक्षिणाफ्रीकां कार्मचन्द्रिर्ययावसौ॥ १७॥**

सन् १९०३ ई० में भारतीय बन्धुओंकी प्रार्थनासे वह पुनः दक्षिण अफ्रिका गये ।। १७ ।।

**ट्रान्सवालमुपेत्यासावारेभे प्राड्विवाकताम् ।**
**ब्रिटिशभारतीयानां संस्थामेकामतिष्ठिपत् ।। १८ ।।**

ट्रान्सवालमें जाकर उन्होंने बैरिष्टरी शुरू की और "ट्रान्सवाल ब्रिटिश इण्डियन एसोसिएशन" की स्थापना की ।। १८ ।।

**युगव्योमग्रहब्रह्ममितेब्दे समपीपदत् ।**
**इण्डियन ओपीनियन्निति ख्यातमुदन्तदम् ।। १९ ।।**

सन् १९०४ ई० में इण्डियन ओपीनियन् नामके प्रसिद्ध समाचार पत्रका उन्होंने सम्पादन किया ।। १९ ।।

**लोकोत्तरं महापुण्यं ब्रह्मचर्यमहाव्रतम् ।**
**रसव्योमग्रहब्रह्ममिते वर्षेग्रहीदसौ ।। २० ।।**

सन् १९०६ ई०में महात्माजीने परम पवित्र अद्वितीय ब्रह्मचर्यव्रतका स्वीकार किया ।। २० ।।

**अस्मिन्नेव सुपुण्येब्दे सत्याग्रहपदं बभौ ।**
**जुलूविद्रोह उत्पन्ने क्षतांल्लोकान्यषेवत ।। २१ ।।**

इसी सालमें "सत्याग्रह" शब्दकी उत्पत्ति हुई। जब जुलू विद्रोह उत्पन्न हुआ तो महात्माजीने घायलोंकी सेवा की। जुलू=दक्षिण अफ्रिकाके हबशी ।। २१ ।।

**व्योमलिङ्गवसुब्रह्ममितेब्दे षोडशे तिथौ ।**
**मास एकादशे प्रापुर्नेटालं भारता इतः ।। २२ ।।**

१६ नवम्बर १८६० ई० में यहांसे बहुतसे भारती नेटाल पहुंचे ।। २२ ।।

**ततः प्रभृति हिन्दूनां मुसल्माननृणामपि।**
**भूयसी भारतात्संख्या तस्मिन्देशे क्रमाद्ययौ॥ २३॥**

तबसे ही हिन्दुओं और मुसलमानोंकी बड़ी भारी संख्या इस देशसे दक्षिण अफ्रिकामें पहुंचने लगी ॥ २३ ॥

**श्रमिका अपि तेष्वासन्स्वतन्त्रव्यवसायिनः।**
**सर्वेप्येव समुद्यम्य देशमृद्धं वितेनिरे॥ २४॥**

उनमें मजदूर भी थे और स्वतन्त्र व्यवसायी भी थे। सबने ही मिलकर उस देशको समृद्ध बनाया ॥ २४ ॥

**नगरेष्वखिलेष्वेव भारता ऊषुरादरात्।**
**कृषिभिर्व्यवसायैश्च कर्मशक्त्या प्रकाशिताः॥ २५॥**

सभी नगरोंमें भारतीय लोग आदरसे रहने लगे। कृषि, व्यापार और कर्म करनेकी शक्तिसे वह प्रकाशित हो उठे ॥ २५ ॥

**गतेषु दिवसेष्वेभ्यः श्वेताङ्ग्यो दुर्मदाः प्रजाः।**
**असूयिषुः परं मूढा विस्मृत्योपकृतीः समाः॥ २६॥**

कुछ दिन बीतने पर ही इन्हीं भारतीयोंसे, मदोन्मत्त अंग्रेज, इनके सब उपकारोंको भुलाकर द्वेष करने लग गये ॥ २६ ॥

**रङ्गभेदं पुरस्कृत्य श्वित्रिणः शत्रुतां गताः।**
**निष्काशनं ततस्तेषामैप्संस्ते शासनं च तत्॥ २७॥**

रंगभेदको निमित्त बनाकर अंग्रेज शत्रु बन गये। अतः अुन्होंने और वहांकी सरकारने भी भारतीयोंको वहांसे निकालना चाहा ॥ २७ ॥

**शासनेन निजार्थस्य सिद्ध्यै संपादितं तदा।**
**व्यवस्थापत्रमेकं तद्वर्ण्यते निम्नगाक्षरैः॥ २८॥**

उस समय वहांकी सर्कारने अपने मनोरथकी सिद्धिके लिये निम्निलिखित एक व्यवस्थापत्र बनाया ॥ २८ ॥

**भारतीयैर्नरैः सर्वैर्नारीभिर्बालकैरपि।**
**प्रवेशपत्रं संग्राह्यं स्थातुं तस्मिन्प्रदेशके ॥ २९ ॥**

भारतीय स्त्री, पुरुष, बच्चे सबको इस देशमें रहनेके लिये प्रवेशपत्र लेना चाहिये ॥ २९ ॥

**प्रवेशपत्रग्रहणं क्रियते चेन्न केनचित्।**
**अपराधी स मन्तव्यस्तस्य कारानिवेशनम् ॥ ३० ॥**

यदि कोई प्रवेशपत्र नहीं लेगा तो वह अपराधी माना जायगा और उसे जेलकी सजा दी जायगी ॥ ३० ॥

**प्रार्थिनां स्वशरीरस्थं चिह्नं चेत्किञ्चिदस्तु तत्।**
**दात्रा प्रवेशपत्रस्य लेख्यं तत्स्मृतिपुस्तके ॥ ३१ ॥**

प्रवेशपत्र चाहनेवालोंके शरीरपर यदि कोई निशान हो तो रजिष्ट्रार उसे रजिष्टरमें नोट कर ले ॥ ३१ ॥

**प्रवेशपत्रसंप्राप्त्यै प्रार्थनापत्रिकाङ्गके।**
**अंगुलीनां दशानां च प्रतीकं तस्य गृह्यताम् ॥ ३२ ॥**

प्रवेशपत्र पानेके लिये जो अर्जी दी जावे उस पर प्रार्थीकी दशों अङ्गुलियोंके निशान लेने चाहिये ॥ ३२ ॥

**तत्रासन्नेवमाद्यास्तु प्रतिबन्धा अनेकशः।**
**ते च भारतवर्षस्य मानभङ्गकरा ध्रुवम् ॥ ३३ ॥**

ऐसे तो उस व्यवस्थापत्रमें अनेक प्रतिबन्ध थे। वह सभी भारतदेशका मानभङ्ग करनेवाले थे ॥ ३३ ॥

**सर्वं सहन्ते कृतिनः क्षमाशीलास्तपस्विनः ।**
**सहन्ते न कदापीह मानभङ्गमरुन्तुदम् ।। ३४ ।।**

क्षमाशील तपस्वी महात्मा सबकुछ सह लेते हैं परन्तु हृदयको पीडित करनेवाले मानभङ्गको वह सहन नहीं करते ।। ३४ ।।

**रसव्योमग्रहब्रह्मवत्सरे सत्यसङ्गरम् ।**
**जोहानिस्वर्गनगरे तेने मानं स रक्षितुम् ।। ३५ ।।**

मानकी रक्षाके लिये महात्माजीने सन् १९०६ ई० में जोहानिस-वर्गमें सत्याग्रह शुरू कर दिया ।। ३५ ।।

**मुख्याधिष्ठातृतां यातस्तत्र स्मट्सो महाजडः ।**
**बाधां पीडां परां चक्रे यतौ तदनुयायिषु ।। ३६ ।।**

अफ्रिकामें महाजड स्मट्स मुख्य शासक था । उसने महात्माजी और उनके अनुयायोंको भारी दुःख दिया ।। ३६ ।।

**सत्याग्रहविधानेन दुःखान्यविगणय्य ते ।**
**त्यागेन सत्यवादेन समयुध्यन्त निर्भयाः ।। ३७ ।।**

महात्माजी और उनके अनुयायियोंने सत्याग्रह करके, सब दुःखोंकी परवा किये बिना, त्याग और सत्यसे, निर्भय होकर युद्ध किया ।। ३७ ।।

**मुनिव्योमग्रहब्रह्ममिते संवत्सरे यतिः**
**जान्युवर्यां तिथौ त्रिंशे विजिग्येसमरं स तम् ।। ३८ ।।**

ता० ३०-१-१९०७ ई० में महात्माजीने उस युद्धमें विजय प्राप्त किया ।। ३८ ।।

**अगस्ते चाग्रिमे वर्षे षोडश्यां च तिथौ पुनः ।**
**बभञ्ज स्ववचः स्मट्सस्ततो जन्यमजायत ।। ३९ ।।**

ता० १६-८-१९०८ ई० में जनरल् स्मट्सने अपनी प्रतिज्ञाका भंग किया ।। ३९ ।।

वेदब्रह्मग्रहब्रह्ममिते संवत्सरे मुहुः।
स्मट्सो जितो जिताः श्वेता विजयोभून्महात्मनः॥ ४०॥

सन् १९१४ ई० में पुनः स्मट्स और दूसरे सभी अंग्रेज वहां पराजित हुअे ॥ ४० ॥

शरब्रह्मग्रहब्रह्ममितेब्दे सितभूभुजा।
कैसरे हिन्दमित्याख्यपदकेन समर्चितः॥ ४१॥

सन् १९१५में अंग्रेज सरकारने महात्माजीको कैसरे हिन्दका पदक देकर सम्मानित किया ॥ ४१ ॥

अस्मिन्नेव शुभे वर्षे श्रीरवीन्द्रकवीश्वरैः।
प्रायुज्यत यतीन्द्रार्थे महात्मेतिविशेषणम्॥ ४२॥

अिसी साल श्री रवीन्द्रबाबूने महात्माजीके लिये महात्मा शब्दका प्रयोग किया ॥ ४२ ॥

द्वाविंशतितिथौ मासे पञ्चमेस्मिन्हि वत्सरे।
सत्याग्रहाश्रमं पुण्यं कोचरबे ह्यतिष्ठिपत्॥ ४३॥

२२ मअी १९१५ ई०के दिन कोचरब गांव (अहमदाबाद)में अुन्होंने सत्याग्रह आश्रमकी स्थापना की ॥ ४३ ॥

श्रीमन्मदनमोहनमालवीयो विनिर्ममौ।
महत्सारस्वतं धामं वाराणस्यां महौजसि॥ ४४॥
रसब्रह्मग्रहब्रह्ममितेब्दे स महानृषिः।
फेब्रुवर्यां चतुर्थ्यां च धीमांस्तदुदजीघटत्॥ ४५॥

श्रीमान् पण्डित मदनमोहन मालवीयजीने काशीमें विश्व-विद्यालय बनाया था। अुसका अुद्घाटन महात्माजीने ता० ४-२-'१६ अी० में किया ॥ ४४, ४५ ॥

ऋषिब्रह्मग्रहब्रह्मवत्सरे विजयी महान्।
चम्पारण्ये महायुद्धं सत्याग्रहमथातनोत् ॥ ४६ ॥

महान् विजयी महात्माजीने १९१७ ई० में चम्पारन (विहार)में महान् सत्याग्रहयुद्ध छेड़ दिया ॥ ४६ ॥

तिथौ सप्तदशेप्रैलमासस्यारब्ध तं रणम्।
मईमासान्तिमे जातो दिने तस्य महाञ्जयः॥ ४७॥

१७ अप्रैलको अुस युद्धका अुन्होंने आरभ किया था और ३१ मअीको महान् विजय प्राप्त हुआ ॥ ४७ ॥

ऋषिब्रह्मग्रहब्रह्ममिते संवत्सरे तिथौ।
षोडश्यां जूनमासस्य साभ्रमत्यामुवास सः॥ ४८॥

१६-६-१९१७ अी० को महात्माजी साबरमतीमें रहने लगे। कोचरबका आश्रम साबरमतीमें गया ॥ ४८ ॥

नगरेहमदाबादे वत्सरे च ततः परे।
वस्त्रयन्त्रीयश्रमिणां यतिर्युद्धमजीजयत् ॥ ४९ ॥

सन् १९१८में अहमदाबादके मिलके मजदूरोंको युद्धमें विजय दिलाया ॥ ४९ ॥

खेडासत्याग्रहे प्राप्य विजयं परमोज्ज्वलम्।
सूत्रचक्रसमुद्धारं वर्षेस्मिन्नेव सोकरोत् ॥ ५० ॥

अिसी वर्ज खेड़ाके सत्याग्रहमें ज्वलन्त विजय प्राप्त करके चरखेका अुद्धार किया ॥ ५० ॥

ग्रहब्रह्मग्रहब्रह्ममिते संवत्सरे यतिः ।
षष्ठ्यामप्रैलमासस्य दुःखलज्जाननताननः ॥ ५१ ॥
राउलेटविधानस्य सुस्पष्टं भङ्गमाचरत् ।
नवजीवनपत्रस्य समारेभे प्रकाशनम् ॥ ५२ ॥

बहुत दुःख और लज्जाके साथ सन् १९१९ ओ०के अप्रैल मासकी चौथी तारीखको उन्होंने रौलेट ऐक्टका खुल्लमखुल्ला भंग किया। अिसी वर्ष नवजीवन साप्ताहिक पत्रका आरम्भ किया ॥ ५१।५२ ॥

खनयनग्रहब्रह्मवत्सरगस्तमासि च ।
राष्ट्रसंसद्विधानानि परिवर्त्य ह्यमानयत् ॥५३॥

अगस्त १९२० ओ० में अखिल भारत राष्ट्रिय महासभाके नियमों को बदलकर स्वीकृत कराया ॥ ५३ ॥

विच्छेदः सहयोगस्य शासनेन प्रचारितः ।
राष्ट्रियविद्यापीठानां स्थापनं यतिना कृतम् ॥५४॥

अिसी वर्ष सरकारके साथ असहयोगका प्रचार किया और राष्ट्रिय विद्यापीठोंकी स्थापना की। ॥ ५४ ॥

नेत्रनेत्रग्रहब्रह्ममिते संवत्सरेशुभे ।
पञ्चम्यां च द्वितीयस्मिन् मासे समजायत ॥५५॥
चौरीचौराभिधे ग्रामे शासनप्रजयोर्महान् ।
दुःसहः कलिरेतस्मात्सत्याग्रहमवारुणत् ॥५६॥

ता० ५-२-१९२२ ओ० को चौरीचौरा गांवमें सरकार और प्रजामें असह्य युद्ध होनेके कारण सत्याग्रहको अुन्होंने बन्द रखा॥ ५५।५६ ॥

देशे सर्वत्र संजातं शासनं दुर्व्यवस्थितम् ।
पञ्जाबे च महान्याय्यमाचरच्छासनं तदा ॥५७॥

देशमें सर्वत्र शासन अव्यवस्थित अथवा दुर्व्यवस्थित हो गया। सरकारने पजाबमें बड़ा भारी अन्याय किया ॥ ५७ ॥

तत्र शान्त्यै व्रजन्मार्गे मार्चस्य दशमे तिथौ ।
निगृहीतस्तथा षड्भिर्वर्षैः कारां प्रवेशितः ॥५८॥

पजाबमें शांति स्थापनके लिये जाते हुअे महात्माजी मार्चकी १०वीं तारीखको पकड़ लिये गये और ६ वर्षका कारावास दण्ड अुन्हें दिया गया ॥ ५८ ॥

वेदनेत्रग्रहब्रह्मवत्सरे पञ्चमीतिथौ ।
फेब्रुवर्यां भवन्रुग्णः करामुक्तोभवद्यतिः ॥ ५९ ॥

ता० ५-२-१९२४ ओ०में महात्माजी बीमार पड़े और जेलसे छोड़ दिये गये ॥ ५९ ॥

बाणनेत्रग्रहब्रह्ममिते संवत्सरेभवत् ।
हिन्दुमुस्लिमसत्प्रेमशैथिल्यं भाग्यदोषतः ॥ ६० ॥

सन् १९२५में हिन्दुओं और मुसलमानोंमें भाग्यदोषसे प्रेम कम हो गया — अनबनाव हो गया ॥ ६० ॥

एकविंशति दिवसानुपवासान्महेश्वरः ।
प्रेमसंस्थापनार्थाय द्वयोर्जात्योः समाचरत् ॥ ६१ ॥

दोनों जातियोंमें प्रेम-स्थापनके लिये महात्माजीने २१ दिन तक उपवास किया ॥ ६१ ॥

चर्खासंघं च महता यत्नेन समतिष्ठिपत् ।
विदेशिवाससां देशाद्बहिष्कारमकारयत् ॥ ६२ ॥

बड़े परिश्रमसे अुन्होंने चरखा-संघकी स्थापना की। देशमेंसे विदेशीय वस्त्रोंका बहिष्कार कराया ॥ ६२ ॥

ऋषिनेत्रग्रहब्रह्ममिते संवत्सरेकरोत् ।
खादीवस्त्रप्रचाराय भारते भ्रमणं यतिः ॥ ६३ ॥

१९२७ ई०में खादी प्रचारके लिये भारतमें भ्रमण किया ॥ ६३ ॥

ग्रहेनेत्रग्रहब्रह्ममिते तेन च वत्सरे ।
लाहोरनगरे पूर्णस्वातन्त्र्यं हि समर्थितम् ॥ ६४ ॥

१९२९में लाहोर कांग्रसमें पूर्ण स्वतंत्रताका समर्थन किया ।। ६४ ।।

**नभःकालग्रहब्रह्ममिते संवत्सरे यतिः ।**
**षड्विंशे च तिथौ मासे प्रथमे प्रथमान्वयः । ।। ६५ ।।**

**सर्वैर्भारतभूपुत्रैः पूर्णस्वातन्त्र्यहेतवे ।**
**महतीमकारयद्देवः प्रतिज्ञां सर्वशंकरीम् ।। ६६ ।।**

१९३० औ० में जनवरीकी २६ तारीखको पूर्णस्वतंत्रताके लिये सब भारतीयोंसे अुन्होंने प्रतिज्ञा कराओ ।। ६५-६६ ।।

**तिथौ च द्वादशे मार्चमासस्य क्षारबन्धनम् ।**
**भङ्क्तुं गन्तुं तदा दाण्डीमाश्रमात्प्रस्थितो निजात् ।। ६७ ।।**

ता० १२-३-१९३०को नमक-कानून तोड़नके लिये सत्याग्रह आश्रम साबरमतीसे प्रस्थान किया ।। ६७ ।।

**अभवद्घोरसंग्रामः प्रजाशासनयोर्मिथः ।**
**यत्र तत्र ततः श्रीमान्निगृहीतः पुनर्मुनिः ।। ।। ६८ ।।**

सरकार और प्रजामें जहां तहां घोर संग्राम हुआ। अतः महात्माजी पुनः पकड़ लिये गये ।। ६८ ।।

**ब्रह्मलोकग्रहब्रह्ममिते संवत्सरे प्रभुः ।**
**मुक्तः पुनर्गतो धीमांल्लन्दनं गोलसंसदि ।। ६९ ।।**

पुनः जेलमेंसे छूटकर सन् १९३१में गोलमेज परिषदमें सम्मिलित होनके लिये लंदन गये ।। ६९ ।।

**भारतस्य मुखं भूत्वा सर्वतन्त्रस्वतन्त्रताम् ।**
**गृहीत्वा भाषणैः स्वस्याकृत मूढं सदोगृहम् ।। ७० ।।**

भारतवर्षका मुख बनकर और सब-कुछ करने-कहनेकी पूर्णस्वतंत्रता लेकर वहां अपने भाषणसे सभागृहको मूढ बना दिया ।। ७० ।।

**ततो निवृत्त एवासौ मुम्बापुर्यां न्यगृह्यत ।**
**सपद्येव परं श्रीमान्मुक्तः कारागृहादृषिः ॥ ७१ ॥**

वहांसे — लण्डनसे लौटते ही पुनः वह बम्बअीमें पकड़ लिये गये। परन्तु शीघ्र ही जेलसे छोड़ दिये गये ॥ ७१ ॥

**चतुर्थे मार्चमासस्य तिथौ गान्धीर्विनोर्महत् ।**
**सन्धिपत्रं महामूल्यमभवल्लिखितं तदा ॥ ७२ ॥**

असी साल ता० ४ मार्चको गांधी-अिर्विन सन्धिपत्र लिखा गया ॥ ७२ ॥

**नेत्रलोकग्रहब्रह्ममितेब्दे पुनरीश्वरः ।**
**सत्याग्रहं महायुद्धमारभतात्र भूभुजा ॥ ७३ ॥**

सन् १९३२ अी० में पुनः श्री महात्माजीने सरकारके साथ सत्याग्रहयुद्धका आरंभ किया ॥ ७३ ॥

**निगृहीतः पुनर्दीनबन्धुः सर्वाश्रयो महान्**
**यरोडाबन्धनगृहे स्थापितः शासनेन सः ॥ ७४ ॥**

सबके महान् आश्रय वह दीनबन्धु पुनः पकड़े गये और यरवदा जेलमें रखे गये ॥ ७४ ॥

**हिन्दुजातेः पृथक्कर्तुमन्त्यजान्हिन्दुजातिजान् ।**
**सितशासनमित्राणां प्रयत्नः समभूत्फली ॥ ७५ ॥**

हिंदुजातिसे अन्त्यजोंको — जो कि हिन्दू ही हैं — अलग करनेके लिये अंग्रेजी राज्यके मित्रोंका प्रयत्न सफल हुआ ॥ ७५ ॥

**तद्विरोधाय वन्द्योऽङ्घ्रिरुपवासान्स आ मृतेः ।**
**सद्यः प्रारभत श्रीमांस्तस्मिन्सद्मनि वन्दिनाम् ॥ ७६ ॥**

अुसका विरोध करनेके लिये पूज्यचरण श्री महात्माजीने यरवदा जेलमें ही आमरणान्त अुपवासका आरंभ किया ॥ ७६ ॥

**मासे सितम्बरे विंशे तिथावनशनं महत् ।**
**समारब्धं च षड्विंशे समाप्तिमगमच्छुभम् ॥ ७७ ॥**

ता० २०-९ को अुपवासका आरंभ हुआ था और ता० २६को अुसका सुखद अन्त हो गया ॥ ७७ ॥

**लोकलोकग्रहब्रह्ममितेब्दे पुनरेव सः ।**
**सत्याग्रहमहायुद्धं समारभत विश्वदृक् ॥ ७८ ॥**

सन् १९३३ अी० में पुनः सर्वद्रष्टा महात्माजीने सत्याग्रहयुद्धका प्रारंभ किया ॥ ७८ ॥

**निग्रहश्च पुनस्तस्य पुनर्मुक्तिः पुनर्ग्रहः ।**
**एवं पुनः पुनश्चक्रमचलच्छत्रुचालितम् ॥ ७९ ॥**

पुनः निग्रह, पुनः मोक्ष, पुनः निग्रह, पुनः मोक्ष इस प्रकारसे शत्रुका चलाया हुआ चक्र चलता रहा ॥ ७९ ॥

**वेदकालग्रहब्रह्ममिते संवत्सरे कृता ।**
**ग्रामोद्योगीयसंघस्य स्थापना देशशंकृते ॥ ८० ॥**

सन् १९३४ ई० में अुन्होंने ग्रामोद्योग संघकी स्थापना देशहितके लिये की ॥ ८० ॥

**षड्गुणग्रहसर्वात्मवत्सरेकृत सद्यतिः ।**
**सेवाग्रामाश्रमं पुण्यं सर्वदुःखविनाशनम् ॥ ८१ ॥**

सन् १९३६ अी०में महात्माजीने सेवाग्राम-आश्रमको स्थापित किया ॥ ८१ ॥

**ऋषिकालग्रहब्रह्ममितेब्द स्वाश्रमे सुधीः ।**
**विद्यानवक्रमारम्भं कृतवान्कृतिनां वरः ॥ ८२ ॥**

सन् १९३७में अी० में महात्माजीने नवीन शिक्षापद्धतिका आरंभ किया ॥ ८२ ॥

**श्रीराष्ट्रियसभाहस्ते शासनं भारतस्य तत् ।**
**आंशिकं प्राप्तमेतेन देशेभूच्छान्तिरांशिकी ॥ ८३ ॥**

अुसी साल कांग्रेसके अधिकारमें भारतका आंशिक शासन आया। अिससे देशमें आंशिक शांति हुअी ॥ ८३ ॥

**ग्रहकालग्रहब्रह्ममिते संवत्सरेकरोत् ।**
**राजकोटमहीपालो भङ्गो वचस आत्मनः ॥ ८४ ॥**

सन् १९३९अी० में राजकोट नरेशने अपना वचनभंग किया ॥८४

**कुपथे चरतस्तस्य वारणाय प्रयत्नवान् ।**
**आ मृतेरुपवासेषु संतस्थे श्रीयतीश्वर : ॥ ८५ ॥**

कुमार्गमें जाते हुअे अुस राजाको रोकनेके लिये प्रयत्न करनेवाले महात्माजी आमरणान्त अुपवासमें बैठ गये ।। ८५ ॥

**राजा समन्त्रिकः स्वस्य दोषं तं ज्ञातवांस्तदा ।**
**उपवासक्रमं त्यक्त्वा यतीशस्त्रिपुरां गतः ॥ ८६ ॥**

राजा और राजाके दीवानने भी अुस दोषको पहचान लिया। तब महात्माजी अुपवास छोड़कर त्रिपुरा कांग्रेसके अधिवेशनमें चले गये ॥ ८६ ॥

**सितेम्बरे तृतीयायां पुनर्युद्धमजूघुषत् ।**
**श्रीराष्ट्रियसभाशिष्टि सर्वत्रैव समापयत् ॥ ८७ ॥**

सितम्बरकी तीसरी तारीखको फिर अुन्होंने युद्धकी घोषणा की और कांग्रेस सरकारोंका कामकाज बन्द करा दिया ॥ ८७ ॥

**नभोवेदग्रहब्रह्ममिते वैयक्तिकोब्दके ।**
**सत्याग्रहः समारब्धः श्रीविनोबाग्रणीरभूत् ॥ ८८ ॥**

सन् १९४०में पुनः अुन्होंने वैयक्तिक सत्याग्रहका आरंभ किया। श्री विनोबाजी अुसके प्रथम सत्याग्रही चुने गये थे ॥ ८८ ॥

**ब्रह्मवेदग्रहब्रह्ममितेब्दे राष्ट्रसंसद : ॥**
**पृथग्भूय स्थितोकस्मात्त्यागभूभूमिराड् यतिः ॥ ८९ ॥**

सन् १९४१में वह काग्रेससे अकस्मात् अलग हो गये ॥ ८९ ॥

**नेत्रवेदग्रहब्रह्ममितेब्दे पुनरग्रहीत् ।**
**शासनं राष्ट्रसदसो देशरक्षापरायणः ॥ ९० ॥**

सन् १९४२में पुनः कांग्रेसकी बागडोर अपने हाथमें अुन्होंने ले ली ॥ ९० ॥

**अष्टम्यामष्टमे मासे भारतत्यागघोषणाम् ।**
**सितशासनकर्णेषु हठात्प्रावेशयद्यतिः ॥ ९१ ॥**

८ अगस्तको अंग्रेजी राज्यके कानोंमें जबरदस्तीसे भारत छोड़ देनेकी घोषणाको घुसा दी ॥ ९१ ॥

**नवम्यामग्रहीद्श्वेतराजस्तं नेतृभिः सह ।**
**आगाखानीयप्रासादे स्थापितः पुण्यपत्तने ॥ ९२ ॥**

९वीं तारीखको सब नेताओंके साथ वह पकड़ लिये गये और अुन्हें पूनामें आगाखांमहलमें कैद कर लिया गया ॥ ९२ ॥

**महादेवो गतः स्वर्गं तत्रैव पुरतो मुनेः ।**
**पञ्चदश्यां तिथौ तस्माच्छ्रीमानुदमनायत ॥ ९३ ॥**

वहां ही महात्माजीके सामने ही १५ वीं अगस्तको श्री महादेवभाओी देसाओी स्वर्गवासी बने। अिससे महात्माजीका मन खिन्न हो गया ॥ ९३ ॥

**वेदवेदग्रहब्रह्ममितेब्दे श्रीमहात्मनः ।**
**द्वाविंशे च फरवर्यां धर्मपत्नी दिवं गता ॥ ९४ ॥**

२२ फरवरी १९४४को महात्माजीकी धर्मपत्नी श्री कस्तूरबा परमधाम चली गयीं ॥ ९४ ॥

**मई मासस्य षष्ठ्यां स मुक्तः कारागृहात्तिथौ ।**
**ततो बहूनि कार्याणि भारतस्थोकरोदृषिः ॥ ९५ ॥**

ता० ६ मओ १९४४ को श्री महात्माजी जेलसे मुक्त हुअे। बाहर भारतमे रहकर अुन्होंने बहुत कार्य किये ॥ ९५ ॥

**मुहम्मद अली जिन्नाप्रेरिता मुस्लिमास्तदा ।**
**हिन्दूहत्यादिकार्येषु व्यापृता मूढबुद्धयः ॥ ९६ ॥**

मुहम्मदअली जिन्नाने मुसलमानोंको अुकसा दिया था अतः मूर्ख मुसलमान हिन्दुओंको मारने, लूटने, धर्मान्तर कराने, स्त्रियोंको भ्रष्ट करनेके कामर्में लग गय थे ॥ ९६ ॥

**पञ्जाबे च तथा सीमप्रान्ते पैशाचकर्मणाम् ।**
**मनःसन्तापकानां च स्मृत्या कम्पः प्रजायते ॥ ९७ ॥**

पंजाब और सीमाप्रान्त (पेशावरकी ओर) जो राक्षसी कृत्य किये गये थे अुनके स्मरणसे भी रोमांच हो जाता है ॥ ९७ ॥

**नोवाखल्यां मुसल्माना महोत्पातान्समासृजन् ।**
**शमनाय ततस्तेषां ययौ धीमान्नवाखलीम् ॥ ९८ ।**

नोआखाली (बंगाल) में मुसलमानोंने बड़ा भारी अत्याचार किया था। अुनको शांत करनके लिये बुद्धिमान् महात्माजी नोवाखली गये ॥ ९८ ॥

**ऋषिवेदग्रहब्रह्ममिते संवत्सरे प्रभुः ।**
**पद्भ्यां यात्रां समारभ्य स नोवाखलिमण्डले ॥ ९९ ॥**

सन् १९४७ में महात्माजीने नोआखाली जिलेमें पैदल नंगे पैरसे यात्रा शुरू की ॥ ९९ ॥

**विहारे च ततः पश्चाद् हिन्दूनां मन्युशान्तये ।**
**अभ्राम्यत्कृपया श्रीमानहो विश्वहितैषिता ॥ १०० ॥**

उसके पश्चात् बिहारमें क्रुद्ध बने हुए हिन्दुओंको शांत करनेके लिये उन्होंने (विहारमें) भ्रमण किया ॥ १०० ॥

साहाय्यमाधातुमसौ कुरानिनां,
दिल्ल्यां तदापत्तिविषण्णमानसः ।
वसुश्रुतिग्राहपरात्मसंमिते,
निरन्नतां स प्रविवेश वत्सरे ॥१०१॥

महात्माजीने १९४८ ई० में उपवासका आरम्भ किया ॥१०१॥

अगस्तमासस्य च पञ्चदश्यां,
यतेः प्रतापेन च मध्यरात्रे ।
दास्यादसौ देश इतो विमुक्ति,
धन्या वयं स्मः स च धन्य एव ॥१०२॥

इसी साल १५ वीं अगस्तको महात्माजीके प्रतापसे आधीरातमें यह विशाल देश मुक्त हुआ। वह तो धन्य हैं ही, हम सब भी धन्य हुए ॥ १०२ ॥

गान्धिः स्वीयगृहे निवासनिरतो ह्याराधनं श्रीगिरः,
कृत्वा लन्दनमैदधीत्य च ततो बैरिष्टरत्वं गतः ।
अफ्रीकामुपगम्य भारतभुवो जातान्स्थितांस्तत्र नॄन्,
साहाय्येन कृतार्थयन्नथ सिताञ्जित्वाययौ भारतम् ॥१०३॥

महात्मा गांधीजी अपने घरमें-राजकोटमें रहते हुए सरस्वतीकी आराधना करके अर्थात् विद्याध्ययन करके लन्दन गये। वहां पढ़कर बैरिष्टर बने। अफ्रिकामें जाकर भारतमें पैदा हुए-भारतीय लोगोंको जो वहीं रहते थे—सहायतासे कृतार्थ बनाकर, अंग्रेजोंको जीतकर भारत आये ॥ १०३ ॥

भारतदेशमुपेत्य साबरमतीतटयां वसन्नाश्रमे,
संग्रामान्बहुशः प्रवर्त्य स जयन्नार्यप्रजानामरीन् ।
हिन्दूमुस्लिमयोः सखित्वमिह सत्संस्थाप्य चोद्धार्य ता-
नस्पृश्यत्वमितान्व्यधत्त परितः सर्वाधिकारान्वितान् ॥१०४॥

महात्माजीने भारतमें आकर साबरमतीके किनारे रहते हुए, बहुत से सत्याग्रह संग्रामोंको शुरू किया और उसमें आर्यप्रजाके शत्रुओंको जीता। हिन्दू और मुसलमानोंकी सन्मैत्रीका स्थापन करके पतित हुए लोगोंका उद्धार करके सर्वाधिकारसमन्वित बना दिया ॥ १०४ ॥

देशोयं शतवर्षतोप्यधिकतः श्वेताङ्गलोकैः कृतो,
विद्याबुद्धिधनादिभिः परिभूतोप्येभिः स्वतन्त्रेतरः ।
सेवाग्रामनिवासशील ऋषिराट्छान्तो विजित्याखिलां-
स्तान्संस्थाप्य गतः स्वराज्यमतुलं लोकोत्तरेणाध्वना ॥१०५॥

इति सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वामि-
श्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे
एकविंशः सर्गः

सौ वर्षसे भी अधिक वर्षोंसे, विद्या, बुद्धि और धनस पूर्ण था तो भी इस देशको, अंग्रेजोंने पराधीन बना रखा था। सेवाग्रामके शान्त ऋषि लोकोत्तर मार्गसे कभी नहीं था —— एसे स्वराज्यकी स्थापना करके चले गये ॥ १०५ ॥

इति परमहंसपरिव्राजकस्वामिश्रीमद्भगवदाचार्यपण्डितराजप्रणीते
पारिजातसौरभे स्वोपज्ञभारतराष्ट्रभाषाटीकायाम्
एकविंशः सर्गः